# आपस्तम्बीयश्रौतप्रयोगः

## द्वितीयो भागः – उत्तरार्धः

## महाग्निचयनम्



श्रुतिशङ्करसंस्कृतसंशोधनप्रतिष्ठानम्

मत्तूरु, शिवमोग्ग

*The Mega – Agnicayanam*

**(Of the Vajasaneyins)**

The days and nights which are the parts of Prajāpati , of the form of Samvatsara (year), got dismembered; they became the bricks. By piling together these bricks the dismembered parts get reinstated in Prajāpati.

A total of 11,195 bricks (11,170 baked and 25 non-baked) are piled up. 395 of these are laid up by uttering Yajus mantras and are called Yajuśmatis. The rest 10800 are called Lokampṛṇa bricks.

The number of bricks piled up corresponds to the number of parts of the Samvatsara. 360 Yajuśmatis represent the 360 days in a year; of the balance 36 [35 Yajuśmatis plus Purīśa (loose soil) ], 24 represent the equal number of fortnights in a year; the balance 12 represent the 12 months in a year. These very 12 months when taken two together represent the six seasons. 10800 Lokampṛṇas represent the equal number of Muhurtas (360 x 30) in a year. In addition to this 360 Pariśṛits (tiny pebbles) are also piled up to represent the 360 nights in a year. Thus all the parts of the Samvatsara (year ) – days, nights, fortnights, months, seasons and muhurtas get reinstated as the Samvatsara Prajāpati by assembling together the Yajuśmatis, the Lokampṛṇas and the Pariśṛits.

*(Contd... in Rear flap)*

# आपस्तम्बीय-श्रौतप्रयोगः

## (महाग्निचयनम्)

# Āpastambīya Śrauta Prayoga

## ( Mahāgnicayanam )

# आपस्तम्बीय-श्रौतप्रयोगः

## भागः २ - उत्तरार्धः

(महाग्निचयनम्)

# Āpastambīya Śrauta Prayoga

## VOL 2 - Part - II

( Mahāgnicayanam )

सम्पादकः

ब्रह्मश्री म. रा. वेङ्कटेशः अवधानी (श्याम)

Edited by
**Brahmashri M. R. Venkatesha Avadhani (Shyama)**

श्रुति-शङ्कर-संस्कृत-संशोधन-प्रतिष्ठानम्

मत्तूरु, शिवमोग्गा (जिल्ला)

कर्नाटकराज्यम्

Āpastambīya Śrauta Prayoga Volume-2, Part -II. Procedure for performance of Mahāgnicayanam. Edited by Brahma Shri M.R. Venkatesha (Shyama) Avadhani. Published by : Shruti Shankara Samskrita Samshodhana Pratishthanam, Mattur Post, Shivamogga Dist., Karnataka, India, Pin - 577203. Phone: 08182-237724. Mob: 094488-36895 (M.R.Keshava Avadhani, President) E mail - shruthishankara@yahoo.co.in
मार्गविराम 9449925241

First Edition - 2014

Copies - 600

Pages - XVII + 597

Price - Rs. 1600/- Per set of two parts

Layout and Design : Brahmashri Raghavendra Bhatta, Shivamogga.

*Printed at :*
Ganesha Maruti Printers,
No. 76, 6th Main, III Block,
Tyagaraja Nagar,
Bangalore - 560 086
Ph - 080 - 26766342

**From the Publisher's desk ...**

Āpastambiya Śrauta Prayoga (Volume II) is brought out in two parts to facilitate easy handling. The second part of the book is presently placed before the readers. This second part contains the Prayoga (the method of performance) of the Mahāgnicayana rite. In this part is given the Prayoga in prose form for piling of thousand, two thousand and three thousand bricks. Verses known as Kārikās composed by adepts, dealing with the manner of placing of the bricks are also given in this part. Pictorial diagrams depicting the order of placing of the bricks along with the beginning of the respective mantras that have to be uttered while placing the bricks for each of the layers that are piled up are given. Separate pictorial depictions based on the Kārikas of different authors are given separately so that the followers of the different schools of Prayoga may be benefitted. A sketch showing the order in which the sacrificial ground is to be ploughed as prescribed by the Śastras is also given. Another interesting feature that finds place in this part is the explanation, in Sanskrit, of the verses on the construction of the Vedi for the Ekavidha Agni with the prescribed measurements and also the construction of the Agni (the altar). A translation of this explanation in each of the six languages (English, Hindi, Kannada, Marathi, Tamil, and Telugu) is given. Explanation of the verses on the method of construction of moulds for the different kinds of bricks that are used in the second Śyenacit is given in Sanskrit along with a free translation of the same in English. Pictorial depictions of the different kinds of bricks with the prescribed dimensions are also given. A list of different materials which are used in the rite is appended. In addition to all these which are connected directly to the Cayana rite proper, Prayogas for certain pre requisite supplementary and ancillary rites which are to be performed by the sacrificer on account of performance of the Cayana are also given in this part.

In the first part matters of general interest, are given both in Sanskrit and English. Though these matters do not have a direct bearing

on the actual performance of the Agnicayana, they nevertheless are related to the Śrauta rites in general. A long essay in English on the date, chronology etc of Āpastamba etc also finds place in the first part. A brief exposition about the Agnicayana, certain intricate points arising out of the Prayoga texts etc are included in the first part. An important aspect included in the first part is the discussion on certain pertinent critical remarks made on the first volume of Āpastambiya Śrauta Prayoga by Br Shri Subbukrishna Srowtigal, an adept in the subject and a highly learned and revered practitioner of Śrauta rites. The first part also contains pictures of certain unique materials that are used in the Cayana.

It is hoped that both the parts of this volume on the Mahāgnicayana will serve as a comprehensive guide to those who wish to perform this great vedic rite following the tradition of Maharshi Āpastamba.

Dedicating this entire volume at the feet of Bhagawan Vasudeva, the recipient as well as the master of all yajñas, we remain ever in the service of Yagñeswara.

Publishers.

# प्रस्तावना

**ओं नमो भगवते यज्ञरक्षकस्वामिने वासुदेवाय याज्ञिकेभ्यो विद्वद्भ्यश्च ।**

आपस्तम्बीयश्रौतप्रयोगस्य द्वितीयो भागः पूर्वार्ध उत्तरार्ध इति विभज्य प्रकाश्यते ग्रन्थकायगौरवात् ग्रन्थस्योत्तरार्धोऽयमधुना पठितृभ्यो निवेद्यते । उत्तरार्धेऽस्मिन्ग्रन्थे महाग्निचयनस्य कर्मण इतिकर्तव्यता-द्योतकप्रयोगः प्रस्तुतः । गद्यरूपप्रयोगेण सहेष्टकोपधानकारिका नानासम्प्रदायविद्भिः प्रणीता अपि ग्रन्थेऽस्मिन्नुपनिबद्धाः । विभिन्नकारिकानुसृतोपधानक्रमस्य चित्रपटाः प्रतिप्रस्तारं संयोजिता उपधानमन्त्रो-ल्लेखाश्च अनुष्ठातृणां सुगमार्थम् । यज्ञभूमेः कर्षणक्रमोऽपि पटेन हृदयंगमितः । द्वितीयश्येनचितेः वेदिमानाग्निमानकारिकाणां व्याख्यानं तस्य व्याख्यानस्य षड्भिर्भाषाभिरनुवादो मानकारिकानुसारिचित्रपटाश्च वेद्यग्निनिर्माणसौकर्यार्थमत्र दत्त इति विशेषः । इष्टकाकरणिकारिकाणां व्याख्यानं तस्य आङ्ग्लभाषया-नुवादश्च निवेशितोऽत्र । उपधीयमानानामिष्टकानां विभिन्नाकाराणां चित्राणि मानसाहितानि प्रदर्शितानि । अग्निचयनसम्भाराणामावलिः प्रदत्ता । एतान्त्साक्षाच्चयनविषयान्विहाय चयनकर्मण आरम्भे अन्ते च अनुष्ठेयत्वेन चोदितानां कर्मणां प्रयोगोऽप्यस्मिन्नुत्तरार्धे लब्धावकाशः ।

पूर्वार्धे तु केचन यज्ञसम्बन्धसामान्यविषयाः चिन्तिताः । न तेषां चयनकर्मानुष्ठानेन साक्षात्सम्बन्धः । महर्षेरापस्तम्बस्य कालादिविषयको विस्तृतप्रबन्धः आङ्ग्लमयः पूर्वार्धे निवेशितः । अग्निचयनस्य स्थूलरूपेण परिचयः, कारिकाणां विमर्शः, केषाञ्चन प्रयोगगतचर्चास्पदविषयाणां विमर्श इत्यादयोऽपि तत्र दत्ताः । श्रौतप्रयोगग्रन्थस्य प्रथमभागस्थविषयस्य विमर्शः समालोचनरूपः प्रख्यातश्रौतज्ञैरनुष्ठातृभिश्च ब्र.श्री. सुब्बुकृष्णश्रौतिभिः कृतः । तस्य समालोचनस्य विमर्शोऽपि पूर्वार्धे निहितः ।

श्रौतप्रयोगद्वितीयभागस्यायमुत्तरार्धो महाग्निचयनविषयक आपस्तम्बसूत्रानुसारिणाम् अग्निचयना-नुष्ठानतृणामुपयोगाय भवतीत्याशास्महे । सर्वयज्ञानां भोक्तुः प्रभोश्च भगवतो वासुदेवस्य पादारविन्दयोरिमं ग्रन्थं समर्प्य सर्वदा वयं यज्ञेश्वरस्य शुश्रूषायां निरता भवेम इति तमेव देवं सम्प्रार्थयामहे ।

**ग्रन्थप्रकाशकः**

## ॥ ग्रन्थविभागानुक्रमः ॥



## ग्रन्थशरीरम्



## अथ कारिकाः – 167

# विस्तृतविषयानुक्रमणिका

## अग्निचयनप्रयोगः –1

## अथ प्रथमा चितिः :- 36



## अग्निचयने द्वितीयप्रश्नः :- 55

## अथ द्वितीया चितिः :- 55



## अथ तृतीया चितिः :- 58



## अथ चतुर्थी चितिः :- 62



## अथ पञ्चमी चितिः :-66



## अथ सञ्चितकर्म :- 77



## वैश्वानरेष्टिः :- 89

## आन्ध्रपाठानुसारिद्विषाहस्रकारिकाः :- 335



## अथ खिलानि :- 343

## अथ पालीवतकारिकाः :- 344

## अप्तोर्यामे सङ्ग्रहकारिकाः :-346

## चतुरश्रा गार्हपत्यचितिः :- 347



## परिमण्डला गार्हपत्यचितिः :-350

## साहस्रपटाः :- 352



## अथ द्विषाहस्रपटाः :-367



## अथ त्रिषाहस्रपटाः :-421

# ABBREVATIONS

# सङ्क्षेपाक्षराणां विवरणम्

| | |
|---|---|
| **AV** | Manuscript of Andhriya Dendukuri Venkatappaiya Yajalu |
| **BM** | Manuscript of Oriental Library, Sayaji University, Baroda |
| **CH** | Manuscript of Lalchand Library, Chandigarh |
| **HTM** | Manuscript of Dendukuri Satyanarayana Somayaji, Hyderabad – Telugu Scipt |
| **KDM** | Manuscript of Krishna Dikshit |
| **KM** | Manuscript of Saraswati Bhavan, Sampurnananda University, Kashi |
| **LM** | Manuscript of Lakshmikanta Upadhyaya |
| **MM** | Manuscript of Oriental Research Institute, Mysore |
| **NM** | Manuscript of Brahmashri Mahagnicit Nana Kale |
| **RM** | Manuscript of Ramanatha Dikshitar |
| **TGM** | Manuscript of Tanjavur Saraswati Mahal – Grantha Script |
| **UM** | Manuscript of Scindia Pracya Vidya Shodha Pratishthan, Vikram University, Ujjain |

| | |
|---|---|
| आन्ध्र. प्र., आन्ध्र. प्र.पा. | आन्ध्रप्रयोगपाठः |
| आप.शु.सू. | आपस्तम्बशुल्बसूत्राणि |
| आप.श्रौ.सू. | आपस्तम्बश्रौतसूत्राणि |
| आ.श्रौ.सू | आश्वलायनश्रौतसूत्राणि |
| कात्या.श्रौ.सू | कात्यायनश्रौतसूत्राणि |
| तै.सं | तैत्तरीयसंहिता |

| | |
|---|---|
| द्रा.प्र. | द्राविडप्रयोगः |
| पाठा0. | पाठान्तरम्, पाठान्तराणि |
| बौ.श्रौ.सू | बौधायनश्रौतसूत्राणि |
| भा.परि.सू | भारद्वाजपरिशेषसूत्राणि |
| सत्या.श्रौ.सू | सत्याषाढश्रौतसूत्राणि |

# ॥ अग्निचयनप्रयोगः ॥

## अथ चयनस्य पूर्वाङ्गानि

### अग्निचयनस्य कालविधिः सङ्कल्पश्च :-

अग्निं चेष्यमाणोऽमावास्यायां पौर्णमास्यामेकाष्टकायां वोखां सम्भरति । त्र्यहादिदीक्षापक्षे उखासम्भरणप्रभृत्यामिक्षापर्यन्तानि कर्माणि, वसन्ते[१] यथा सम्भविष्यन्ति तथोपक्रमः कार्यः । एकाष्टकायां चेदुखासम्भरणं तदा तस्यामुखासम्भरणं कृत्वा पश्चिष्ट्यादि सर्वं वसन्ते कार्यम् । चतुरो मासो दीक्षित इत्यस्मिन्पक्षे एकाष्टकायां न लभ्यते । मासादि पक्षेषूखासम्भरणप्रभृति सर्वं वसन्ते कार्यं पशुश्च यथा भवति । एवं स्मृत्वा आरम्भः कार्यः ॥

अथाग्निप्रयोग उच्यते । वसन्ते पर्वणोरेकाष्टकायां वा प्रातरग्निहोत्रं हुत्वा दर्भेष्वासीनो दर्भान् धारयमाणः पत्न्या सह प्राणानायम्य सङ्कल्पं करोति । श्री परमेश्वरप्रीत्यर्थं ज्योतिषा त्रिकद्रुकेणाग्निष्टोमेन साग्निचित्येन रथन्तरसाम्ना द्वादशशतदक्षिणेन यक्ष्ये, तेन परमेश्वरं प्रीणयानि । अप्तोर्यामश्चेत्- सोमेन यक्ष्ये अप्तोर्यामेणातिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन साग्निचित्येन सहस्रदक्षिणेन तेन परमेश्वरं प्रीणयानि[२] इति विशेषः । सहस्रदक्षिणापक्षे सङ्कल्प्य त्रैधातवीया[३]।

[अग्निं चेष्यमाणो वसन्ते पौर्णमास्याममावस्यां वा प्रातरग्निहोत्रं हुत्वा संकल्पं करोति ।

आगूश्चैत्र्याममायां चेत् साग्निचित्यक्रतोर्भवेत् ।
आमिक्षान्तानि शुक्ले स्युः पर्वतुल्यो हि स स्मृतः ॥
सक्षेदान्त उखा घर्मसम्भृतिर्वायवे पशुः ।
पौर्णमास्यां तु सुत्ये स्यात् षष्ठ्यामागूः क्रतोर्भवेत् ॥
दीक्षोपसत्त्रिषट् चैव सुत्यैका दशसङ्ख्यकम् ।

---

१. पर्वण्युखासम्भरणपक्षे ।

२. सोमेन यक्ष्ये अतिरात्रसर्वपृष्ठाप्तोर्यामेन साग्निचित्येन सर्वस्तोमेन सहस्रदक्षिणेन तेन परमेश्वरं प्रीणयानि इति पाठान्तरम् । सोमेन यक्ष्ये ज्योतिष्टोमेनातिरात्रेण साग्निचित्येन रथन्तरसाम्ना द्वादशशतदक्षिणेन तेन परमेश्वरं प्रीणयानि इति ज्योतिरतिरात्रेऽपि क्वचित् चयनं विहितम् ।

३. त्रैधातवीयेष्टिप्रयोगार्थं ११९ पृष्ठं पश्यन्तु । 'त्रिकद्रुकेण उक्थ्येन यक्ष्यमाणश्चेत् सहस्रदक्षिणा नियता बृहत्पृष्ठश्च कर्तव्यः । श्यैते हि सहस्रमनूद्यते सहस्रेणैव शिक्षतीति । नह्यसन्नर्थो अनूद्यते । सन्नेव उच्यते' इति कपर्दिभाष्यम् । सहस्रदक्षिणे सोमे विद्युत्त्रैधातवीयका । ततस्सोमप्रवाकस्य वरणादि च सौमिकम्- इत्यपि प्रयोगक्रमः विद्यते ॥

सोमेन यक्ष्ये ज्योतिष्टोमेनातिरात्रेण साग्निचित्येन रथन्तरसाम्ना द्वादशशतदक्षिणेन तेन परमेश्वरं प्रीणयानि । विद्युदसि । सोमप्रवाकवरणादि सक्षेदान्ते । इति आन्ध्रप्रयोगपाठः ।]

**उपक्रमः :-**

तां समाप्य **विद्युत्** । ततः सोमप्रवाकवरणम् । मधुपर्कादिभिरभ्यर्च्य ***सोमप्रवाक सोमं म*** इत्यादि ऋत्विग्वरणम् । ***कच्चिन्नाहीनः*** इति पृष्टे ***नाहीनस्त्रिकद्रुको ज्योतिरग्निष्टोमः*** । शेषं प्रकृतिवत् । अप्तोर्यामपक्षे – ***नाहीनस्सर्वपृष्ठसर्वस्तोमोऽप्तोर्यामस्सोमः । कच्चित्कल्याण्यो दक्षिणा*** इति पृष्टे ***सन्ति कल्याण्यो दक्षिणास्सुरूपा बहुमूल्यास्सहस्रं गावः*** । सक्षेदान्तं कृत्वा । अग्निं विहृत्य जुह्वां चतुर्गृहीतं गृहीत्वा ***बृहस्पतिपुरोहिता देवा देवानां देवा देवाः प्रथमजा देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशा***[४] ***अनु व आरभ इदꣳ शकेयं यदिदं करोमि ते मावत ते माजिन्वतास्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याꣳ स्वाहा*** आहवनीये जुहोति । देवेभ्य इदम् । तूष्णीं जुहूं स्रुवं च सम्मृज्य ।

**सावित्रहोमः :-**

जुह्वामष्टगृहीतं चतुर्गृहीतं वा गृहीत्वा[५] **युञ्जानः प्रथमं मनस्तत्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ युक्त्वाय मनसा देवान्थ्सुवर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतस्सविता प्रसुवाति तान् ॥ युक्तेन मनसा वयं देवस्य सवितुस्सवे । सुवर्गेयाय शक्त्यै ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोका यन्ति पथ्येव सूराः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः । यः पार्थिवानि विममे स एतशो रजाꣳसि देवस्सविता महित्वना ॥ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः । केतपूः केतं नः**

---

४. त्रिस्त्रयस्त्रिꣳशाः इति पाठान्तरे वाक्यावसानम् ।

५. सूत्रकारेण अष्टगृहीतमेव उक्तम् । चतुर्गृहीतेन जुहोतीति तैत्तिरीये विहितत्वात्, चतुर्गृहीतेन वा इति कपर्दिभाष्ये च उक्तत्वात् ।

**पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः ॥ इमं नो देवसवितर्यज्ञं प्रसुव देवायुव॑ सखिविद॑ सत्राजितं धनजित॑ सुवर्जित॑ स्वाहा** यजुरष्टमाभिः ऋग्भिरेकामाहुतिं जुहोत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् । सवित्र इदम् । अपरं चतुर्गृहीतं गृहीत्वा । **ऋचास्तोम॑ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि स्वाहा ।** बृहत इदम्[६] । एतदादि विपाजसेत्यन्तमग्निधारणम् ।

## अभ्र्यादानम् :-

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाददेऽङ्गिरस्वदभ्रिरसि नारिरसि पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन त्वा छन्दसाददेऽङ्गिरस्वद्बभ्रिरसि नारिरसि त्वया वय॑ सधस्थ आग्नि॑ शकेम खनितुं पुरीष्यं जागतेन त्वा छन्दसाददेऽङ्गिरस्वद्धस्त आधाय सविता बिभ्रदभ्रि॑ हिरण्ययीम् । तया ज्योतिरजस्रमिदग्निं खात्वी न आ भरानुष्टुभेन त्वा छन्दसाददेऽङ्गिरस्वत्** चतुर्भिरभ्रिमादत्ते वैणवीं कल्माषीं सुषिरामसुषिरां वोभयतःक्ष्णूमन्यतरतःक्ष्णूं वा प्रादेशमात्रीमरत्निमात्रीं व्यायाममात्रीमपरिमितां वा खादिरीं पालाशीमौदुम्बरीमर्कमयीं कार्श्मर्यमयीं वैकङ्कतीं शमीमयीं वा यो वा यज्ञियो वृक्षः फलग्रहिः ।

## उखार्थं मृदाहरणाय गमनम् :-

**इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवास्सुतमा बभूवुरृतस्य सामन्थ्सरमारपन्ती** अश्वाभिधानीं रशनामादाय । **प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् । दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः** अश्वमभिदधाति । तूष्णीं गर्दभरशनामादाय । **युञ्जाथा॑ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम्** गर्दभमभिदधाति । स्नानेन शुद्धिः गर्दभस्य । **योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि । उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन् । पूष्णा सयुजा सह । पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहि** कृष्णाजिनं पुष्करपर्णं कमण्डलुं मौञ्जीं रज्जुं स्रुवं जुहूं आज्यं हिरण्यं चादाय तिसृभिरश्वप्रथमा अध्वर्युब्रह्मयजमाना[७] अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तस्स्युः । ***अग्निं***

---

६. अग्नय इदमिति पाठान्तरम् ।

७. अश्वः प्रथमः तदनु गर्दभः तदनु अध्वर्यवादयः इत्यर्थः ।

***पुरीष्यमङ्गिरस्वदच्छेहि*** गच्छन्नध्वर्युर्जपति । **अग्निं पुरीष्यमङ्गिरस्वदच्छेमः पाप्मानम्** येन द्वेष्येण सङ्गच्छते तमभिमन्त्रयते । अपश्यन्निर्दिशति । **अग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः** वल्मीकवपां या सूर्यस्योदेतोस्तां तूष्णीमुद्धत्य अप उपस्पृश्य मन्त्रेणोपतिष्ठते[८] ।

**मृत्खनस्य अश्वेनाक्रमणम् :–**

**अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततान** वल्मीकवपायाः प्रक्रामति । **आगत्य वाज्यध्वनस्सर्वा मृधो विधूनुते । अग्नि॰ सधस्थे महति चक्षुषा नि चिकीषते ॥ आक्रम्य वाजिन्पृथिवी–मग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयं** द्वाभ्यां मृत्खनं अश्वस्य दक्षिणपूर्वेण पदेनाक्रमय्य । **द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्ष॰ समुद्रस्ते योनिः । विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः** अश्वस्य पृष्ठं संमार्ष्टि[९] । **अभितिष्ठ पृतन्यतोऽधरे सन्तु शत्रवः । इन्द्र इव वृत्रहा तिष्ठापः क्षेत्राणि सञ्जयन्न*भिष्ठितोऽसि पाप्मानम्*[१०]** यं द्वेष्टि तमधस्पदमश्वस्य मनसा ध्यायति । **उत्क्राम महते सौभगायास्मादास्थानाद्–द्रविणोदा वाजिन् । वय॰ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः ॥ उदक्रमीद् द्रविणोदा वाज्यर्वाकस्स लोक॰ सुकृतं पृथिव्याः । ततः खनेम सुप्रतीकमग्नि॰ सुवो रुहाणा अधि नाक उत्तमे** द्वाभ्यां मृत्खनादुदञ्चमश्वमुत्क्रमय्य । **अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासा॰ स्थानादुज्जिहतामोषधयः सुपिप्पलाः** अश्वस्य पदेऽप उपसृज्य ।

**मनस्वतीहोमः –**

पदे हिरण्यं निधाय जुह्वां चतुर्गृहीतं गृहीत्वा[११]। **जिघर्म्यग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्न॰ रभसं विदानम् ॥ आ त्वा**

---

८. या सूर्यस्योदेतोस्तां वल्मीकवपां तूष्णीमुद्धत्याप उपस्पृश्य अग्निं पुरीष्यं ...... वल्मीकवपामुपतिष्ठते इति पाठान्तरम् ।

९. सम्मार्ष्टि सर्वतः स्पृशति ।

१०. *अभितिष्ठितोऽसि पाप्मानम्* इति पाठान्तरम् ।

११. सकृद्गृहीतं गृहीत्वा इति पाठान्तरम् ।

**जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व । मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणस्स्वाहा ।** अग्नय इदम् । मनस्वतीभ्यामेकामाहुतिं हिरण्ये हुत्वा । अपादाय हिरण्यम् ।

## परिलेखनम् :-

**परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपते जायसे शुचिः** तिसृभिरभ्रिया मृत्खनं प्रत्यृचं परिलिखति बाह्यां बाह्यां वर्षीयसीम् । अप उपस्पृश्य।

## मृदां सम्भरणम् :-

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्यास्सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत्खनामि ॥ ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम् । शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्यास्सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत्खनामि** द्वाभ्यां खनति । अप उपस्पृश्य । **अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठम् । वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व** पुष्करपर्णमाहृत्य । **अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठम् । वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व** एतयैव विवेष्ट्य । **शर्म च स्थो वर्म च स्थो अच्छिद्रे बहुले उभे । व्यचस्वती संवसाथां भर्तमग्निं पुरीष्यम् ॥ संवसाथाꣳ सुवर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्** द्वाभ्यामुत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति । उपरिष्टात्पुष्करपर्णमुत्तानम् ।

**पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने** मृत्खनमभिमन्त्र्य । तूष्णीं मृदमादाय । **पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् ॥ तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् ।**

---

१२. त्वामग्ने --- वाघतः ॥ तमु त्वा --- पुरन्दरम् ॥ तमु त्वा --- रणेरणे ॥ इति तिसृभिः सम्भरणपक्षे ।

**धनञ्जयꣳ रणेरणे** कृष्णाजिने पुष्करपर्णे च सम्भरति चतसृभिस्तिसृभिर्वा गायत्रीभिर्ब्राह्मणस्य[१२]। यं कामयेत वसीयान् स्यादित्युभयीभिस्तस्य सम्भरेत् । अष्टाभिस्सम्भरति[१३]। **जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु । दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान्** सम्भृतां मृदमभिमृश्य । अन्यया मृदा मृत्खनं संलोभ्य[१४] **सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टम् । देवानां यश्चरति प्राणथेन तस्मै च देवि वडस्तु तुभ्यम्**[१५] मृत्खनेऽप आनीय[१६] समुद्यम्य कृष्णाजिनस्यान्तान् । **सुजातो ज्योतिषा सह शर्म वरूथमासदस्सुवः । वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसो** क्षौमेण मौञ्जेनार्कमयेण वा दाम्नोपनह्यति ।

## सम्भृतमृदो हरणम् :-

तूष्णीं मृदमादाय । **उदु तिष्ठ स्वध्वरावा नो देव्या कृपा । दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे** सावित्रीभ्यामुत्तिष्ठति । **स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रश्शिशुः परितमाꣳस्यक्तः प्रमातृभ्यो अधि कनिक्रदद्गाः** हरति गर्दभसमीपम् । **स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः** गर्दभस्य पृष्ठ आदधाति । **शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभिशूशुचो मान्तरिक्षं मा वनस्पतीन्** आहितमभिमन्त्रयते । **प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥ रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः ॥ वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम् । अग्न आ याहि वीतय**

---

१३. पुरीष्योऽसि --- अग्ने ॥ त्वामग्ने --- वाघतः ॥ तमु त्वा --- पुरन्दरम् ॥ तमु त्वा --- रणेरणे ॥ सीद होतः --- वयोधाः ॥ नि होता --- अग्निः ॥ सꣳ सीदस्व --- दर्शतम् ॥ जनिष्वा हि --- यजीयान् ॥ इत्यष्टाभिः सम्भरणपक्षे ।

१४. संलोभनमिति, यथाऽवटमिति न ज्ञायते तथा मृदन्तरेणाभिपूरणम् ।

१५. वडस्तु तुभ्यम् इति नित्येऽग्नौ । वषडस्तु तुभ्यं इति काम्येऽग्नौ ।

१६. उखार्थे मृत्खनप्रदेशे भूमावपोऽवनयेत् ।

**ऋत९ँ सत्यम्** अध्वर्युब्रह्मयजमानाः तिसृभिरत्वरमाणा अश्वप्रथमाः प्रत्यायन्ति । **अग्निं पुरीष्यमङ्गिरस्वद्भरामः पाप्मानम्** येन द्वेष्येण सङ्गच्छते तमभिमन्त्रयतेऽपश्यन्निर्दिशति । उत्तरेण विहारं परिश्रिते । **ओषधयः प्रतिगृह्णीताग्निमेत९ँ शिवमायन्तमभ्यत्र युष्मान् । व्यस्यन् विश्वा अमतीररातीर्निषीदन्नो अप दुर्मति९ँ हनत् ॥ ओषधयः प्रतिमोदध्वमेनं पुष्पावतीस्सुपिप्पलाः । अयं वो गर्भ ऋत्वियः प्रत्न९ँ सधस्थमासदत्** द्वाभ्यामोषधीषु पुष्पवतीषु फलवतीषु उपावहरति बद्धामेव मृदम् । आहवनीयाग्निं परित्यज्य[१७] ।

**उखार्थं मृदः कल्पनम् :–**

**वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः । सुशर्मणो बृहतश्शर्मणि स्यामग्नेरह९ँ सुहवस्य प्रणीतौ** दामबन्धं विस्रस्य । **आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः** तिसृभिरप उपसृज्य । **मित्रस्स९ँसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमग्निं वैश्वानरं विभुम् ॥ अयक्ष्माय त्वा स९ँ सृजामि प्रजाभ्यः । विश्वे त्वा देवा वैश्वानरास्स९ँसृजन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत्** द्वाभ्यां संसर्जनीयैः संसृजत्यर्मकपालैः पिष्टैर्वेणवङ्गारैर्व्रीहितुषैः पलाशकषायेण शर्कराभिः पिष्टाभिः कृष्णाजिनलोमभिरजलोमभिरिति । यच्चान्यद्दृढार्थमुपार्धं मन्यते ।

**उखाकरणम् :–**

अथ यजमानः । **रुद्राः सम्भृत्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते** मृदं संक्षिप्य । **स९ँसृष्टां वसुभीरुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु ताम् ॥ सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदितेमह ओखां दधातु हस्तयोः ॥ उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ** तिसृभिः कर्त्रे अध्वर्यवे प्रयच्छति । बहुभार्यश्चेन्महिष्यै । **मखस्य शिरोऽसि** पिण्डं कृत्वा । **यज्ञस्य पदे स्थः**

---

१७. आच्छून्दनान्तमाहवनीयस्य धारणमित्युपदेशः इति T G M पाठः ।

कृष्णाजिनं पुष्करपर्णं च युगपदभिमृशति । मृदि वाङ्गुष्ठाभ्यां निगृह्णाति । **वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वत् पृथिव्यसि ध्रुवासि धारया मयि प्रजा᳚ रायस्पोषं गौपत्य᳚ सुवीर्य᳚ सजातान् यजमानाय । रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदन्तरिक्षमसि ध्रुवासि धारया मयि प्रजा᳚ रायस्पोषं गौपत्य᳚सुवीर्य᳚ सजातान् यजमानाय । आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वत् द्यौरसि ध्रुवासि धारया मयि प्रजा᳚ रायस्पोषं गौपत्य᳚सुवीर्य᳚ सजातान् यजमानाय । विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद्दिशोऽसि ध्रुवासि धारया मयि प्रजा᳚ रायस्पोषं गौपत्य᳚ सुवीर्य᳚ सजातान् यजमानाय ।** चतुर्भिर्महिष्युखां करोति बहुभार्यस्य । अध्वर्युरेक-भार्यस्य । क्रियमाणमेतैरेव मन्त्रैर्यजमानोऽनुमन्त्रयते । त्र्युद्धिं पञ्चोद्धिमपरिमितोद्धिं वा । चतुरश्रां परिमण्डलां वा । प्रादेशमात्रीमूर्ध्वप्रमाणेन, अरत्निमात्रीं तिर्यक्प्रमाणेन, व्यायाममात्रीं समन्तपरिमाणेन । अपरिमितां वा । कुर्वंश्चतस्रोऽश्रीः प्रतिदिशमुन्नयति, अष्टाश्रिं वा । नवाश्रिमभिचरतः कुर्यात् । द्व्यङ्गुले बिलादधस्तात्* । **अदित्यै रास्नासि** उपबिलं रास्नां करोति । अश्रीणां रास्नायाश्च सन्धौ द्वौ चतुरः षडष्टौ वा स्तनान् करोति । **अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसाङ्गिरस्वत्** बिलं कृत्वा । **कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । तां पुत्रेभ्यः सं प्रायच्छददितिः श्रपयानिति** उत्तरतस्सिकतासु प्रतिष्ठाप्य । ***मित्रैतां त उखां परिददाम्यभित्या एषा मा भेदि*** मित्राय रक्षणार्थं परिददाति । य उखां करोति सोऽषाढां एतस्या एव मृदस्तूष्णीं चतुरश्रां त्र्यालिखितामिष्टकां करोति[१८] । श्येनादौ तदनुगुणाम् ।

## उखाया धूपनम् :-

गार्हपत्यादग्निमाहृत्य अश्वशकृत्प्रदीप्य । **वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्, रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत्,आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वत्, विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत्, इन्द्रस्त्वा धूपयत्वङ्गिरस्वत्, विष्णुस्त्वा धूपयत्वङ्गिरस्वत्, वरुणस्त्वा धूपयत्वङ्गि-**

---

* अश्रीः कुर्यादित्यर्थः ।

१८. चतरश्रेऽग्नौ अषाढा चतुरश्रा भवति । अन्यासु चितिषु तत्तदनुगुणाकारा भवति । त्र्यालिखिता तु सर्वत्र भवेदेव ।

**रस्वत्** सप्तभिरश्वशकेनोखां धूपयति । अग्निं परित्यज्य ।

## लोहितपचनीयैरुखायाः पचनम् :–

**अदितिस्त्वा देवी विश्वदेव्यावती पृथिव्यास्सधस्थेऽङ्गिरस्वत्खनत्ववट** अग्रेण गार्हपत्यमवटं खात्वा । (अप उपस्पृश्य) लोहितपचनीयै[१९]स्सम्भारैरवस्तीर्य । **देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थेऽङ्गिरस्वद्दधतूखे** तस्मिन्नुखामवदधाति । तूष्णीमषाढामन्ववधाय । लोहितपचनीयैस्सम्भारैः प्रच्छाद्य गार्हपत्यादग्निमाहृत्य । **धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थेऽङ्गिरस्वदभीन्धतामुखे, ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे, वरूत्रयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थेऽङ्गिरस्वत्पचन्तूखे, जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थेऽङ्गिरस्वत्पचन्तूखे** चतुर्भिरुखायामग्निमभ्यादधाति । **मित्रैतामुखां पचैषा मा भेदि । एतां ते परिददाम्यभित्यै ॥ अभीमां महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम्** पच्यमानां तिसृभिर्मैत्रीभिरुपचरति ।

## उखाया उद्वासनम् :–

धृष्टिमादाय भस्मापोह्य । पक्वाम् **देवस्त्वा सवितोद्वपतु सुपाणिस्स्वङ्गुरिः । सुबाहुरुत शक्त्या** उद्वास्य । **अपद्यमाना पृथिव्याशा दिश आ पृण । उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम्** उत्तरतस्सिकतासु प्रतिष्ठाप्य । ***मित्रैतां त उखां परिददाम्यभित्या एषा मा भेदि*** मित्राय परिददाति । तूष्णीमषाढामुद्वास्य । पाकाग्नेस्त्यागः ।

## अजाक्षीरेणोखाया आच्छृन्दनम् :–

**वसवस्त्वाऽऽच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वत्, रुद्रास्त्वाऽऽच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत्, आदित्यास्त्वाऽऽच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वत्, विश्वे त्वा देवा वैश्वानरा आ च्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत्** चतुर्भिरजाक्षीरेण उखामाच्छृणत्ति ।

---

१९. गोशकृदिक्षुपर्णाद्यैः इत्यर्थः ।

२०. एतदनन्तरं एकाष्टकायां चेदुखासम्भरणं तदा एतदन्तं कृत्वाग्निविहरणम् । पर्वणि चेदेतदन्तं कृत्वा प्रवर्ग्यं सम्भृत्य पशुः इत्येवं वाक्यद्वयं क्वचिन्मातृकाग्रन्थेषु उक्तमस्ति । एवं रीत्या कथमनुष्ठानमिति न ज्ञायते ।

तूष्णीमषाढाम् । ब्रह्मा उखाकर्मसु क्रियमाणेषु दक्षिणत आस्ते ॥[२०] प्रवर्ग्यसम्भरणेन सह घर्मेष्टकाकुलायिनीसम्भरणं च ।

## ॥ अथ वायव्यपशुः ॥

अग्निभ्यः कामाय पशूनालभते मुष्करान् । प्राजापत्यमजं तूपरमुपाकृत्याश्वर्षभवृष्णिबस्तान् । अपि वा सर्वेषामेतेषां स्थाने वायवे नियुत्वते श्वेतमजं तूपरमालभते । वायव्यपशुपक्षमाश्रित्य प्रयोगः ।

अमावास्यायां पौर्णमास्यां वा प्रातरग्निहोत्रं हुत्वा । प्राणानायम्य, अग्निं चेष्यमाणो वायव्येन नैयुत्वतेन पशुना यक्ष्ये । समारोप्य मथित्वोपावरोह्यायतने निधाय । न विद्युत् । अग्निं प्रणीय षड्ढोत्रादि निरूढपशुवत् । एक एव यूपः । पाशुबन्धकी वेदिः । समानविधानत्वात् । पूर्ववत्सामिधेन्यः[२१] । **वायवे नियुत्वते त्वा जुष्टमुपाकरोमि । वायवे नियुत्वते त्वा जुष्टं नियुनज्मि । वायवे नियुत्वते त्वा जुष्टं प्रोक्षामि** । स्रुच्याघारे विशेषः । **विष्णोस्थानमसीत इन्द्रो अकृणोद्वीर्याणि** अवतिष्ठते । **हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम स्वाहा** स्रुच्यमाघारयति । **वागसि प्राजापत्या सपत्नक्षयणी वाचा मेन्द्रियेणाविश** । प्रजापतय इदम् । ***हिं बृहद्भाः*** इत्यादि निरूढपशुवत् । ***वायवे नियुत्वते छागस्य वपाया मेदसोऽनुब्रूहि ॥ वायवे नियुत्वते छागस्य वपाया मेदसः प्रेष्य*** ॥ वायवे नियुत्वत इदम् । **वायोर्नियुत्वतोऽहं देवयज्ययेन्द्रियावी भूयासम् ॥ जेमानं** इति वा । अत्र पशुबन्धवद्दक्षिणा[२२] । बहिस्तन्त्रवर्तित्वात् । वपामार्जनान्तं कृत्वा प्राजापत्यं द्वादशकपालं पशुपुरोडाशं निर्वपति । अपि वा वैश्वानरं द्वादशकपालं पशुपुरोडाशं निर्वपति । यः कश्चनाग्नौ पशुरालभ्यते वैश्वानर एवास्य द्वादशकपालः पशुपुरोडाशो भवतीत्येके । अस्मिन्पक्षे अग्नीषोमीयसवनीययोरपि स एव । कपालोपधानकाले युग्मानामावृत्तिः । प्रचरणकाले उपांशुप्रचारः । ***प्रजापतये, पुरोडाशस्यानुब्रूहि । प्रजापतये, पुरोडाशस्य प्रेष्य*** । प्रजापतय इदम् । **प्रजापतेरहं --- अन्नादो भूयासम् । ऐन्द्रः प्राण** इत्यन्तं कृत्वा पशोः शिरश्छित्वा मृदा प्रलिप्य निदधाति । शेषं पशुवत् । **यज्ञ शं च म,** वृष्टिवर्जम् । ब्राह्मणतर्पणान्तम् । तेनेष्ट्वा, संवत्सरं

---

२१. अयं प्रयोगः आश्वलायनहौत्रपक्षे । आपस्तम्बहौत्रपक्षे तु एकविंशतिश्चतुर्विंशतिर्वा सामिधेन्यो भवन्ति । एकविंशतिसामिधेनीपक्षे ततस्त्वा॰ सप्तवि॰तिधेत्यूहः । चतुर्विंशतिसामिधेनीपक्षे ततस्वां त्रि॰शद्धेत्यूहः ।

२२. वासुदेवीयकारिकासु इयं विहिता । प्राचीनकारिकासु दक्षिणादानं निषिद्धम् ।

न मांसमश्नीयात् न स्त्रियमुपेयान्नोपरि शयीत । अपि वा मांसमश्नीयात् उपरि शयीत स्त्रियं त्वेव नोपेयादिति वाजसनेयकम् । पश्वन्ते घर्मसम्भृतिः । प्रवर्ग्यसम्भरणमनस्तमिते । इतरथा पर्वान्तरे । प्रवर्ग्यं सम्भरिष्यन्नित्यादि अथैनां कृष्णाजिने उपनह्यासजतीत्यन्तम् । प्रवर्ग्यसम्भरणेन सह घर्मेष्टका कुलायिनीसम्भरणं च ।

## कर्मोपक्रमो दीक्षणीया च :-

तिस्रो दीक्षा पक्षे षष्ठ्यामारम्भः । तत्पूर्वपर्वणि संकल्प्य उखासंभरणं पशुश्च । अन्येषु कल्पेषु मासादिषु च वसन्ते पर्वणि सुत्या यथा भवति तदनुसारेण दीक्षारम्भः । तस्मिन् दिने प्रातरग्निहोत्रं हुत्वा, नान्दीश्राद्धम् । तत आज्यं पशव इत्यादि । गृहे एव दीक्षणीया । अग्निं प्रणीय सम्भारयजूंषि । सोमपरिवेषणम् । अग्निं परित्यज्य । पुनः प्रणीय सप्तहोता[२३] । तं परित्यज्य ऋत्वर्थमग्निं प्रणीय **स्वे दक्ष** इत्यादि । ततो त्रिहविषं दीक्षणीयां निर्वपति । **देवा गातुविद** इत्यादि । पात्रप्रयोगकाले– त्रयोविंशतिकपालानि स्थाली स्फ्यश्च द्वन्द्वम् । इतराणि प्रकृतिवत् । निर्वपणकाले– **अग्नये वैश्वानराय जुष्टं निर्वपामि ॥ अग्नाविष्णुभ्यां जुष्टं निर्वपामि ॥ अदित्यै जुष्टं निर्वपामि ॥** इदं देवानामित्यादि । **अदित्यास्त्वोपस्थे सादयाम्यग्ने वैश्वानर हव्यꣳ रक्षस्वाग्नाविष्णू हव्यꣳ रक्षेथामदिते हव्यꣳ रक्षस्व** । निर्वापवत्प्रोक्षणम् । कृष्णाजिनादानादि । उत्करे त्रिर्निनीय । **यथाभागं व्यावर्तध्वं इदमग्नेर्वैश्वानरस्याग्नाविष्ण्वोः** पुरोडाशार्थान् । **इदमदित्याः** चर्वर्थान् । **अग्नये वैश्वानराय जुष्टमधिवपाम्यग्नाविष्णुभ्यां जुष्टमधिवपामि धान्यमसि धिनुहि देवान्** इत्यादि । एवं संवापः । कपालोपधानकाले वैश्वानरस्य द्वादशकपालमुपदधाति । युग्मानामावृत्तिः । आग्नावैष्णवमेकादशकपालमुपदधाति । अष्टावुपधाय तूष्णीं त्रीणि । **ध्रुवोऽसि** इति स्थाल्यासादनम् । पिष्टान्युत्पूय तण्डुलानुत्पुनाति । **देवस्त्वा** इति घृतमुत्पूय तूष्णीं स्थाल्यामासिञ्चति । **मखस्य शिरोऽसि** इति पिण्डं कृत्वा । **यथाभागं व्यावर्तेथां** इति विभज्य । **इदमग्नेर्वैश्वानरस्य, इदमग्नाविष्ण्वोः** । पुरोडाशावधिश्रित्य **घर्मोऽसि** इति तण्डुलानावपति । प्रथनादि पुरोडाशयोः अन्तरितं सर्वेषाम् । **आप्यायतां --- अग्नये वैश्वानराय जुष्टमभिघारयामि** । तूष्णीमाग्ना– वैष्णवम् । **आप्यायतां --- अदित्यै जुष्टमभिघारयामि** । प्रियेणेत्यासादनम् । **यज्ञोऽसि** इति वैश्वानरादित्योः । **अयं यज्ञो, ममाग्ने** चतुर्होता । आज्यभागाभ्यां प्रचर्य । उपांशु प्रधानयागः ।

---

२३. कूश्माण्डहोमपक्षे तं परित्यज्य पुनः प्रणीय जुहोति ।

*अग्नये वैश्वानराय, अनुब्रूहि ॥ अग्निं वैश्वानरं, यज* । अग्नये वैश्वानरायेदम् । **अग्नेर्वैश्वानरस्याहं देवयज्ययान्नादो भूयासम् ॥** *अग्नाविष्णुभ्याम्, अनुब्रूहि ॥* अवद्यमाने साम । *अग्नाविष्णू, यज* । अग्नाविष्णुभ्यामिदम् । **अग्नाविष्ण्वोरहं देवयज्यया वृत्रहा भूयासम्** । *अदित्यै, अनुब्रूहि ॥ अदितिम्, यज* । अदित्या इदम् । **अदित्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय** । नारिष्ठान् हुत्वा स्विष्टकृदादि । आग्नावैष्णवमविरुज्य इतरयोर्विरुज्य प्राशित्रम् । चतुर्धाकरणकाले वैश्वानरादित्योः त्रेधाकरणम् । पुरस्ताद्देवपत्नीभ्यः सम्पत्नीयं जुहोति । पत्नीसंयाजान्ता दीक्षणीया सन्तिष्ठते ।

## दीक्षाहुतयः :-

ततः प्राचीनवंशं करोति[२४] । उत्तरेण बहिः प्राग्वंशमित्यादि यत्प्राग्दीक्षाहुतिभ्यस्तत्कृत्वा । **आकूत्यै प्रयुजेऽग्नये स्वाहा** इत्यादि पञ्च आध्वरिकीः **आपो देवीः** इत्यन्तं पूर्ववत् कृत्वा आकूतिमग्निमिति षडाग्निकीः जुह्वैव ध्रुवात आप्याय्याप्याय्य जुहुयात् । **आकूतिमग्निं प्रयुज९ स्वाहा ॥** अग्नय इदम् । **मनो मेधामग्निं प्रयुज९ स्वाहा** ॥ अग्नय इदम् । **चित्तं विज्ञातमग्निं प्रयुज९ स्वाहा ॥** अग्नय इदम् । **वाचो विधृतिमग्निं प्रयुज९स्वाहा ॥** अग्नय इदम् । **प्रजापतये मनवे स्वाहा** । प्रजापतय इदम् । **अग्नये वैश्वानराय स्वाहा** । अग्नये वैश्वानरायेदम् । षडाग्निकीर्दीक्षाहुतीर्हुत्वा । अष्टकृत्व आप्याय्य चतुरनाप्याय्य तूष्णीं ध्रौवं समापयन् द्वादशगृहीतेन स्रुचं पूरयित्वा **विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा ॥ वातं प्राणं** इति यजमानः । कालात्मने सवित्र इदम् ।

## उखाया आहवनीये प्रवृञ्जनम् :-

अन्तर्वेदि कृष्णाजिनमित्यादि सम्भारयजूंषि चैनमध्वर्युर्वाचयतीत्यन्तं कृत्वा । शणकुलायेन मुञ्जकुलायेन

---

२४ नास्तीदं प्रयोगग्रन्थेषु, अपेक्षितं तु । अग्निचयने गृहे एव दीक्षा नियता । प्रयाणस्य नित्यविधानात् । उत्तरेण प्राग्वंशं परिश्रिते .... आ वो देवास ईमहे इति पूर्वया द्वारा प्राग्वंशं प्रविश्य... इत्यादिसूत्रैः प्राग्वंशकरणं दीक्षाङ्गत्वेन अवश्यं भवेत् । यत्प्राग्दीक्षाहुतिभ्यः (८.१३) इति सूत्रव्याख्यानावसरे भाष्यकारेण कपर्दिना प्राग्वंशकरणं च वपनं च इति वदता अत्र प्राग्वंशकरणं विहितमिति ज्ञायते । सत्याषाढसूत्रव्याख्यात्रा गोपीनाथेन "उत्तरेण प्राग्वशं परिश्रिते यजमानः केशश्मश्रु वापयते ( सत्या.श्रौ.सू ७.१ ) इति सूत्रव्याख्यानावसरे गृहे दीक्षापक्षेऽपि प्राग्वंश आवश्यकः । उत्तरेण प्राग्वंशमिति वचनात्तं प्राग्वंशं प्रपाद्येति वक्ष्यमाणसूत्राच्च । प्रायणीयाद्यर्थं प्राग्वंशो भिन्न एव" इति स्पष्टं दीक्षायामपि प्राग्वंशकरणमुक्तम् ।

वोखां प्रच्छाद्य । **मा सु भित्था मा सु रिषो दृꣳहस्व वीडयस्व सु । अम्ब धृष्णु वीरयस्वाग्निश्चेदं करिष्यथः ॥ दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि । जुष्टं देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्** द्वाभ्यामाहवनीये प्रवृणक्ति[२५] । **मित्रैतामुखां तपैषा मा भेदि । एतां ते परिददाम्यभित्यै** प्रदक्षिणमङ्गारैः परीन्धे । **दृवन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः** तस्यां क्रुमुकमुल्लिखितं[२६] घृतेनाक्त्वावदधाति । मुञ्जांश्च ।

**उख्याग्नौ समिदाधानमुपस्थानं च :-**

जाते उख्ये आहवनीयमनुगमयति । **परस्या अधि सँव्वतोऽवराꣳ अभ्यातर । यत्राहमस्मि ताꣳ अव** वैकङ्कतीं समिधमुख्ये आदधाति । अग्नय इदम् । **परमस्याः परावतो रोहिदश्व इहागहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरामृधः** शमीमयीम् । अग्नय इदम् । **सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनामर्चिषा मा तपसाभिशूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥ अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपन् जातवेदश्शिवो भव ॥ शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वा स्वाँय्योनिमिहासदः** तिसृभिर्जातमुख्यमुपतिष्ठते ।

**इध्माधानम् :-**

**यदग्ने यानि कानि चा ते दारूणि दध्मसि । तदस्तु तुभ्यमिद्धृतं तज्जुषस्व यविष्ठ्य ॥ यदत्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ रात्रिꣳ रात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै । रायस्पोषेण समिषामदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥ नाभा पृथिव्यास्समिधानमग्निꣳ रायस्पोषाय बृहते हवामहे । इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥ यास्सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपिदधाम्यास्ये** पञ्चभिरौदुम्बरमपरशुवृक्णमुख्ये इध्ममभ्यादधाति । **दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराꣳ**

---

२५. उखामाहवनीये अधिश्रयति इत्यर्थः । नित्यचितौ एवं प्रयोगः । प्रउगादि काम्यचितौ तु आहवनीयमेवोखाया-मवदधाति । क्षिपेदाहवनीयाग्निं काम्यं श्येनादिमाचरन् इति प्राचीनकारिका ।

२६. क्रुमुकः काष्ठशकलम् । धनुरादिनिर्लेखनप्रभवः शकलो वा ।

**उत । हनूभ्याꣳस्तेनान्भगवस्ताꣳस्त्वं खाद सुखादितान्** आश्वत्थीं समिधमादधाति । **ये जनेषु मलिम्लवस्स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः** वैकङ्कतीम् । **यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् दिप्साच्च सर्वं तं मस्मसा कुरु** शमीमयीम्[२७] । तस्मादग्निचितः पापं न कीर्तयेत् । नो अग्निं बिभ्रतो नो अग्निविदः । **सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥ उदेषां बाहू अतिरमुद्वर्च उदू बलम् । क्षिणोमि ब्रह्मणा मित्रानुन्नयामि स्वाꣳ अहम्** उत्तमे यजमानं वाचयन्, तूष्णीमौदुम्बर्यौ समिधावादधाति । ***मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनौ भरिष्यत्युखा । तां विश्वैर्देवैर् ऋतुभिस्संविदानः प्रजापतिर्विश्वकर्मा युनक्तु*** मौञ्जे शिक्ये षडुद्यामे द्वादशोद्यामे वोखामवदधाति ।

**शिक्यपाशस्य प्रतिमोचनम् :-**

एकविंशतिनिर्बाधो रुक्मः सूत्रोतो भवति । यजमानः – **दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्शमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः** तमासीनो यजमानोऽन्तर्निर्बाधं प्रतिमुच्य बहिर्निर्बाधान्कुरुते । **विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति** शिक्यपाशं ग्रीवायां प्रतिमुञ्चते । **नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः** कृष्णाजिनमुत्तरं, स्कन्धयोर्निदधाति[२८] । **सुपर्णोऽसि गरुत्मान्त्रिवृत्ते शिरो गायत्रं चक्षुस्स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम** उख्यमवेक्ष्य । तूष्णीमादाय । **सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत** आदायोत्थायोपरि नाभेर्धारयमाणः ।

**विष्णुक्रमणम् :-**

**विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनु वि क्रमस्व निर्भक्तः स यं द्विष्मः ॥ विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु वि**

---

२७. प्रयोगग्रन्थेषु समिदाधानस्य उद्देशत्यागो नोक्तः । विवक्षितं चेदग्नय इदं इति सर्वत्र ब्रूयात् ।

२८. स्कन्धयोः स्थितं कृष्णाजिनं यथा रुक्ममाच्छादयति तथा ।

**क्रमस्व निर्भक्तः स यं द्विष्मः ॥ विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु वि क्रमस्व निर्भक्तः स यं द्विष्मः ॥ विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु वि क्रमस्व निर्भक्तः स यं द्विष्मः** चतुरो विष्णुक्रमान् प्राचः क्रामति* । ब्रह्मा दक्षिणत एति ।

## प्रदक्षिणकरणम् :-

**अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यादा रोदसी भानुना भात्यन्तः** एतामनूच्य । **अग्नेऽभ्यावर्तिन्नभि न आवर्तस्वायुषा वर्चसा सन्या मेधया प्रजया धनेन ॥ अग्ने अङ्गिरः शतं ते संत्वावृतः सहस्रं त उपावृतः । तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाहि विश्वतः ॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि** चतसृभिः प्रदक्षिणमावर्तते ।

## उख्याग्नेरासन्द्यामासादनं समिन्धनं च :-

रुक्मकृष्णाजिने तूष्णीमुन्मुच्य । **उदुत्तमं वरुणपाशमस्मदवाधमं वि मध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम** शिक्यपाशमुन्मुच्य । तूष्णीं समीपमासन्दीमाहृत्य । **आ त्वाऽहार्षमन्तरभूद्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्त्वस्मिन् राष्ट्रमधिश्रय ॥ अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जग्मिवान् तमसो ज्योतिषागात् । अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः** द्वाभ्यामुपतिष्ठते[२९] । औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या प्रादेशमात्रपादा मौञ्जविवाना फलकास्तीर्णा वा मृदा प्रदिग्धा । तामाहवनीयायतने निधाय । **सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् । मैनामर्चिषा मा तपसाभि शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्विभाहि ॥ अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपन् जातवेदश्शिवो भव ॥ शिवो भूत्वा मह्यमग्नेऽथो**

---

*. बौधायनेन (बौ.श्रौ.सू.१०-१६) दर्शपूर्णमासवदेव चयन प्रकरणेऽपि विष्णुक्रमणविधानात् अत्रापि दर्शपूर्णमासवदेव विष्णुक्रमणम् ।

२९. 'आ त्वाहार्षं --- अधिश्रय आहृत्योपतिष्ठते । अग्रे बृहन्नुषसां--- सद्मान्यप्राः इति च' इति द्रा. प्र. । अत्र आत्वाहार्षमित्याहरणम्, अग्रे बृहन्नुषसामित्युपस्थानमित्यस्मन्मतिः । अस्मिन्विषये भूमिका द्रष्टव्या ।

**सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वास्स्वां योनिमिहासदः ॥ हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्** तस्यां चतसृभिः उख्यमासादयति । शर्करायां वा तिसृभिरासाद्य हंसवत्योपतिष्ठत इत्येके । **येन देवा ज्योतिषोर्ध्वा उदायन्, येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति** प्रादेशमात्रैः काष्ठैः उख्यमुपसमिन्धे । नित्यो ज्वलति ।

**मुष्टीकरणं व्रतग्रहणं च :-**

यजमान उपसमिध्य मुष्टीकरणप्रभृति[३०] कर्म प्रतिपद्यते । स्वाहा यज्ञं मनसेत्यादि एष्ट्री स्थेत्यन्तं कृत्वा । **अध्वर्युः** – गार्हपत्ये दीक्षितस्य व्रतमित्यादि । व्रतकाले यजमानो व्रतं प्रतिगृह्य निधाय । **अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे** औदुम्बरीं समिधं व्रतेऽक्त्वाभ्यादधाति । अग्नयेऽन्नपतय इदम् । ***देवस्य त्वा --- हस्ताभ्यां गायत्रेण छन्दसा रात्रिमिष्टकामुपदधे तया देवतयाङ्गिरस्वद्ध्रुवा सीद*** सायमौदुम्बरीं समिधमादधाति । अग्नय इदम् । नास्याञ्जनम् । **दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे** हस्तावनिज्य । **ये देवा मनोजाता मनोयुजस्सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यस्स्वाहा** दक्षिणेनाहवनीयं परिश्रिते व्रतयति । नैनमदीक्षिता व्रतयन्तं पश्यन्ति । आचम्य आत्मन इदम् । ***शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः । इरावतीरनमीवा अनागसश्शिवा नो भवथ जीवसे*** व्रतयित्वा नाभिदेशमभिमृशति । अपश्च पीत्वा जपति । तूष्णीं पत्नी स्व आयतने व्रतयति । ततः **पूषा सन्या** इति सनीहारप्रस्थापनान्तम् । जागर्त्येतां रात्रिम् ।

**अर्धरात्रे व्रते प्रत्ते सनीहारविधौ कृते ।**

**प्रथमो दीक्षादिवसः समाप्यत इति स्थितिः ॥**

उपोदये ***अग्नीन् ज्योतिष्मतः कुरुत*** । उदित आदित्ये **याः पशूनां** वाचं विसृज्य । सोमपरिवेषणम् ।

---

३०. मुष्टिकरणप्रभृति इति पाठा० ।

## वात्सप्रेणोपस्थानम् :-

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्‌द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा । विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आ जगन्थ ॥ समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् । तृतीये त्वा रजसि तस्थिवाꣳसमृतस्य योनौ महिषा अहिन्वन् ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ उशिक्पावको अरतिस्सुमेधा मर्तेष्वग्निरमृतो नि धायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत् ॥ विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः । वीडुं चिदद्रिमभिनत्परायञ्जनायदग्निमयजन्त पञ्च ॥ श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसोस्सूनुस्सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरां वस्यो अच्छाभि द्युम्नं देवभक्तं यविष्ठ ॥ आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने । प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ त्वामग्ने यजमाना अनु द्यून् विश्वा वसूनि दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुषिजो वि वव्रुः ॥ दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्शमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः इत्यनुवाकेन वात्सप्रेणोपतिष्ठते[३१] ।

## उपसमिन्धनं व्रतग्रहणं च :-

येन देवा ज्योतिषोर्ध्वा उदायन्, येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति उपसमिध्य । मध्यन्दिने गार्हपत्ये दीक्षितस्य व्रतमित्यादि । व्रतं प्रतिगृह्य **अन्नपतेऽन्नस्य नो --- द्विपदे चतुष्पदे** औदुम्बरीं समिधं व्रतेऽक्त्वाभ्यादधाति ।

---

३१. दिवस्परीत्येकादशभिर्द्वादशभिस्त्रयोदशभिर्वा वात्सप्रेणोपतिष्ठते इति सूत्रम् । अस्मिन्ननुवाके एकादशानां ऋचां विद्यमानत्वात् यदा द्वादशभिस्त्रयोदशभिर्वा उपस्थानं तदा एकादशी आवर्तते ।

अग्नयेऽन्नपतय इदम् । ***देवस्य त्वा --- हस्ताभ्यां त्रैष्टुभेन छन्दसाहरिष्टकामुपदधे तया देवतयाङ्गिरस्वद्ध्रुवा सीद*** प्रातस्समिधमादधाति । नास्याञ्जनम् । अग्नय इदम् । ततः दैवीं धियमित्यादि नाभ्यभिमर्शनान्तं पूर्ववत् । अधिवृक्षसूर्ये ***अग्नीन् ज्योतिष्मतः कुरुत*** इत्यादि । नक्षत्रं दृष्ट्वा । **याः पशूनां** इति जपित्वा । ***व्रतं कृणुत*** इति वाचं विसृजते । मध्यरात्रे गार्हपत्ये दीक्षितस्येत्यादि व्रतं प्रतिगृह्य । **अन्नपतेऽन्नस्य, देवस्य त्वा --- हस्ताभ्यां गायत्रेण छन्दसा रात्रिमिष्टकामुपदधे तया । दैवीं धियं, ये देवाः, शिवाः पीता भवथ, अग्ने त्वꣳ सुजागृहि** स्वप्स्यन्नुख्यमभिमन्त्रयते ।

उपोदये **त्वमग्ने व्रतपा असि । विश्वे देवाः। पुनर्मनः। अग्नीन् ज्योतिष्मत** इत्यादि व्रतं कृणुतेत्यन्तम् । सोमपरिवेषणम् । **दृशानो रुक्म** इत्यादि । **विष्णोः क्रमोऽसि** इत्यादि सादनान्तम् । **येन देवा** इत्युख्यमुपसमिन्धे[३२] ।

**प्रयाणं देवयजनगमनं च :-**

तिस्रो दीक्षा पक्षे अस्मिन्नहनि प्रयाणम् । इतरथा पूर्वेद्युः विष्णुक्रमान् क्रामत्युत्तरेद्युरुपतिष्ठते । एवं सदा आ क्रयात् । यदहः सोमं क्रीणीयात् तदहरुभयं समस्येत् । प्र च क्रामेदुप च तिष्ठेत । यदहः प्रयायात् **उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमस्सुप्रतीको विभावसुः** उख्यमुद्यम्य[३३] । **सीद त्वं मातुरस्या --- ऋतं बृहत्** चतसृभिः द्वीषे शकटे प्रउग उख्यमासादयति । तिसृभिरासाद्य हंसवत्योपतिष्ठत इत्येके । समोप्येतरावग्नी अन्वारोप्य । यजमानः पत्न्या सह शकटमारुह्य **प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिस्त्वम् । बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तनुवा प्रजाः** इति प्रयाति । **अक्रन्ददग्निः --- भात्यन्तः** अक्षशब्दमनुमन्त्रयते । प्राचीनवंशं करोतीत्येतदादि द्वारकरणान्तम् । यागोपकरणैः सह देवयजनं प्राप्य । पादौ प्रक्षाल्य आचम्य **एदमगन्म --- मदेम** देवयजनमध्यवस्यति । आहवनीयसमीपे आसन्द्यां सशिक्यमुख्यं प्रतिष्ठाप्य, उद्धत्यावोक्ष्यायतनानि कल्पयित्वा गार्हपत्यदक्षिणाग्नी स्वस्वायतने प्रतिष्ठाप्य । **समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्, हव्या जुहोतन**

---

३२. क्वचिन् मातृकाग्रन्थेषु एतदनन्तरं व्रतमुक्तमस्ति । एतन्न साधु भाति, इन्धनव्रतनाध्यवसानसन्निपते घृतानुषिक्तां पूर्वामादधाति इति सूत्रेण देवयजनाध्यवसनावसरे व्रतस्य विहितत्वात् । प्राचीनकरिकायां द्राविडप्रयोगे च तत्रैव व्रतमुक्तम् ।

३३. यजमानः उख्यमुद्यम्य इति M M पाठः ।

घृतानुषिक्तामौदुम्बरीमवसिते समिधमादधाति । **येन देवा ज्योतिषोर्ध्वा --- यजमानः स्वस्ति** उख्यमुपसमिन्धे । अग्नय इदम् । इन्धनव्रतनाध्यवसानसन्निपाते घृतानुषिक्तां पूर्वामादधाति ।

## अप्सु भस्मप्रवेशनम् :-

मध्यन्दिने व्रतम् । पूर्ववत्समिदाधानम् । अधिवृक्षसूर्ये अग्नीन् ज्योतिष्मतः कुरुतेत्यादि । यद्युखां भस्माभिनिषीदेदुख्यमादाय उदकान्तं गत्वा । अध्वर्युः – ***इमꣳ सुयोनिꣳ सुवृतꣳ हिरण्मयꣳ सहस्रभृष्टिं महिषावरोह । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमाविशस्व । इमꣳ स्तनं मधुमन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमाविशस्व*** एताभ्यामुखाया अग्निमुद्धृत्य, अनिरुहञ्छिक्यादुखाम् । **आपो देवीः प्रतिगृह्णीत भस्मैतत्स्योने कृणुध्वꣳ सुरभावु लोके । तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम् ॥ अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सं जायसे पुनः ॥ गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि** तिसृभिरप्सु भस्म प्रवेशयति । भस्मनोऽपादाय प्रपीड्य[३४] । **प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳ सृज्य मातृभिस्त्वं ज्योतिष्मान् पुनरासदः ॥ पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः** द्वाभ्यामुखायां भस्मनः एकदेशं अग्निं च प्रत्यवधाय । **पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाहि विश्वतः ॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि** द्वाभ्यां पुनरुदैति । **येन देवा --- यजमानस्स्वस्ति** यजमान उपसमिन्धे । नित्यो ज्वलति ।

## बोधवतीभ्यामुपस्थानम् :-

अध्वर्युः – **पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तनुवो वर्धयस्व सत्यास्सन्तु यजमानस्य कामाः** पुनरुख्यमुपसमिन्धे । **बोधा नो अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः । पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने ॥ स बोधि सूरिर्मघवा वसुदावा वसुपतिः । युयोध्यस्मद्द्वेषाꣳसि** बोधवतीभ्यामुपतिष्ठते । यद्युखामित्याद्येतदन्तमधिकभस्मविषयम् । नित्यमप्सु

---

३४. प्रक्षिप्तभस्मन एकदेशमपादाय इत्यर्थः ।

भस्मप्रवेशनं दीक्षितस्य कृतास्विष्टकासु । अकृतासु संसर्गीयार्थं भवति । पुरीषे पशुकामः कुर्वीताप्सु यायावरः प्रवपेत् ।

**इष्टकाकरणम् :-**

दीक्षितस्येष्टकाः करोति मासप्रभृतिषु दीक्षाकल्पेषु पुरस्तात्, अदीक्षितस्येतरेषूपरिष्टात् प्राजापत्यात् पशोः[३५] । मृन्मयीरिष्टकाः करोति । पादमात्र्योऽरत्निमात्र्य उर्वस्थिमात्र्योऽणूकमात्र्य ऋजुरेखा दक्षिणावृतः सव्यावृतस्त्र्यालिखिताश्च । निर्मन्थ्येन लोहिनीः पचन्ति । अभिन्ना भवन्ति । खण्डां कृष्णां लक्ष्मणां च नोपदध्यात् । पुष्करपर्णं, रुक्मो, हिरण्मयः पुरुषः, स्रुचौ, सप्त स्वयमातृण्णाः, शर्करा, हिरण्येष्टकाः, पञ्च घृतेष्टका, दूर्वास्तम्बः, कूर्मः, उलूखलं, मुसलं, शूर्पमश्मानः, पशुशिरांसि, सर्पशिरश्चामृन्मयीरिष्टकाः । जानुदघ्नं साहस्रं चिन्वीत प्रथमं चिन्वानः । नाभिदघ्नं द्विषाहस्रं द्वितीयम् । आस्यदघ्नं त्रिषाहस्रं तृतीयमुत्तरमुत्तरं ज्यायांसम् । महान्तं बृहन्तमपरिमितं स्वर्गकामश्चिन्वीतेति वाजसनेयकम् । कल्पोक्तप्रकारान् इष्टकादिसम्भारान् सम्पाद्य ।

**गार्हपत्यचितेरायतनसंस्कारः :-**

अपवृत्ते दीक्षापरिमाणे उपोदये वाग्यमनादि । उदित आदित्ये वाग्विसर्गः । **दृशानो रुक्म** इत्यादि । विष्णुक्रमादि सादनान्तम् । **येन देवा --- स्वस्ति** उपसमिध्य । ततः वात्सप्रेणोपस्थानम्[३६] । **येन देवा --- स्वस्ति** उपसमिध्य । ततः सोमपरिवेषणम्[३७] । **अपेत वीत वि च सर्पतातो येऽत्रस्थ पुराणा ये च नूतनाः । अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै** इति गार्हपत्यचितेरायतनं व्यायाममात्रं चतरस्रं परिमण्डलं वोद्धत्य अप उपस्पृश्य । हरिण्या पलाशशाखया शमीशाखया वा सम्मृज्य प्राचीमुदीचीं वा शाखामुदसित्वा, अप उपस्पृश्य

---

३५. मासप्रभृतिषु मासचतुर्मास इत्यादिषु दीक्षाकल्पेषु दीक्षानन्तरमिष्टाकाः कार्याः । मासादर्वाक्कालेषु दीक्षाकल्पेषु यथा त्र्यहष्डह इत्यादिषु प्राजापत्याद्वायव्याद्वा पशोरनन्तरं कार्याः ।

३६. अत्र कात्यायनसूत्रे ''श्वोऽभ्यवहरणादि प्रायश्चित्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः । वात्सप्रं कृत्वोपस्थेयं चेत्'' (१७.१,२) इति । अस्य विद्याधरव्याख्यानम्- श्वः उपसदां प्रथमेऽहनि सोमक्रयदिने.....पूर्वोक्तयोर्विष्णुक्रम वात्सप्रयोस्समासः एकस्मिन्दिने द्वयोरनुष्ठानं कर्तव्यम् ॥ यदि तस्मिन् क्रयणीयेऽहनि वात्सप्रोपस्थानस्य पर्यायो भवेत् तदा वात्सप्रं कृत्वा वात्सप्रेणोपस्थाय विष्णुक्रमान् वात्सप्रोपस्थानं च कुर्यात् । यदि विष्णुक्रमपर्यायस्तदा विष्णुक्रमान् कृत्वा वात्सप्रोपस्थानम् इति ।

३७. अत्र दर्शितक्रमस्तु L.M पाठानुसारी कपर्दिभाष्यानुसारी च । आन्ध्रादिप्रयोगपाठेषु सोमपरिवेषणं विष्णुक्रमा वात्सप्रोपस्थानं इति भिन्नक्रमः ।

**शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः** इत्यद्भिरवोक्ष्य **अग्नेर्भस्मास्यग्नेः पुरीषमसि** सिकता निवपति । **संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्** ऊषान् । तान्निवपन् ***यददश्चन्द्रमसि कृष्णं तदिहास्तु*** इति मनसा ध्यायति । **सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः । आत्मा वो अस्तु सं प्रियस्सं प्रियास्तनुवो मम** ऊषान् सिकताश्च संसृज्य । **चितस्स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवा स्सीदत** एकविंशत्या शर्कराभिर्गार्हपत्यचितेरायतनं परिश्रयति । तिस्रस्तिस्रः संहिताः । तासामन्तरालं चतुस्तिलोनं पञ्चपञ्चाशदङ्गुलम् । सप्तकृत्वो मन्त्रावृत्तिः । ***व्रजं कृणुध्वꣳ स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि । पुरः कृणुध्वमायसीरधृष्वा मा वः सुस्रोच्चमसो दृꣳहता तं*** [३८] उपहिताः शर्करा अभिमन्त्र्य ।

## गार्हपत्यप्रथमचितेरिष्टकोपधानं :–

प्रागायामाः प्रथमे प्रस्तारे । उदगायामा द्वितीये । एवं व्यत्यासेन । प्रथमे उदगपवर्गास्तिस्रो रीतयः । द्वितीये प्रस्तारे प्रागपवर्गास्तिस्रः । एकस्यां रीत्यां सप्तसप्तेष्टकाः । प्रथमे प्रस्तारे दक्षिणत आरभ्येष्टका गणनम् । द्वितीयस्यां रीत्यां द्वितीयामारभ्य **अयꣳ सो अग्निर्यस्मिन्सोममिन्द्रः सुतं दधे जठरे वावशानः । सहस्रियं वाजमत्यन्न सप्तिꣳ स सवान्थसन्थस्तूयसे जातवेदस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद** मध्यरीतौ द्वितीया इष्टका । **अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाꣳ ऊचिषे धिष्णिया ये । याः परस्ताद्रोचने सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपस्तया** तस्या उत्तरा । **अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्सु वा यजत्र । येनान्तरिक्षमुर्वाततन्थ त्वेषस्स भानुरर्णवो नृचक्षास्तया** तस्या उत्तरा । **पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीस्तया** तस्या उत्तरा । चतस्रो मध्ये प्राचीरिष्टका गार्हपत्यचितावुपदधाति । **इडामग्ने पुरुदꣳसꣳ सनिं गोश्शश्वत्तमꣳ हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे तया** तृतीयस्यां चतुर्थीम् । **अयं ते योनिर् ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिं तया** तस्यामेव पञ्चमीम् । द्वे पुरस्तात्समीची तिरश्ची वा । एवं

---

३८. *व्रजं कृणुध्वꣳ स हि नृपाणो वर्ष्म सीव्यध्वं बहुला पृथूनि । पुरः कृष्णाध्वमायसीरसृष्टा माहुः सुहोच्चमसो दृꣳहता तं* इति पाठान्तरम् ।

पश्चात् । **चिदसि तया**[३९] प्रथमायां चतुर्थीं । **परिचिदसि तया**[३९] तस्यामेव पञ्चमीम् । द्वाभ्यां द्वाभ्यां मन्त्राभ्यां एकैकां लोकम्पृणामुपदधाति । दक्षिणत आरभ्योदगपवर्गाः पश्चादारभ्य प्रागपवर्गा वा सर्वत्र लोकम्पृणोपधानम् । **लोकम्पृण च्छिद्रम्पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्, योनावसीषदन् ॥ ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वा रोचने दिवस्तया** सर्वास्विष्टकासु तयादेवतमन्ततोपदधाति । त्रयोदशभिर्लोकम्पृणाभिः प्रच्छादयति । चात्वालस्थानात् पुरीषमाहृत्य **पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश । वैश्वानरः सहसा पृष्टो अग्निस्स नो दिवा स रिषः पातु नक्तं** वैश्वानर्यर्चा चितावनुव्यूहति । सा चितिर्भवति ।

### द्वितीयचितिप्रभृति पञ्चमचितिपर्यन्तम् :-

अपरस्मिन् प्रस्तारे अयꣳ सो अग्निरित्यादि द्वितीयास्यां रीत्यां द्वितीयाद्याश्चतस्रः । **अयꣳ सो अग्निः** मध्यरीत्यां द्वितीया । **अग्ने दिवो** तस्याः पूर्वा । **अग्ने यत्ते दिवि** तस्याः पूर्वा । **पुरीष्यासो अग्नयः** तस्याः पूर्वा ।

इडामग्नेऽयं ते योनिरिति उत्तरेऽंसे द्वे[४०] । अपि वा तासां पुरतो द्वे । चिदसीति प्रथमायामाद्येष्टका । परिचिदसीति तस्यामेव द्वितीया । अपि वा चिदसीति द्वितीयाद्या इष्टका । परिचिदसीति तस्या उत्तरा[४१] । ततो लोकम्पृणाः पृष्टो दिवीति । एवं व्यत्यासेन पञ्च चयनानि करोति । पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः । त्रिचितीकं चिन्वीत द्वितीयं चिन्वानः । एकचितीकं चिन्वीत तृतीयं चिन्वानः । एकचितीकानेवात ऊर्ध्वं चिन्वीत । **अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवस्समीचीः पुमाꣳसं जातमभिसꣳरभन्ताम्** कराभ्यां गार्हपत्यचितिमभिमृश्य ।

### उख्याग्नेर्निवपनम् :-

**समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि सँव्वसानौ- सँव्वां मनाꣳसि सँव्व्रता समु चित्तान्याकरम् ॥ अग्ने पुरीष्याधिपा भवा त्वं नः । इषमूर्जं यजमानाय धेहि ॥ पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमाꣳ असि । शिवाः कृत्वा**

---

३९. मन्त्रे तयादेवतपाठात् न पुनस्तयादेवतम् ।

४०. तृतीयायां रीत्यामन्तिमे इष्टके ।

४१. तृतीयायां रीत्यामाद्येष्टका ।

**दिशस्सर्वास्स्वाँय्योनिमिहासदः ॥ भवतं नस्समनसौ समोकसावरेपसौ । मा यज्ञ९ँ हि९ँसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः** तस्यां चतसृभिरुख्यं सन्निवपति । विज्ञायते च, वि वा एतौ द्विषाते यश्चोखायां यश्च चीयते । ब्रह्म यजुः । यत्सन्युप्य विहरति ब्रह्मणैवैनं संशास्ति इति ।

***साक९ँ हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि । विद्वा९ँ अस्य व्रता ध्रुवा वया९ँ इवानु रोहते***[४२] सन्युप्तावभिमन्त्रयते[४३] चित्युखाग्नी[४४] **स्यूता देवेभिरमृतेनागाः । *उखा९ँ स्वसारमधि वेदिमस्थात् । सत्यं पूर्वैर् ऋषिभिश्चाकुपानोऽग्निः प्रविद्वानिह तत्करोतु*** घृतेनोखां पूरयति दध्ना मधुना सिकताभिर्वा सर्वैर्वा संसृज्य न रिक्तामवेक्षेत[४५] ।

## शिक्यादुखाया निरूहणम् :-

**मातेव पुत्रं पृथिवी पुरीष्यमग्नि९ँ स्वे योनावभारुखा । तां विश्वैर्देवैर् ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु** शिख्यादुखां निरूह्य । **यदस्य पारे रजसश्शुक्रं ज्योतिरजायत । तन्नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा** वैश्वानर्या शिक्यमादत्ते । नैर्ऋतीरिष्टकाः कृष्णास्तिस्रस्तुषपक्वास्ताः शिक्यं रुक्मसूत्रमासन्दीं चादाय दक्षिणमपरमवान्तरदेशं गत्वा । ब्रह्मा दक्षिणत एति । **नमस्सु ते निर्ऋते विश्वरूपेऽयस्मयँव्विचृता बन्धमेतम् । यमेन त्वं यम्या सँव्विदानोत्तमं नाकमधि रोहयेमं** स्वकृत इरिणे प्रदरे वा शिक्यं निधाय[४६]।

## नैर्ऋतीष्टकोपधानम् :-

तस्येष्टकाभिः पाशमभ्युपदधाति । **यस्यास्ते अस्याः क्रूर आसञ्जुहोम्येषां बन्धानामवसर्जनाय । भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाऽहं परि वेद विश्वतः ॥ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि । अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ देवीमहं निर्ऋतिँव्वन्दमानः पितेव पुत्रं**

---

४२. *विद्वा९ँ अस्य व्रता ध्रुवा वया इवानु रोधसे इति पाठा०* ।

४३. सन्युप्याभिमन्त्रयते इति पाठा० ।

४४. सुगमोऽयं पाठः क्वचिदुपलभ्यते । चितेरुख्यान्तश्च पुरोऽग्निः इति बहुलः पाठो विद्यते ।

४५. L.M पाठे उखापूरणानन्तरं संन्युप्ताभिमन्त्रणं विद्यते ।

४६. ब्रह्मयजमानौ दक्षिणतः स्थितौ उपास्येते इति भाष्यम् । परं तु अस्माभिर्दृष्टप्रयोगग्रन्थेषु एष विषयो नोक्तः ।

**दसये वचोभिः । विश्वस्य या जायमानस्य वेद शिरश्शिरः प्रति सूरी विचष्टे** एताभिस्तिसृभिः पराचीरसंस्पृष्टा दक्षिणापवर्गम् । न तयादेवतं करोति । **यत्ते देवी निर्ऋतिरा बबन्ध दामग्रीवास्वविचर्त्यम् । इदं ते तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः** शिक्यजालेनैनाः प्रच्छाद्य । रुक्मसूत्रमासन्दीं च परस्तान्निदधाति[४७] ।

***अपास्मादेतु निर्ऋतिर्नेहास्या अपि किं चन । अगोतां नाष्ट्रां पाप्मानꣳ सर्वं तदपहन्महे ॥ अपास्म नैर्ऋतान्पाशान्मृत्यूनेकशतं च ये । अपास्य ये सिनाः पाशा[४८] मृत्यूनेकशतꣳ सुवे[४९] ॥ ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे । तान्, यज्ञस्य मायया सर्वानवयजामहे ॥[५०] देवीमहं निर्ऋतिं बाधमानः पितेव पुत्रं दसये वचोभिः । विश्वस्य या जायमानस्य शिरो देवीः प्रति सूरी वि चष्टे[५१]*** एताभिश्चतसृभिः उपहिता अभिमन्त्र्य ।

**यदस्य पारे रजसः शुक्रं ज्योतिरजायत । तन्नः पर्षदतिद्विषोऽग्ने वैश्वानर स्वाहा** वैश्वानर्या परिषिच्य । ***भूत्यै नमः*** इत्युपस्थायाप्रतीक्षमायन्ति । **शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शँय्योरभि स्रवन्तु नः** अद्भिर्मार्जयन्तेऽध्वर्युब्रह्मयजमानाः । ***ऊर्जं बिभ्रद्वसुमनाः***

---

४७. इष्टकानां दक्षिणत इत्यर्थः ।

४८. ये सीनाः पाशः, ये सीनान् पाशान्,इति पाठा० ।

४९. मृत्यू एकशतꣳ सुवे, मृत्यो एकशतꣳ सुवे, इति पाठा० ।

५०. अवास्मादेतु निर्ऋतिर्नोर्हास्मा अपि किञ्चन । अगोतां नाष्ट्रां पाप्मानꣳ सर्वं तदवहन्महे ॥ अपास्म नैर्ऋतान्पाशान्मृत्यूनेकशतं च ये । अपास्म ये सिनाः पाशा मृत्यूनेकशतꣳ सुवे ॥ ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे । तान्, यज्ञस्य मायया सर्वानवयजामहे ॥ इति M.M पाठः ।

५१. विश्वस्य या जायमानस्य शिरो देवी प्रतिसूरी विचष्टे, विश्वस्य या जायमानस्य वेद शिरश्शिरः प्रतिसूरी विचष्टे, विश्वस्य या जायमानस्य जायमानस्य वेद शिरश्शिरः प्रतिसूरी विचष्टे, इति पाठा० । विश्वस्य या जायमानस्य वेद शिरश्शिरो देवीः प्रति सूरी वि चष्टे इति आन्ध्र प्र. पा. ।

५२. अत्र केषांचित् पदानामेवं पाठान्तराण्युपलभ्यन्ते । यथा – बिभ्रद्वसुमनाः –*बिभ्रद्वसुवनिः* । सुमेधाः – *सुवर्चाः* । सुवर्चा अघोरेण – *सुचक्षा अघोरेण* । उत्तराणि – *उत्तिराणि* ।

५३. *ऊर्जं बिभ्रद्वसुनीथः सुमेधा गृहानेमिर्मनसा मोदमानः सुवर्चाः । अघोरेण चक्षुषाहꣳ शिवेन ग्रहाणां पश्यन्वयमुत्तराणि ॥ गृहाणामायुः प्रवयन्ति रामो गृहा अस्माकं प्रतिरन्त्वायुः । गृहानहꣳ सुमनसः प्रपद्येऽवीरघ्नी वीरवतस्सुवीरान् इति M.M पाठः ।*

**सुमेधा गृहानैमि मनसा मोदमानस्सुवर्चाः । अघोरेण चक्षुषाहꣳ शिवेन गृहाणां पश्यन्वय उत्तराणि**[५२] **॥ गृहाणामायुः प्रवयन्तिरामो गृहा अस्माकं प्रतिरन्त्वायुः । गृहानहꣳ सुमनसः प्रपद्येऽवीरघ्नो वीरवतस्सुवीरान्**[५३] अध्वर्युः गृहानभ्येति । तूष्णीमितरौ । **निवेशनस्सङ्गमनो वसूनां विश्वा रूपाऽभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनां** आहवनीयं गार्हपत्यं वा उपतिष्ठन्ते ।

प्रायणीयेष्टिः, वेदिमानञ्च :-

**अहं त्वदस्मि** इत्यादि । प्रायणीयया प्रचर्य उदयनीयार्थं निदधातीत्यन्तं कृत्वा वेदिं मिमीते । इह द्विपदप्रक्रमेण त्रिपदप्रक्रमेण वा ज्योतिष्टोमवत् न पदमानम् । यद्येकादशयूपाः तथापि प्रक्रमेण मानम् । न रथाक्षमात्रेण[५४] ।

## ॥ वेदिमानकारिका: ॥

१, मीयते साग्निकी वेदिः प्रक्रमैर्द्विपदैरिह ।
अर्काङ्गुलप्रमाणेन पदमेकविधे स्मृतम् ॥

२, त्रीण्यङ्गैकैक-भू-चन्द्र-दृक्-चन्द्र-द्वय-वह्निषु ।
भू-द्व्यैक-द्वितयैकेषु द्व्यैक-द्व्यैकैक-भूमिषु ॥

३, आदिमेन सहैवात्र स्युर्द्वाविंशतिशङ्कवः ।
षट्त्रिंशिका मानरज्जुः तस्यां द्व्यष्टसु लक्षणम् ॥

४, विमाने पाशयोर्मध्ये प्रक्रमा द्वादश स्मृताः ।
श्रोणी पञ्चदशस्वाद्ये सदोऽनन्तरषष्ठयोः ॥

५, दशस्वष्टसु तत्कोणाः क्रमात्स्युर्दक्षिणोत्तरे ।
तृतीये च चतुर्थे च धिष्ण्याः कार्या अरत्नितः ॥

---

५४. यूपैकादशिन्यां रथाक्षेण वेदिर्मातव्या इति सामान्यविधिः । साग्निचित्ये क्रतौ यूपैकादशनीपक्षे तु वेदिसम्मितां यूपैकादशिनीं मिनुयात्, 'वेदिसम्मितां मिनोति,, इति श्रुतेः । कपर्दिभाष्ये च 'यद्यप्येकादशयूपाः तथापि वेदिसम्मितैव । न रथाक्षेण विमानम् ... । वेदिसम्मिता साग्निचित्ये इति वेदिसम्मिताम्नानात् रथाक्षविमानं न लभ्यते' इति ।

६, अष्टादशाङ्गुलैस्तेषां शिष्ट्वा सञ्चरमेव च ।
षष्ठे त्वाग्नीध्रमेव स्याद्द्रसप्तदशस्वपि ॥

७, अष्टमे च द्वादशसु स्यातां आग्नीध्रलीयकौ ।
नवमे तु हविर्धानं सार्धारत्निचतुष्टये ॥

८, दशमे प्रागवदाग्नीध्रमुत्करोऽथ त्रयोदशे ।
मनुषु स्याद्विपर्यस्य प्रागवद्धानं चतुर्दशे ॥

९, षोडशे वह्निपुच्छं स्याच्छङ्कुस्तद्दक्षपार्श्वतः ।
उत्तरेऽपि च शङ्कुस्स्यात्पुरुषमात्रे भवेत्तथा ॥

१०, शुल्बान्तरेणाग्निमानं षोडशे विंशताविह ।
षोडशस्वर्धहीनेषु शामित्रस्स्यादुदक्स्थले ॥

११, अन्तिमे द्वादशस्वंसौ चात्वालोऽंसादुदक्क्रमे ।
सर्वत्र शम्या चात्वाल इति बौधायनोऽब्रवीत् ॥

१२, दक्षिणे तु हविर्धाने पश्चात् सार्धक्रमद्वये[५५] ।
पादोनद्वितयं पार्श्वेऽरत्नौ तूपरवाः स्मृताः ॥[५६]

१३, अर्धप्रादेशतस्तेषां भ्रमणं कोणशङ्कुषु ।[५७]
अग्रेणोपरवांस्त्यक्त्वा पादोनप्रक्रमत्रयम् ॥

१४, शम्यामात्रा चतुस्रक्तिः खरः शिष्टस्तु सञ्चरः ।
औदुम्बरी सदोमध्ये पृष्ठ्यायाया दक्षिणतः क्रमे ॥

१५, इत्यरत्निप्रमाणेन साग्निकी वेदिरीरिता ।
कपर्दिभाष्यमालोक्य कारिका रचिता इमाः ॥

---

५५. पश्चादर्धक्रमद्वये इति पाठा० । ५६. त्यक्त्वा तु पार्श्वयोश्चैवं पादहीनक्रमद्वयम् । इति पाठा० ।

५७. अरत्निमात्रं मध्ये.स्यादुपरवाणां तु लक्षणम् ॥ इति पाठा० ।

**प्रायणीयान्ते तु वेदिः स्यात् विमिमेत्वादिका मता ।**

**शिखण्डान्ता न यूपः स्यात् यत्प्राग्वित्तायनीत्यतः ॥**

प्राग्वंशस्य मध्यमाल्लालाटिकादित्यादि चतुश्शिखण्डेत्येतदन्तं करोति । वेदिमाने ब्रह्मा दक्षिणत आस्ते ।

ततः प्रायणीयाया ध्रौवादित्येतदादि कर्म प्रतिपद्यते । तृतीयं पत्न्यै प्रयच्छति तत्सा गृहेषु निदधातीत्यन्तम् । अध्वर्युः–अत्र आदित्योपस्थानं **सूर्यस्य चक्षुः --- विपश्चिता** । राज्ञो निवपनादि कर्म प्रतिपद्यते । उत्तरवेदिदेशे उपरवदेशे वा लोहितमित्यादि । सोमविक्रयिणे राजानं प्रदाय पणते इत्यन्तम् । ***सोम विक्रयिन् क्रय्यस्ते सोमा*** इत्यादि प्रकृतिवत्क्रयकल्पः । द्वादशशतदक्षिणापक्षे दशभिः क्रयः । सहस्रदक्षिणापक्षे त्रिंशता क्रयः । अध्वर्युः **सोमं ते क्रीणामि --- अभिमातिषाहं** इति जपित्वा । **गवा ते क्रीणानि** । **एषा** इति सोमक्रयिणीं निर्दिश्य । ***तस्या आत्मा --- बन्धुः*** इति जपति । ***भूयो वा अतः ।*** षड्विंशत्या गोभिस्ते क्रीणानि । ***भूयो वा अतः ।*** **शुक्रं ते शुक्रेण --- गोः । हिरण्येन ते क्रीणानि ।** ***भूयो वा अतः ।*** **तपसस्तनूरसि । छागया ते क्रीणानि**[५८] **।** ***भूयो वा अतः ।*** **वाससा ते क्रीणानि ।** न भूयः[५९] **अस्मे चन्द्राणि** इत्यादि समानम् । आतिथ्यया प्रचर्याग्निं मिमीते । आतिथ्यायां समाप्तायां मार्जनान्तेऽग्निमानम्[६०] । ब्रह्माग्नौ मीयमाने दक्षिणत आस्ते ।

**[ एकविधाग्नेः पुरुषप्रमाणम्– ४३ अङ्गुलाः २८ तिलाः । एकविधाग्नेः प्रक्रमप्रमाणम् १० अङ्गुलाः ३२.५ तिलाः । द्विविधाग्नेः पु.प्र.– ६१ अं ३३ ति । द्विविधाग्नेः प्रक्र. प्र.– १५ अं १६ ति । त्रिविधाग्नेः पु. प्र.–७५ अं ३१ ति । त्रिविधाग्नेः प्रक्र. प्र.– १८ अं ३३ ति । सार्धसप्तविधाग्नेः पु. प्र.–१२०**

---

५८. छागेन ते क्रीणानि इति पाठा० ।

५९. सहस्रदक्षिणापक्षे चतुर्विंशत्या क्रयपक्षः सूत्रकारेण विकल्पेनोक्तः । तत्पक्षे सोमक्रयण्या क्रयणानन्तरं त्रयोविंशत्या गोभिस्ते क्रीणानि । न भूयः । अस्मे चन्द्राणीत्यादि इति प्रयोगक्रमः ॥

६०. हविष्कृता वाचं विसृज्येति वाजसनेयकम् इति सूत्रकारेण विकल्प उक्तः । अत्र कपर्दिभाष्यम् – आतिथ्यायां हविष्कृता वाचं विसृज्य सोमं च प्रवेश्याग्निं राजानं चान्तरेण मा सञ्चारिष्टेत्येवमन्त्रं कृत्वा अग्निमानाद्याग्निकं सिकताव्यूहनान्तं कृत्वातिथ्या परिसमाप्तिः इति ।

अं । सार्धसप्तविधाग्नेः प्र. प्र.– ३० अं । सार्धाष्टविधाग्नेः पु. प्र.– १२७ अं २५ ति । सार्धाष्टविधाग्नेः प्र. प्र.– ३१ अं ३२ ति । सार्धनवविधाग्नेः पु. प्र.– १३५ अं २ ति । सार्धनवविधाग्नेः प्र. प्र.– ३३ अं २६ ति ।]

## ॥ पक्षिविहरणकारिका: ॥

१, शिरोऽग्रयूपयोर्मध्ये द्वादशाङ्गुलमीरितम् ।[६१]
शङ्कुः शिरोग्रे तत्पश्चात् प्रक्रमे प्रक्रमे दश ॥

२, तत्पश्चात् त्रिषु पुच्छाग्रं प्रक्रमैरेव मीयते ।
शिर आरभ्य पुच्छान्तं शङ्कवो द्वादश स्मृताः ॥

३, पञ्चविंशकसूत्रे तु चिह्नं द्वादशसु स्मृतम् ।
पञ्चकं पाशयोर्मध्ये पुच्छाद्यैरेव मीयते ॥[६२]

४, आद्ये चतुर्षु पुच्छाग्रमेकस्मिन् पूर्वकेऽप्ययः ।
पक्षतिस्त्रिषु तुर्ये स्यात् तत्र पक्षाङ्गुलीयकौ ।

५, सहपादेषु दशसु सपादैकादशस्वपि ।
एवमेवोत्तरत्रापि तथैव विमितिर्भवेत् ।

६, पञ्चमादि चतुर्ष्वेवं द्वौ द्वौ पक्षाङ्गुलीयकौ ।
सहपादेषु दशसु सपादैकादशस्वपि ।

७, पक्षतिश्चाष्टमे व्यत्यस्यैकस्मिन् दशमेऽप्ययः ।
एकादशेप्येवमेव दक्षिणोत्तरयोः क्रमे ॥

---

६१. यूपावटीयतः पश्चादवशिष्य तु सञ्चरम् इति पाठा० । एष सार्धसप्तविधाग्निविषयः । पूर्वोक्तस्यैकविधाग्ने- र्वेदिमानकारिकारीत्या षोडशे शङ्कौ वह्निपुच्छं भवति । तदा शिरोऽग्रयूपयोर्मध्येऽन्तरालमधिकं भवति । विस्तरेणास्य विवेचनं ४७५ पृष्ठे द्रष्टव्यम् ।

६२. विमानपाशयोर्मध्यं भवेत्प्रक्रमपञ्चकम् ॥ इति पाठा० ।

८, एकादशे च मूर्ध्नोऽंसौ पक्षयोर्नमनं स्फुटम् ।

द्वादशे च शिरोऽग्रीये सूत्रमायम्य शङ्कुषु ।

९, प्रदक्षिणक्रमेणैव स्पन्द्या स्याच्छिरसोऽवधि ।

शिरोऽग्रचतुरस्रयोरग्नीशानदलांस्त्यजेत् ॥[६३]

१०, पक्षाग्रयोः प्रक्रमेण चतुरस्राणि कारयेत् ।

व्यवलिख्याक्ष्णया तानि अग्नीशानदलांस्त्यजेत् ॥

## दर्भस्तम्बे आहुतयः :-

समूलं हरितं दर्भस्तम्बमाहृत्य मध्येऽग्नेर्निखाय जुह्वां पञ्चगृहीतं गृहीत्वा दर्भस्तम्बे पञ्चाहुतीर्जुहोति **सजूरब्दोऽयावभिर्घृतेन स्वाहा** । अब्दायेदम् । **सजूरुषा अरुणीभिर्घृतेन स्वाहा** । उषस इदम् । **सजूस्सूर्य एतशेन घृतेन स्वाहा** । सूर्यायेदम् । **सजोषावश्विना दꣳसोभिर्घृतेन स्वाहा** । अश्विभ्यामिदम् । **सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा** । अग्नये वैश्वानरायेदम् ।

## अग्निमानम् :-

यावान् यजमान ऊर्ध्वबाहुः, तावता वेणुनाग्निं विमिमीते[६४] । सपादान् त्रीन्प्राचः पुच्छप्रभृति । दक्षपक्षाग्रादारभ्य अर्धादिकपञ्चपुरुषानष्टमांशं चोदङ्नीत्वा[६५] । एकविधः प्रथमोऽग्निः द्विविधो द्वितीयः । त्रिविधस्तृतीयः । त एवमेवोद्यन्त्यैकशतविधात् । तदु ह वै सप्तविधमेव चिन्वीत सप्तविधो वाव प्राकृतोऽग्निः । तत ऊर्ध्वमेकोत्तरानिति वाजसनेयकम् ।

## अग्निक्षेत्राक्रमणम् :-

**स्योना पृथिवी भवानृक्षरा निवेशनी । यच्छा नश्शर्म सप्रथाः ॥ बढित्था पर्वतानां**

---

६३. पक्षाग्रचतुरस्राणां अग्नीशानदलांस्त्यजेत् ॥ इत्येव मातृकाग्रन्थपाठः । नैषः साधुः । एतदनन्तरश्लोके उच्यमानत्वात् । तस्मात् शुल्बसूत्रतद्व्याख्याऽनुसारोऽयं पाठः कल्पितः ।

६४. एषः सार्धसप्तविधाग्निविषयः । इतरविधाग्नीनां दण्डप्रमाणानि पूर्वमेव दत्तानि ।

६५. अयं आन्ध्रपाठानुसारी । अन्यत्र सर्वत्र एवं – त्रीन् प्राचः चतुर उदीचः । पुरुषमात्राणि पक्षपुच्छानि । आत्मा चतुःपुरुषः । अरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयति । एवमुत्तरत उत्तरम् । प्रादेशेन वितस्त्या वा पश्चात्पुच्छम् इति । एष तु प्रकृतिचयनविषयकः । प्रकृतिचयनविषयः भूमिकायां द्रष्टव्यः ।

**खिद्रं बिभर्षि पृथिवि । प्र या भूमि प्रवत्वति मह्ना जिनोषि महिनि** एताभ्यां विमितमग्निमाक्रमन्ते अध्वर्युब्रह्मयजमानाः । **सं वरत्रा दधातन निराहावान् कृणोतन । सिञ्चामहा अवटमुद्रिणं वयं विश्वाहादस्तमक्षितं** इति सम्प्रेष्यति ।

**लाङ्गलोच्छ्रयणम् :-**

**निष्कृताहावमवट ँ सुवरत्र ँ सुषेचनम् । उद्रिण ँ सिञ्चे अक्षितं** अवटादुदकमाहावेषूत्सिञ्चति । प्रत्याहावं मन्त्रावृत्तिः । तेषु बलीवर्दान् पाययन्ति । उद्योजनमन्तर्याममीषां खगल्यं शफम् अष्ट्रां तालं प्रतीनाहमुभे मण्डुक्यौ युजौ इति युगलाङ्गलं सम्प्रसारयति । **सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया ॥ युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्या पक्वमायत्** द्वाभ्यां सीरं युनक्ति । षड्गवं द्वादशगवं चतुर्विंशतिगवं वा । ***उष्टारयोः पिल्वयोरथो आबन्धनीययोः । सर्वेषां विद्म वो नाम वाहाः कीलालपेशसे***[६६] युक्तानभिमन्त्र्य । ***उदस्थात् गोजिद्धनजिदश्वजिद्धिरण्यजित्सूनृतया परीवृतः । एकचक्रेण सविता रथेनोर्जो भागं पृथिवी मेत्वा पृणन्***[६७] लाङ्गलमुच्छ्रयति ।

**ब्रह्मवर्महोमः :-**

जुह्वां सकृत्सकृद्गृहीत्वा **ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवस्स्वाहा** । ब्रह्मण इदम् । ***अनाप्ता यापः***[६८] ***प्रथमा यस्यां कर्माणि कृण्वते । वीरान्नो अत्र मादभ ँस्तद्व एतत्पुरोदधे स्वाहा*** । अद्भ्य इदम् । ***पर्यूषु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः । द्विषस्तरध्या ऋणयान ईयसे***[६९] ***स्वाहा*** । सोमायेदम् । ***सहस्रधारेव ते समस्वरं दिवो नाके मधुजिह्वामसश्चतः***[७०] । ***अस्यस्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्तु सेतवस्स्वाहा***[७१] । सोमायेदम् । शालामुखीये ब्रह्मवर्माणि जुहोति ।

---

६६. कीलालपेशसः इति M.M. पाठः ।

६७. पृथिवी नेत्वा पृणन् इति पाठा० ।

६८. *अनाप्ता या वः* इति पाठादयं वरीयान् । अद्भ्य इदमिति उद्देशत्यागलिङ्गात् ।

६९. *द्विषस्थ रूध्या ऋणया ईयते स्वाहा* इति पाठा० ।

७०. *मधुजिह्वा असश्चतः* इति पाठा० ।

७१. *सन्ति सेतवस्स्वाहा* इति पाठा० ।

**विमितस्याग्नेराक्रमणम् :-**

*मलिम्लुचो नामासि त्रयोदशो मास इन्द्रस्य वर्मासीन्द्रस्य शर्मासीन्द्रस्य वरूथमसि तं त्वा प्रपद्ये । गायत्रीं लोमभिः प्रविशामि त्रिष्टुभं त्वचा प्रविशामि जगतीं माꣳसेन प्रविशामि अनुष्टुभमस्थ्ना*[७२] *प्रविशामि पङ्क्तिं मज्जा प्रविशाम्यैन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति सूराः । तन्नस्त्रायतां तन्नो विश्वतो महदायुष्मन्तो जरामुपगच्छेम देवाः* विमितमग्निमाक्रमन्ते ।

**लाङ्गलकर्षणम् :- (कर्षणक्रमपटः ५४ पृष्ठे दर्शितः)**

पुच्छदेशमध्वर्युः बलीवर्दा कीनाशाः । **लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतित्सरु । उदित्कृषति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहनम् ॥ शुनं नः फाला वि तुदन्तु भूमिꣳ शुनं कीनाशा अभियन्तु वाहान् । शुनं पर्जन्यो मधुना पयोभिश्शुनासीरा शुनमस्मासु धत्तम्** द्वाभ्यां कृषति । ब्रह्मा कृष्यमाण ओप्यमाने दक्षिणत आस्ते । कीनाशा बलिवर्दानजन्ति । पुच्छाच्छिरोधि कृषति । **कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः** उत्क्षिप्य लाङ्गलं प्रदक्षिणमावर्तयन् जपति । पश्चाद्द्रुत्वा कृष्टां सीतामुत्तरेण **लाङ्गलं पवीरवं --- अस्मासु धत्तम्** इति पुनर्द्वाभ्यां कृषति । उत्क्षिप्य लाङ्गलं पुनश्च प्रदक्षिणमावर्तयन् **कामं कामदुघे---प्रजाभ्यः** इति जपति । पुनः पश्चाद्द्रुत्वा कृष्टां द्वितीयां सीतामुत्तरेण **लाङ्गलं पवीरवं --- अस्मासु धत्तम्** इति पुनर्द्वाभ्यां कृषति । न कामम् ।

**द्वादश सीतानां करणम् :-**

तिस्रस्तिस्रस्सीताः संहिताः उत्तरोत्तरतः कृषति । मध्येऽसम्भिन्ना भवन्ति । दक्षिणात्पक्षादुत्तरम्[७३] ।

---

७२. *अनुष्टुभमस्था* इति पाठा० ।

७३. पक्षयोः कर्षणस्य विवृतरूपं क्वचिन्मातृकाग्रन्थेषूपलभ्यते । तद्यथा - अथैवमेव दक्षिणपक्षाग्रादारभ्य उत्तरपक्षाग्रपर्यन्तम् लाङ्गलं पवीरवं --- अस्मासु धत्तम् इति द्वाभ्यां कृषति । उत्क्षिप्य लाङ्गलं प्रदक्षिणमावर्तयन् कामं कामदुघे-----प्रजाभ्यः इति जपति । पुनश्च लाङ्गलं इति द्वाभ्यामुत्तरपक्षाग्रादारभ्य दक्षिण पक्षाग्रपर्यन्तं पूर्वकृष्टां सीतां पूर्वेण कृषति । पुनश्च कामं कामदुघे इति उत्क्षिप्य लाङ्गलं प्रदक्षिणमावर्तयन् कामं कामदुघे---प्रजाभ्यः इति जपति । पुनश्च लाङ्गलं इति द्वाभ्यां दक्षिणपक्षाग्रादारभ्य उत्तरपक्षाग्रपर्यन्तम् द्वितीयां सीतां पूर्वेण कृषति । ततो न प्रदक्षिणं न कामम्- इति ।

उत्तरस्माद्दक्षिणम् । पक्षयोः कर्षणे प्रत्यागमनेऽपि च कर्षणम्। दक्षिणायै श्रोणेरुत्तरमंसम् । उत्तरायै श्रोणेः दक्षिणमंसम्[७४] । एतद्वा विपरीतम् । **विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम सुवरगन्म** दक्षिणेऽंस उत्तरे[७५] वा बलीवर्दान् विमुच्य । तानुदीचः प्राचो वा उत्सृज्य अध्वर्यवे ददाति । अध्वर्यो बलीवर्दांस्ते ददामि । तानध्वर्युः सप्तदशकृत्वः अपान्य व्यावृत्य रुद्राय गामिति प्रतिगृह्णाति । तूष्णीं वा ।

## ओषधिवपनम् :–

## (ग्राम्यानामारण्यानां च)

पञ्चदशोदपात्रान्निनयति । द्वादश कृष्टे त्रीनकृष्टे । एकैकं पात्रं द्वादशस्वपि सीतासु निनयत्येवमकृष्टेऽपि त्रीन् । **या जाता ओषधयः** इति चतुर्दशभिः ओषधीर्वपति । अनुसीतमित्युक्तम् । तिलमाषव्रीहियवाः प्रियंग्वणवो गोधूमा इति ग्राम्याः । वेणुश्यामाकनीवारा जर्तिलाश्च गवीधुका आरण्यजा मर्कटका[७६] विज्ञेया । गार्मुतसप्तमाः कुलित्थसप्तमा वा इत्यारण्याः । सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे ।

**या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामह॒ँ शतं धामानि सप्त च** द्वादशसु सीतासु तिलान् वपति । एवमितरान् । **शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथा शतकृत्वो यूयमिमं मे अगदं कृत** माषान् । **पुष्पावतीः प्रसूवतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः** व्रीहीन् । **ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । रपा॒ँसि विघ्नतीरितरपश्चातयमानाः** यवान् । **अश्वत्थे वो**

---

७४. अस्य कर्षणस्य विवृतरूपं क्वचिन्मातृकाग्रन्थेषूपलभ्यते । तद्यथा – अथ दक्षिणश्रोणिमारभ्य उत्तरांसपर्यन्तं **लाङ्गलं पवीरवं --- अस्मासु धत्तम्** इति द्वाभ्यां कृषति । प्रदक्षिणमावर्तयन् **कामं कामदुघे --- प्रजाभ्यः** इति जपति । दक्षिणां श्रोणिं प्राप्य तामारभ्य तामुत्तरेण (कृष्टां सीतामुत्तरेण) उत्तरांसपर्यन्तं लाङ्गलमिति द्वाभ्यां कृषति । पुनः प्रदक्षिणमावर्तयन् काम कामदुघ इति जपति । पुनरुत्क्षिप्य लाङ्गलं दक्षिणां श्रोणिं प्राप्य तामारभ्य तामुत्तरेण (द्वितीयां सीतामुत्तरेण) उत्तरांसपर्यन्तं लाङ्गलमिति द्वाभ्यां कृषति । ततो न प्रदक्षिणं, न कामम् । एवमेव उत्तरां श्रोणिमारभ्य दक्षिणांसपर्यन्तं तिस्रः सीताः कृषति । एवमादित आरभ्य द्वादश सीताः संपद्यन्ते इति ॥

७५. यदा कर्षणं दक्षिणायै श्रोणेरुत्तरमंसम्, तदनन्तरं उत्तरायै श्रोणेः दक्षिणमंसं तदा दक्षिणेऽंसे उत्सर्गः । विपरीतपक्षे उत्तरेऽंसे उत्सर्गः ।

७६. मर्कटा इति प्राचीनकारिकापाठः ।

**निषदनं पर्णे वो वसतिः कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम्** प्रियङ्गून् । **यदहं वाजयन्निमा ओषधीर्हस्त आ दधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा** अणून् । **यदोषधयः सङ्गच्छन्ते राजानस्समिताविव । विप्रस्स उच्यते भिषग्रक्षोहामीवचातनः** गोधूमान् । एते ग्राम्याः ॥

अथारण्याः । **निष्कृतिर्नाम वो माताथा यूय॒ स्थ सङ्कृतीः । सराः पतत्रीणीस्स्थन यदामयति निष्कृत** वेणून् । **अन्या वो अन्यामवत्वन्यान्यस्या उपावत । तास्सर्वा ओषधयः सँव्विदाना इदं मे प्रावता वचः** श्यामाकान् । **उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धन॒ सनिष्यन्तीनामात्मानं तव पूरुष** नीवारान् । **अति विश्वाः परिष्ठास्स्तेन इव व्रजमक्रमुः । ओषधयः प्राचुच्यवुर्यत्किं च तनुवा॒ रपः** जर्तिलान् । **यास्त आतस्थुरात्मानं या आविविशुः परुःपरुः । तास्ते यक्ष्मं वि बाधन्तामुग्रो मध्यमशीरिव** गवीधुकान् । **साकं यक्ष्म प्रवत श्येनेन किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया** मर्कटकान् । **अश्वावती॒ सोमवतीमूर्जयन्तीमुदोजसम् । आ वित्सि सर्वा ओषधीरस्मा अरिष्टतातये** गार्मुतान् । सप्तारण्या अकृष्टे । यामोषधीनां नाधिगच्छेत् तस्यास्स्थाने यवान् मधुमिश्रान् वा वपेत् । ***उप्ता मेऽसि*** इति वा मनसा ध्यायेत् ।

## ओषधीनां प्रोक्षणम् :-

अधिगतायां यः प्रथमः इध्म आगच्छेत्तस्मिन्नेनामुपसन्नह्येत्[७७] । ये वनस्पतीनां फलग्रहयस्तानिध्म उपसन्नह्य प्रोक्षेत्[७८] । **मा नो हिं॒सीत् जनिता यः पृथिव्या** इति चतसृभिः दिग्भ्यो लोष्टान्

---

७७. "अधिगतायां लब्धायाम् । वपनक्रियायां समाप्तायां यः प्रथम इध्म आगच्छति औपसदः तस्मिन्निध्मे एतां बध्नाति । क्षिपति च इध्मेन सह" इति कपर्दिभाष्यम् ।

७८. "ये वनस्पतीनां फलग्रहयः फलान्येव (पुष्पमन्तरेण) येषां केवलानि ते वनस्पतयः वटोदुम्बराद्याः । तेषामपि ये प्रसूतफलास्त इष्यन्ते । तानिध्मे बध्नाति औपसत्के प्रथमे इध्मे । प्रोक्षेदिति इध्मसंस्काराणां प्रदर्शनार्थम् । क्षेपश्च सहेध्मेन" इति कपर्दिभाष्यम् । सायणाचार्यैस्तु एतत्प्रकरणं एवं व्याख्यातं "अत्र अनुप्तस्याप्युप्तत्वसिद्ध्ये वनस्पतीनां मध्ये ये पुष्पमन्तरेण फलं गृह्णन्ति उदुम्बरादयः तानपि आदाय इध्मेन सह सन्नह्य प्रोक्षणं कुर्यात्" इति । कपर्दिमते तु वपनकाले अलब्धानामोषधीनां वपनोत्तरं लब्धानामिध्मेन सह बन्धनम् । फलग्रहीणां वनस्पतीनां तु नित्यमिध्मेन बन्धनम् ।

समस्यति ये अन्तर्विधाद्बहिर्विधं आपन्ना भवन्ति[७९]। यं द्विष्याद्यत्र स स्यात्तस्यै दिशो जघन्यं लोष्टमाहरेत् । **इषमूर्जमहमित आदद** इति । **मा नो हि॑सीज्जनिता यः पृथिव्या यो वा दिव॑ सत्यधर्मा जजान । यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम** पश्चाद्भूतानां समासः । **अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितोऽवसर्पतु** उदग्भूतानां समासः । **अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यद्यज्ञियम् । तद्देवेभ्यो भरामसि** प्राग्भूतानां समासः । **इषमूर्जमहमित आदद ऋतस्य धाम्नो अमृतस्य योनेः । आ नो गोषु विशत्वौषधीषु जहामि सेदिमनिराममीवाम्** दक्षिणभूतानां समासः । यदि दक्षिणतो द्वेष्यः तदैवं क्रमः । यस्यां दिशि द्वेष्यः तस्यां दिशि भूतस्य लोष्टस्यान्ते समाप्तिः । **घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः । ऊर्जस्वती पयसा पिन्वमानास्मान् सीते पयसाभ्यावव‍ृत्स्व** सकृन्मन्त्रमुक्त्वा सीतान्तरालान्यभिमृशति । उत्तरवेदिं वा ।

## उत्तरवेद्यां सिकतानां निवपनम् :-

अथोत्तरवेदिमुपवपति यावानग्निः **वित्तायनी मेऽसि** इत्यादि । पक्षशिरःपुच्छानामपि परिलेखनम् । तूष्णीं चात्वालं परिलिख्य । देवस्य त्वेति अभ्र्यादानादि **भूतेभ्यस्त्वा** इत्युद्ग्रहणान्तं कृत्वा । **अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो । बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥ इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य । स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसि॑ रयिम् ॥ ऊर्जो नपाज्जातवेदस्सुशस्तिभिर्मन्दस्व धीतिभिर्हितः । त्वे इषस्सन्दधुर्भूरिरेतसश्चित्रोतयो वामजाताः ॥ पावकवर्चाश्शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना । पुत्रः पितरा विचरन्नुपावस्युभे पृणक्षि रोदसी ॥ ऋतावानं महिषं विश्वचर्षणिमग्नि॑ सुम्नाय दधिरे पुरो जनाः । श्रुत्कर्ण॑ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्त॑ राधसे महे । रातिं भृगूणामुशिजं कविक्रतुं पृणक्षि सानसि॑ रयिम्** षड्भिः सिकता न्युप्य । **चितस्स्थ परिचित ऊर्ध्वचितश्श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवास्सीदत** अपरिमिताभिः शर्कराभिराहवनीयचितेरायतनं परिश्रयति यथा गार्हपत्यस्य । **आ प्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य सङ्गथे** सिकता व्यूहति ।

---

७९. कर्षणकाले ये लोष्टाः अग्निक्षेत्रात् बहिर्गताः तानग्निक्षेत्रे पुनः क्षिपतीत्यर्थः ।

ततो व्रतप्रदानम् । यदि पूर्वं व्रतकालो नाधिगच्छेत् । गार्हपत्ये दीक्षितस्येत्यादि । नात्र समिद्द्वयम् । **ये देवा मनोजाताः** । नाभ्यभिमर्शनान्तं कृत्वा । आतिथ्याया ध्रौवादित्येतदादि कर्म प्रतिपद्यते । **अग्ने व्रतपत** इति यजमानोऽवान्तरदीक्षामुपैति । प्रवर्ग्येण प्रचरिष्यन्त इत्यादि सुब्रह्मण्यान्तम् । एतावान् विशेषः । प्रथमौपसत्के इध्मे दशभिरिध्मदारुभिः सह फलग्रहीन् वनस्पतीन् बध्वा निदधाति । ओषधिवपनसमये अनधिगताः पश्चादधिगता ओषधीश्चोपसन्नह्येत[८०] । आहितासु सामिधेनीसमित्सु तूष्णीमेवाधानम्[८१] । पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । **या ते अग्नेऽयाशया तनूः** इत्युपसदाहुतिः।

सुब्रह्मण्यान्ते अग्रेण प्राग्वंशं लोहिते चर्मण्यानडुहे प्राचीनग्रीव उत्तरलोम्नि प्रथमस्याश्चितेरिष्टकाः संसादयति[८२] । अपि वा तिस्रः स्वयमातृण्णाः तिस्रश्च विश्वज्योतिषः । तासां प्रथम द्वितीयतृतीयचिह्नानि कृत्वा ताः दर्भग्रुमुष्टिनाज्येन[८३] व्यवोक्ष्य समुद्यम्य ***चित्यग्निभ्यः प्रणीयमानेभ्योऽनुब्रूहि*** इति सम्प्रेष्यति । यजमानः – पश्चात्पदमात्रेऽवस्थायाभिहिङ्कृत्य । **हिं भूर्भुवस्स्वरो३म् *पुरीष्यासो अग्नयः प्रावणेभिस्सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महो३म्*** त्रिरुपांशु सप्रणवाम् । अपि वा सुमन्द्रम् । व्रजत्सु अनुव्रजेत् । तिष्ठत्सु विसृष्टवाक् प्रणयत इति ब्रूयात् । अध्वर्यवादयः इष्टका आदाय प्रथमायां त्रिरनूक्तायां **हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम** प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति । श्वेतमश्वं* पुरस्तान्नयन्ति । तमनुकृष्णम् । चित्यग्नीनां प्रणीयमानानां ब्रह्मा दक्षिणत एति ।

# ॥ इति चयनस्य पूर्वाङ्गानि ॥

---

८१. सामिधेनीष्वनूच्यमानासु इध्मेन सह आदधाति इति पाठा० ।

८२. प्रथमस्याश्चितेरिष्टकासंसादनपक्षे इष्टकाप्रणयनं प्रतिचिति कार्यम् । अपि वा तिस्रः स्वयमातृण्णाः इति पक्षे तु न तथा । सर्वचित्यर्थे आदावेव प्रणीतत्वात् ।

८३. दर्भग्रुमुष्टिर्नाम प्रभूतो दर्भमुष्टिः । तेन दर्भमुष्टिना आज्येन विविधं अवोक्षणं व्यवोक्षणम् ।

*. 'श्वेताभावे अश्वेते । अश्वाभावे अनडुहि' (कात्या. श्रौ .सू १७–३–२०) इति कात्यायनेन अनुग्रहः दर्शितः ।

# ॥ अथ प्रथमा चितिः ॥

अध्वर्युः – **प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीद** उत्तरवेदिमभिमृश्य । **मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजां मयि वर्चो दधाम्यरिष्टास्स्याम तनुवा सुवीराः ॥ यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ आविवेश । तमात्मन् परिगृह्णीमहे वयं मा सो अस्माꣳ अवहाय परागात्** द्वाभ्यामात्मन्यग्निं गृहीत्वा[८४] । **यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन्** अध्वर्युः स्वयञ्चित्याभिमृशति[८५] ।

इष्टकाभिरग्निं चिनोति अध्वर्युर्यजमानो वा । स्वयं चिन्वन्नात्मन्नग्निं[८६] गृह्णीते न स्वयञ्चित्याभिमृशति । प्राचीरुपदधाति प्रतीचीरुपदधातीति गणेषु रीतिवादः । प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तुर्मुखवादः । खण्डकृष्णादीष्टकादोषनिर्हरणार्थं यजुर्भ्रेषप्रायश्चित्तं करिष्ये । दक्षिणाग्नौ **भुवस्स्वाहा** । वायव इदम् । आहवनीये सर्वप्रायश्चित्तं हुत्वा । प्रतिचित्ययं विधिः[८७] । दक्षिणतश्श्वेतोऽश्वस्तिष्ठति तमालभ्य ।

अथोपधानम् **इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिं तया देवतयाङ्गिरस्वद्ध्रुवा सीद** उत्तरेण पुच्छाप्ययं अन्तर्विध आक्रमणं प्रतीष्टकामुपदध्यात् । ब्रह्मा दक्षिणत आस्ते । उत्तरतः पश्चाद्वोपचारोऽग्निः । **तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीस्स्वाहा** । वरुणायेदम् । शालामुखीये हुत्वा । **वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोश्श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीः** सर्वत्र आरोहन् प्रत्यवरोहंश्च जपति । सकृद्वान्ततः । अश्वेन सह

---

८४. आत्मस्थाग्नेरनपक्रमणाय धारणमतिसन्धायेत्यर्थः इति M.M पाठः । अत्र कपर्दिभाष्यम् – द्वाभ्यामात्मनि यो अग्निः संगृह्यते **मा सो अस्माꣳ अवहाय परागात्** इति । चेष्यमाणमग्निमात्मनि गृह्णातीत्यर्थः । शातपथब्राह्मणे समानप्रकरणे आत्मन्नग्निं गृह्णीते चेष्यन् इति श्रूयते । अस्य सायणभाष्यम् – चेष्यन् चयनं करिष्यन् अध्वर्युः आत्मन् आत्मनि अग्निं गृह्णीते मन्त्रेण धारयन् इति । अनेन अग्निधारणं नाम मन्त्रोच्चारणमेव नान्यत् किञ्चन इति गम्यते । तस्मात् मन्त्रार्थानुसन्धानपूर्वकं विराट्पुरुषं चीयमानमग्निं हृदये भावयेत् इत्यर्थः ।

८५. स्वयंचितिरिति यास्ते अग्ने इत्यस्य मन्त्रस्य नाम । ८६. आत्मन्यग्निं इति पाठा० ।

८७. आन्ध्रद्राविडप्रयोगग्रन्थेषु एतत् प्रायश्चित्तं नोपलभ्यते । अत्र कपर्दिभाष्यम्–खण्डादयः प्रतिनिधित्वेनापि न क्रियन्ते प्रतिषेधात् त्वरमाणोऽपि । उपदेशस्तु खण्डाः प्रतिनिधित्वेन कार्याः। भुव इति प्रायश्चित्तं कृत्वा । इष्टकात्वसामान्यात् इति ॥

आक्रमण्यारोहणम् । प्राञ्चमश्वम् **अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह । बृहस्पतिस्सविता तन्म आह पूषा माऽधात्सुकृतस्य लोके** अश्वस्य दक्षिणेन पदा दर्भस्तम्बमाक्रमय्य । प्रदक्षिणमावर्तयित्वा । **यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन्** पुनरेवाक्रमयति । **अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्वमानम् । वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व तया देवतया** अन्तरिक्षरूपमिति ध्यात्वा । अश्वस्य पदे पुष्करपर्णमुत्तान–मुपधाय । ***अपां निधिं गाय*** इति सम्प्रेष्यति । ***सत्यसाम गाय*** इति वा । **ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः । स बुध्निया उप मा अस्य विष्ठास्सतश्च योनिमसतश्च विवस्तया** आदित्यमण्डलमिति ध्यात्वा पुष्करपर्णे उपरिष्टान्निर्बाधं रुक्ममुदक्छिद्रमुपधाय । **हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम तया** तस्मिन् हिरण्मयं पुरुषं प्राचीनमुत्तानं दक्षिणेनातृण्णं प्राङ्मुख उपधाय । **आदित्यमण्डलस्थः पुरुष** इति ध्यात्वा[८८] । ***पुरुषसाम गाय*** इति सम्प्रेष्यति । **द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः** पुरुषमभिमृश्य । **नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यस्सर्पेभ्यो नमः ॥ येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदः कृतं तेभ्यस्सर्पेभ्यो नमः ॥ या इषवो यातुधानानां ये वा वनस्पतीꣳरनु । ये वाऽवटेषु शेरते तेभ्यस्सर्पेभ्यो नमः** तिसृभिरभिमन्त्र्य ।

जुह्वां पञ्चगृहीतं गृहीत्वा **कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन । तृष्वीमनु प्रसितिं दूणानोस्तासि विध्य रक्षसस्तपिष्ठैस्स्वाहा** दक्षिणमंसम् । अग्नये रक्षोघ्न इदम् । **तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः । तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो वि सृज विश्वगुल्कास्स्वाहा** उत्तरां श्रोणिम् । अग्नये रक्षोघ्न इदम् । **प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशꣳसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्स्वाहा** दक्षिणां श्रोणिम् । अग्नये रक्षोघ्न इदम् । **उदग्ने तिष्ठ प्रत्याऽऽतनुष्व न्यमित्राꣳ ओषतात्तिग्महेते । यो नो अरातिꣳ**

---

८८. सर्वत्र ध्यात्वा उपदधातीत्यर्थः ।

**समिधान चक्रे नीचा तं धक्ष्यतसन्न शुष्कꣳ स्वाहा** उत्तरमंसम् । अग्नये रक्षोघ्न इदम् । **ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून्त्स्वाहा** मध्यम् । अग्नये रक्षोघ्न इदम् । पञ्चभिः उत्तरवेदिवत् पुरुषं व्याघारयति हिरण्यनिधानमकुर्वन् । **भूतेभ्यस्त्वा** स्रुचमुद्गृह्य[८९] । ***अग्नेस्त्वा तेजसा सादयामि तया*** आज्यस्य पूर्णां कार्ष्मर्यमयीं स्रुचं दक्षिणेन हिरण्मयं पुरुषमुपदधाति । ***इन्द्रस्य त्वौजसा सादयामि तया*** दध्नः पूर्णामौदुम्बरीं स्रुचमुत्तरेण पुरुषम् । **अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति** कार्ष्मर्यमयीमुपतिष्ठते । **भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम्** औदुम्बरीमुपतिष्ठते । अत्र कृणुष्व पाज इति पञ्चभिः पुरुषवद्रुक्मं व्याघार्य ।

**प्रथमस्वयमातृण्णाया उपधानम् :-**

**ध्रुवाऽसि धरुणास्तृता विश्वकर्मणा सुकृता । मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृꣳह** स्वयमातृण्णामभिमृश्य । अश्वेनावघ्राप्य[९०] **प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्रायाग्निस्त्वाभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद । भूः** आसीनो मध्येऽग्नेरुपदधात्यविदुषा ब्राह्मणेन सह । अविद्वांसमध्यापयेदन्यः । **चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधस्समुद्रस्य वयुनस्य पत्मञ्जुहोमि विश्वकर्मणे विश्वाहाऽमर्त्यꣳ हविस्स्वाहा ।** विश्वकर्मण इदम् । स्वयमातृण्णायां हुत्वाभिप्राणिति[९१] । यजमानद्रव्याद्गृहीत्वा अविद्वान्ब्राह्मणो वरं ददात्यध्वर्यवे एकं द्वौ त्रीन् वा । रुद्राय गामिति प्रतिग्रहः तूष्णीं वा[९२] । आसीनः प्रथमां

---

८९. प्रयोगग्रन्थेषु व्याघारणाङ्गत्वेन भूतेभ्यस्त्वा इति स्रुच उद्ग्रहणमुक्तमस्ति । भाष्येषु वृत्तिषु च अस्य उल्लेखो नास्ति ।

९०. अश्वेनोपघ्राप्य इति पाठा० A.V पाठश्च ।

९१. तस्या उपरि निश्वसितीत्यर्थः । अनुप्राणिति इति पाठान्तरम्, तस्याप्येष एव अर्थः ।

९२ इदं केवलं M.M पाठे वर्तते ।

स्वयमातृण्णामुपदधाति । ऊर्ध्वज्ञुर्द्वितीयां तिष्ठंस्तृतीयाम् । *स्वयमातृण्णायां साम गाय* इति सम्प्रेष्यति । एवं द्वितीयां तृतीयां चोपधाय सम्प्रेष्यति । **तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहि तया** हिरण्येष्टकाम् । **पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु तया** मण्डलेष्टकाम् । *भूरसि भुवनस्य रेत इष्टकास्स्वर्गो लोको वाचा त्वान्वारोहाम्यग्निर्ज्योतिर्ज्योतिरग्निस्तया । सूरसि सुवनस्य रेत इष्टकास्स्वर्गो लोको मनसा त्वान्वारोहामि सूर्यो ज्योतिर्ज्योतिस्सूर्यस्तया* अन्वारोहे द्वे ।

**काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ या शतेन प्रतनोषि सहस्रेण वि रोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयं तया** द्वाभ्यां दूर्वेष्टकां सलोष्टं हरितं दूर्वास्तम्बमप्रच्छिन्नाग्रं यथास्योपहितस्य स्वयमातृण्णामग्रं प्राप्नुयात्[९३] । प्रबाहुगिष्टकायां हिरण्यशकलावध्यूह्य ।

**यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिस्सर्वाभी रुचे जनाय नस्कृधि ॥ या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिस्सर्वाभी रुचं नो धत्त बृहस्पते तया** द्वाभ्यां वामभृतम् ।

**विराड्ज्योतिरधारयत्तया । सम्राड्ज्योतिरधारयत्तया । स्वराड्ज्योतिरधारयत्तया** तिसृभिः तिस्रो रेतस्सिचः । तासां द्वे प्रथमायां चित्यां यून उपदध्यात् । सर्वा मध्यमायां विवयसः । एकां प्रथमायां एकामुत्तमायां स्थविरस्य । अन्यतरामुपदध्याद्द्वेष्यस्य । यजुषेमां चामूंचोपदधाति मनसा मध्यमाम् ।

**बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपतिस्तया** विश्वज्योतिषम्[९३(अ)] । **अग्नेर्यान्यसि तया । देवानामग्ने यान्यसि तया** द्वे संयान्यौ ।

**मधुश्च माधवश्च वासन्तिकावृतू अग्नेरन्तश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप**

---

९३. स्वयमातृण्णायामग्रं इति पाठा० ।

९३(अ). अत्र चित्यग्निप्रणयनेन प्रणीतानां तिसृणां पादेष्टकानां प्रथमामुपदधाति ।

**ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता येऽग्नयस्समनसोऽन्तरा द्यावापृथिवी वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभि सँविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्** द्वे ऋतव्ये समानतयादेवते । हस्तद्वयेन युगपदुपदधाति । सर्वास्वृतव्यासु अवकामनूपदधाति ।

**अषाढासि सहमाना सहस्वारातीस्सहस्वारातीयतः, सहस्व पृतनास्सहस्व पृतन्यतः । सहस्रवीर्यासि सा मा जिन्व तया** द्वाभ्यामषाढामुपरिष्टाल्लक्ष्माणम् ।

**उदस्य शुष्माद्भानुर्नार्त बिभर्ति । भारं पृथिवी न भूम । प्र शुक्रैतु देवी मनीषा । अस्मत्सुतष्टो रथो न वाजी । अर्चन्त एके महि साममन्वत । तेन सूर्यमधारयन् । तेन सूर्यमरोचयन् । घर्मश्शिरस्तदयमग्निः । पुरीषमसि सम्प्रियं प्रजया पशुभिर्भुवत् । प्रजापतिस्त्वा सादयतु तया** घर्मेष्टकामुपधाय । **यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः । ये ते अग्न इन्दवो या उ नाभयः । यास्ते अग्ने तनुव ऊर्जो नाम । ताभिस्त्व–मुभयीभिस्सँविदानः । प्रजाभिरग्ने द्रविणेह सीद । प्रजापतिस्त्वा सादयतु तया** कुलायिनीम् ।

**कूर्मोपधानम् :–**

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः ॥ मधु नक्तमुतोषसि मधुमत्पार्थिवँ रजः । मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः** तिसृभिः दध्ना मधुमिश्रेण कूर्ममभ्यज्य । **मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिस्तया** पुरस्तात्स्वयमातृण्णायाः प्रत्यञ्चं जीवन्तं कूर्मं प्राङ्मुख उपदधाति । अवकाभिः परीतंस्य जालेन प्रच्छाद्य । शङ्कुभिः परिणिहत्य । ***अपां गम्भीरं गच्छ मा त्वा सूर्यः परीताप्सीन्मो[९४] ऽग्निं वैश्वानरो[९५] ऽघोरः प्रजा अभि विपश्यानु त्वा दिव्या वृष्टिस्सचताँ सँ सर्प त्रीन्थ्समुद्रान् स्वर्गाँल्लोकानपां पतिर्वृषभ[९६] इष्टकानां तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानस्स्वाँय्योनिं यथा–***

---

९४. *परिताप्सीत्* इत्येकः पाठः, *परीताप्सित्* इत्यपरः पाठः ।

९५. *अग्निर्वैश्वानरः* इति पाठान्तरम् ।

९६. *ऋषभ इष्टकानां* इति पाठान्तरम् ।

***यथम्***[९७] उपहितमभिमन्त्रयते ।

## उलूखलादीनामुपधानम् :-

**यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः** प्रादेशमात्रं चतुस्स्रक्त्यौदुम्बरमुलूखलमुत्तरेऽंसे प्रयुनक्ति । अपरिमितं मुसलम् । **उत स्म ते**[९८] **वनस्पते वातो विवात्यग्रमित्**[९९]**। अथो इन्द्राय पातवे सुनु सोममुलूखल** उलूखलं तूष्णीं सर्वौषधस्य पूरयित्वावहत्य परापूय । **इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पा॰सुरे तया** तण्डुलपूर्णमुलूखलं मध्येऽग्नेरुपदधाति । **तद्विष्णोः परमं पद॰ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततं तया** मुसलम् । **दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वान्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्र यच्छ दक्षिणादोत सव्यात्तया** शूर्पम् ।

## वायव्यपशुशिरस उपधानम् :-

अथोखायां पय आनयति । **ध्रुवासि पृथिवि सहस्व पृतन्यतः । स्यूता देवेभि-रमृतेनागास्तया**[१००] अवटे मध्येऽग्नेरुपदधाति । **अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवस्स्वाहा** । अग्नय इदम् । **युक्ष्वा हि देवहूतमा॰ अश्वा॰ अग्ने रथीरिव । नि होता पूर्व्यस्सदस्स्वाहा** । अग्नय इदम् । द्वाभ्यामुखायां हुत्वा पुरुषशिरसि हिरण्यशल्कान्[१०१] प्रत्यस्यति । यदि वायव्यस्य पशोस्स्यात् मुख्यस्य स्थाने तस्मिन् हिरण्यशल्कान् प्रत्यस्यति[१०२] । **द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु सञ्चरन्तं**

---

९७. *अपां गम्भीरं गच्छ मा त्वा सूर्यः परीताप्सीन्मोऽग्निं वैश्वानरः । अघोरः प्रजा अभि विपश्यानु त्वा दिव्या वृष्टिस्सचताम् । स॰ सर्प त्रीन्थ्समुद्रान् स्वर्गाल्लोकानपां पतिः । वृषभ इष्टकानां तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानस्स्वाँय्योनिं यथायथम्* इति वाक्यशः पाठान्तरम् । अस्य मन्त्रस्य बहवो पाठभेदाः मातृकासूपलभ्यन्ते । अत्र दत्तः अस्मद्गुरूणां पाठः ।

९८. उदस्य *ते* इति पाठा० ।

९९. विवात्यग्रमीत् इति पाठान्तरम् ।

१००. अत्र 'न तयेति केचित् । इष्टकास्वपरिगणनात्' इति क्वचिन्मातृकाग्रन्थेषूपलभ्यते ।

१०१. हिरण्यशकलान् इति पाठा० ।

१०२. क्वचिन्मातृकाग्रन्थेषु पुरुषशिरःपक्षः नोक्तः । **"द्वाभ्यामुखायां हुत्वा वायव्यपशुशिरसि हिरण्यशल्कान् प्रत्यस्यति"** इत्येवोपलभ्यते ।

**द्रप्सं जुहोम्यनु सप्त होत्राः** आस्ये हिरण्यशल्कं प्रत्यस्यति । **ऋचे त्वा** दक्षिणेऽक्षिकटे । **रुचे त्वा** सव्ये । **द्युते त्वा** दक्षिणे कर्णे । **द्युते त्वा** सव्ये । **भासे त्वा** दक्षिणस्यां नासिकायाम् । **ज्योतिषे त्वा** उत्तरस्याम् । **समित्स्रवन्ति सरितो न धेनाः । अन्तर्हृदा मनसा पूयमानाः । घृतस्य धारा अभि चाकशीमि । हिरण्ययो वेतसो मध्य आसाम्** शृतातङ्क्येन दध्ना मधुमिश्रेण पशुशिरः पूरयति । **तस्मिन्त्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः । तस्यासते हरयस्सप्त तीरे स्वधां दुहाना अमृतस्य धारां** पशुशिर आदाय ।

**आदित्यं गर्भं पयसा समञ्जन्त्सहस्रस्य प्रतिमां विश्वरूपम् । परि वृङ्धि हरसा माऽभिमृक्षश्शतायुषं कृणुहि चीयमानः ॥ वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञान॑ँ सरिरस्य मध्ये । शिशुं नदीना॑ँ हरिमद्रिबुद्धमग्ने मा हि॑ँसीः परमे व्योमन् ॥ अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः । सपर्वभिर्ऋतुशः कल्पमानो गां मा हि॑ँसीरदितिं विराजम् ॥ वरूत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञाना॑ँ रजसः परस्मात् । मही॑ँ साहस्रीमसुरस्य मायामग्ने मा हि॑ँसीः परमे व्योमन् ॥ यो अग्निरग्नेस्तपसोऽधि जातश्शोचात्पृथिव्या उत वा दिवस्परि । येन प्रजा विश्वकर्मा व्यानट् तमग्ने हेडः परि ते वृणक्तु तया** सर्वेषामुपधानैः पशुशिर उखायां पुरस्ताच्चुबुकं प्राचीनमुत्तानं प्राङ्मुख उपधाय । **चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेस्स्वाहा** दक्षिणेऽक्षिकटे जुहोति । सूर्यायेदम् । **आऽप्रा द्यावापृथिवी अन्तरिक्ष॑ँ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा** सव्ये । सूर्यायेदम् । इत्यर्धर्चाभ्यामक्षिकटयोर्हुत्वा ।

**इमं मा हि॑ँसीर्द्विपादं पशूना॑ँ सहस्राक्ष मेध आ चीयमानः । मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥ इमं मा हि॑ँसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥ इम॑ँ समुद्र॑ँ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हि॑ँसीः परमे व्योमन् । गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥ इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं**

**जनित्रमग्ने मा हिꣳसीः परमे व्योमन् । उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥ अजा ह्यग्नेरजनिष्ट गर्भात्सा वा अपश्यज्जनितारमग्रे । तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन् । शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद** सर्वेषामुत्सर्गैरुपतिष्ठते ।

**नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यस्सर्पेभ्यो नमस्तया** दक्षिणेऽंसे सर्पशिर उपदध्यात् । विषूचीनं पशुशीर्षैः, अपि वा यजुरेव वदेत् नोपदध्यात्[१०३] ।

**पुरुषाकृतिचयनं यजमानोपस्थानं च :–**

***मा छन्दस्तत् पृथिव्यग्निर्देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ प्रमा छन्दस्तदन्तरिक्षं वातो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ प्रतिमा छन्दस्तद्द्यौः सूर्यो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ अस्रीविश्छन्दस्तद्दिशः सोमो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ विराट्छन्दस्तद्वाग्वरुणो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ गायत्री छन्दस्तदजा बृहस्पतिर्देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ त्रिष्टुप् छन्दस्तद्धिरण्यमिन्द्रो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ जगती छन्दस्तद्गौः प्रजापतिर्देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ अनुष्टुप् छन्दस्तदायुर्मित्रो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ उष्णिहा छन्दस्तच्चक्षुः पूषा देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ पङ्क्तिश्छन्दस्तत्कृषिः पर्जन्यो देवता तेनर्षिणा तेन ब्रह्मणा तया ॥ बृहती छन्दस्तदश्वः परमेष्ठी देवता तेनर्षिणा तेन ब्रह्मणा तया*** एताभिर्द्वादशभिस्त्रिरभ्यासं पुरस्तात्प्रतीचीं पुरुषाकृतिं चिनोति पुरुषस्य शिरोऽस्याः शिरो भवति ॥

यजमानः– **सहस्रशीर्षा पुरुषः । सहस्राक्षस्सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ॥ पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति ॥ एतावानस्य महिमा । अतो ज्यायाꣳश्च पूरुषः । पादोऽस्य विश्वा**

---

१०३. "अथो खलूपधेयमेव इति पुनर्वचनात् प्राकृतेऽग्नौ नित्यम्" इति कपर्दिभाष्यम् ॥

**भूतानि । त्रिपादस्यामृतन्दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः । ततो विष्वङ्व्यक्रामत् । साशनानशने अभि ॥ तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥ यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः ॥ सप्तास्यासन्परिधयः । त्रिस्सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् ॥ तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः । तेन देवा अयजन्त । साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः । सम्भृतं पृषदाज्यम् । पशू॒ँस्ता॒ँश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे । छन्दा॒ँसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥ यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ॥ ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्या॒ँ शूद्रो अजायत ॥ चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥ नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौस्समवर्तत । पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथा लोका॒ँ अकल्पयन् ॥ वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन् यदास्ते ॥ धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवँ्विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥ यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः** उपहितां पुरुषेण नारायणेन यजमानः पुरस्तात् प्रत्यङ् तिष्ठन्नुपतिष्ठते ।

**अथापस्याः :-**

अपस्या उपदधाति । **अपां त्वेमन्त्सादयामि तया ॥ अपां त्वोद्मन्त्सादयामि तया ॥ अपां त्वा भस्मन्त्सादयामि तया ॥ अपां त्वा ज्योतिषि सादयामि तया ॥ अपां त्वायने सादयामि तया** पञ्च पुरस्तात्प्रतीचीरपस्या उपदधाति । **अर्णवे सदने सीद तया ॥ समुद्रे**

सदने सीद तया ॥ सलिले सदने सीद तया ॥ अपां क्षये सीद तया ॥ अपाᳪ सधिषि सीद तया पञ्च दक्षिणत उदीचीः ॥ अपां त्वा सदने सादयामि तया ॥ अपां त्वा सधस्थे सादयामि तया ॥ अपां त्वा पुरीषे सादयामि तया ॥ अपां त्वा योनौ सादयामि तया ॥ अपां त्वा पाथसि सादयामि तया पञ्च पश्चात् प्राचीः ॥ गायत्री छन्दस्तया ॥ त्रिष्टुप् छन्दस्तया ॥ जगती छन्दस्तया ॥ अनुष्टुप् छन्दस्तया ॥ पङ्क्तिश्छन्दस्तया पञ्चोत्तरतो दक्षिणाः ॥

*ये यज्ञᳪ समगृभ्णन्देवा देवेभ्यस्परि । तान् गायत्री नयतु प्रजानतीस्स्वर्गे लोके अमृतं दुहाना तया*[१०४] पुरस्ताद्धिरण्येष्टकामुपदधाति ॥ *ये ज्योतीᳪषि सन्दधति स्वरारोहन्तो अमृतस्य लोकम् । ते यन्तु प्रजानन्तो यज्ञं*[१०५] *विदानास्सुकृतस्य लोके तया* दक्षिणतः । *ये पशवो मेध्यासो यज्ञस्य योनिमभि सम्बभूवुः । तां ददन्ते*[१०६] *कवयो विपश्चितो यज्ञं विदानास्सुकृतस्य लोके तया* पश्चात् ॥ *यः पन्था विततो देवयानश्छन्दोभिर्विगृहीत एति । तेनातिष्ठद्दिवमन्तरिक्षं यज्ञं गृहीत्वा सुकृतस्य लोकं तया*[१०७] उत्तरतः ॥ *यो यज्ञः सहस्रधारो द्यावापृथिव्योरधिनिर्मितः । तेनैतु यजमानस्स्वस्त्या दिवोऽधि पृष्ठमस्थात्तया* । मध्ये । पञ्च हिरण्येष्टकाः प्रतिदिशमेकां मध्ये ।

**अथ ऋषीष्टकाः :-**

*आयवे स्वाहा तया ॥ आयोष्कृते स्वाहा तया ॥ आयोष्पत्वने स्वाहा तया ॥ विष्णवे स्वाहा तया ॥ बृहस्पतये स्वाहा तया* पञ्चोपधाय ॥

अद्भ्यस्सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे तया एतामुपधाय ॥

*ऋतसदसि तया ॥ सत्यसदसि तया ॥ तेजस्सदसि तया ॥ वर्चस्सदसि तया ॥ यशस्सदसि तया ॥ गृणानासि तया ॥ धामासि धाम्यै त्वा धामभ्यस्त्वा धामसु सीद तया ॥* सप्त ।[१०८]

---

१०४. *प्रजानती स्वर्गे लोके अमृतं दुहानास्तया, प्रजानतिः सुवर्गे* इति च पाठा० ।

१०५. *यज्ञं दुहानाः* इति पाठा० । १०६. तां ददते इति पाठा० । १०७. लोके तया इति पाठा० ।

१०८. आयवे स्वाहा इत्यारभ्यैतत्पर्यन्तं क्रमः विशिष्टस्थानं च प्राचीनकारिकातोऽवगन्तव्ये ।

सनिरसि सन्यै त्वा सनेयं तया ॥ वित्तिरसि वित्त्यै त्वा विदेयं तया ॥ शक्तिरसि शक्त्यै त्वा शकेयं तया ॥ भूतिरसि भूत्यै त्वा भूयासं तया ॥ कर्मासि कर्मणे त्वा क्रियासं तया ॥ गूर्दोऽसि गूर्दाय त्वा गूर्देभ्यस्त्वा गूर्दे सीद तया ॥ षट्[१०९] ॥

क्षत्रं पाहि तया ॥ क्षत्रं पिन्व तया ॥ क्षत्रं जिन्व तया ॥ क्षत्रं यच्छ तया ॥ क्षत्रं दृꣳह तया ॥ क्षत्रमसि क्षत्राय त्वा क्षत्रेभ्यस्त्वा क्षत्रे सीद तया ॥ षट् ।

विश्वेषु त्वा पार्थिवेषु सादयामि तया ॥ विश्वेषु त्वान्तरिक्षेषु सादयामि तया ॥ विश्वेषु त्वा दिव्येषु सादयामि तया ॥ विश्वेषु त्वा देवेषु सादयामि तया ॥ विश्वासु त्वाप्सु सादयामि तया ॥ विश्वासु त्वौषधीषु सादयामि तया ॥ विश्वेषु त्वा वनस्पतिषु सादयामि तया ॥ विश्वासु त्वा दिक्षु सादयामि तया ॥ विश्वासु त्वा प्रदिक्षु सादयामि तया ॥ नव । दिवि सीद तया ॥ दश ॥

स्वर्जिदसि तया ॥ पृतनाजिदसि तया ॥ भूरिजिदसि तया ॥ अभिजिदसि तया ॥ विश्वजिदसि तया ॥ सर्वजिदसि तया ॥ सत्राजिदसि तया ॥ धनजिदसि तया ॥ भ्राडसि तया ॥ विभ्राडसि तया ॥ प्रभ्राडसि तया ॥ एकादश । सनिरसीत्यारभ्य दक्षिणपक्षे त्रयस्त्रिंशत्[११०] ।

अथोत्तरपक्षे[११०] । सपत्नहनं त्वा वज्रꣳ सादयामि तया ॥ अभिमातिहनं त्वा वज्रꣳ सादयामि तया ॥ अरातिहनं त्वा वज्रꣳ सादयामि तया ॥ यातुहनं त्वा वज्रꣳ सादयामि तया ॥ पिशाचहनं त्वा वज्रꣳ सादयामि तया ॥ रक्षोहणं त्वा वज्रꣳ सादयामि तया ॥ शत्रुहणममित्रहणं भ्रातृव्यहणमसुरहणं त्वेन्द्रं वज्रꣳ सादयामि तया ॥ सप्त ॥

उद्वदसि तया ॥ उदितिरसि तया ॥ उद्यत्यसि तया ॥ आक्रममाणासि तया ॥ आक्रामन्त्यसि तया ॥ आक्रान्तिरसि तया ॥ सङ्क्रममाणासि तया ॥ सङ्क्रामन्त्यसि

---

१०९. वासुदेवदीक्षितकारिकारीत्या ऋषीष्टकासु आयवे स्वाहा इत्यारभ्य एतावत्पर्यन्तं नवदशेष्टकाः पुच्छे उपधेयाः । क्षत्रं पाहीत्यारभ्य स्वरसीत्यन्तं पञ्चचत्वारिंशदिष्टकाः दक्षिणे पक्षे उपधेयाः । इषि सीदेत्यारभ्य सम्पदसीत्यन्तं षट्त्रिंशदिष्टकाः सव्ये पक्षे उपधेयाः । ११०. इदं प्राचीनकारिकानुसृतं वाक्यम् ॥

**तया ॥ सङ्क्रान्तिरसि तया ॥ स्वर्ग्यासि तया ॥ स्वरसि तया ॥** एकादश ।

[१११]**इषिसीद तया ॥ ऊर्जिसीद**[११२] **तया ॥ भगे सीद तया ॥ द्रविणे सीद तया ॥ सुभूते सीद तया ॥ पृथिव्या यज्ञिये सीद तया ॥ विष्णोः पृष्ठे सीद तया ॥ इडायाः पदे सीद तया ॥ घृतवति सीद तया ॥ पिन्वमाने सीद तया ॥** दश ॥

**संवत्सरे सीद तया ॥ परिवत्सरे सीद तया ॥ इदावत्सरे सीद तया ॥ इदुवत्सरे सीद तया ॥ इद्वत्सरे सीद तया ॥ वत्सरे सीद तया ॥** षट् ॥

अथ पुच्छे विंशतिः[११३] । **एकस्याꣳ सीद तया ॥ दशसु सीद तया ॥ शते सीद तया ॥ सहस्रे सीद तया ॥ अयुते सीद तया ॥ नियुते सीद तया ॥ प्रयुते सीद तया ॥ अर्बुदे सीद तया ॥ न्यर्बुदे सीद तया ॥ समुद्रे सीद तया ॥ मध्ये सीद तया ॥ पद्मे सीद तया ॥ अन्ते सीद तया ॥ परार्धे सीद तया ॥** चतुर्दश ॥

**पिन्वमानासि पिन्वमानाय त्वा पिन्वमानेभ्यस्त्वा पिन्वमाने सीद तया ॥ ऋतमस्यृताय त्वर्तेभ्यस्त्वर्ते सीद तया ॥ सत्यमसि सत्याय त्वा सत्येभ्यस्त्वा सत्ये सीद तया ॥ सन्धिरसि सन्धये त्वा सन्धिभ्यस्त्वा सन्धिषु सीद तया ॥ सꣳश्लिडसि सꣳश्लिषे त्वा सꣳश्लिड्भ्यस्त्वा सꣳश्लिक्षु**[११४] **सीद तया ॥ सम्पदसि सम्पदे त्वा सम्पद्भ्यस्त्वा सम्पत्सु सीद तया ॥** षट् । एताभ्यामनुवाकाभ्यां प्रतिमन्त्रमृषीष्टकाः सादनप्रवादैश्च पर्यायैः । केचिदृषीष्टका अपोह्य प्राणभृतां उपधानं कुर्वन्ति । तन्न । अक्ष्णया विरोधात् । केचित्तासां द्विषाहस्रादौ प्रयोग इति वदन्ति ।

एवमृषीष्टका उपधाय । **आयुषः प्राणꣳ सन्तनु तया ॥ प्राणादपानꣳ सन्तनु तया ॥ अपानाद्व्यानꣳ सन्तनु तया ॥ व्यानाच्चक्षुस्सन्तनु तया ॥ चक्षुषश्श्रोत्रꣳ सन्तनु तया ॥ श्रोत्रान्मनस्सन्तनु तया ॥ मनसो वाचꣳ सन्तनु तया ॥ वाच आत्मानꣳ**

---

१११. अथ दक्षिणे पक्षे इति उज्वलकारिकानुसृतप्रयोगवाक्यमत्र विद्यते ।

११२. ऊर्जिषीद इति पाठा० ।

११३. इदं प्राचीनकारिकानुसृतं वाक्यम् । अथ उत्तरे पक्षे इति उज्वलकारिकानुसृतप्रयोगवाक्यमत्र विद्यते ।

११४. सꣳश्लिषु सीद, सꣳश्लिट्सु सीद इत्यादि पाठा० ।

**सन्तनु तया ॥ आत्मनः पृथिवी९ँ सन्तनु तया ॥ पृथिव्या अन्तरिक्ष९ँ सन्तनु तया ॥ अन्तरिक्षाद्दिव९ँ सन्तनु तया ॥ दिवस्सुवस्सन्तनु तया** द्वादश सन्ततीर्दक्षिणे पक्षे ॥

***पृथिवी वशामावास्या गर्भो वनस्पतयो जराय्वग्निर्वत्सोऽग्निहोत्रं पीयूषस्तया ॥ अन्तरिक्षं वशा धाता गर्भो रुद्रो जरायु वायुर्वत्सो घर्मः पीयूषस्तया ॥ द्यौर्वशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु सूर्यो वत्सो वृष्टिः पीयूषस्तया ॥ ऋग्वशा बृहद्रथन्तरे गर्भः प्रैषनिविदो जरायु यज्ञो वत्सो दक्षिणाः पीयूषस्तया ॥ विड्वशा राजन्यो गर्भः पशवो जरायु***[११५] ***राजा वत्सो बलिः पीयूषस्तया*** पञ्चवशा उपदधाति ॥

**अथ कुम्भेष्टकाः :-**

अधस्तात्त्रिवृतां स्थाने कुम्भोपहितिरिष्यते ।
स्थूलः कुम्भश्च विज्ञेयः क्षुद्रा कुम्भी तयोरपः ॥
अर्थेतस्थेति मन्त्रेण क्रमाद्गृह्णाति वै पृथक् ।
शर्म च स्थेति युगपत् ध्रुवे सीदतमिष्यते ॥
पुरस्तादनुसीतं स्यादुपधानं द्वयोरपि ।
ज्योतिषे वामिति सकृद्धेमशल्कौ विनिक्षिपेत् ॥

***अर्थेत स्थाध्वगतोऽग्नेर्वस्तेजिष्ठेन तेजसा देवताभिर्गृह्णामि*** कुम्भं कुम्भीं चाद्भिः पूरयित्वा ॥ ***शर्म च स्थ वर्म च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि तया*** **देवतयाङ्गिरस्वद्ध्रुवास्सीदत । ध्रुवे सीदतं** इति वा । युगपत्पुरस्तादनुसीतमुपधाय । कुम्भी पूर्वा तु कुम्भतः । ***ज्योतिषे वां*** युगपत् हिरण्यशल्कौ[११६] प्रत्यस्यति । एवमुत्तरा उत्तरैर्मन्त्रैः प्रतिदिशमनुसीतम् । चतस्रो मध्ये ।

***शुक्रास्थ वीर्यावतीरिन्द्रस्य व इन्द्रियावतो देवताभिर्गृह्णामि*** कुम्भं कुम्भीं चाद्भिः पूरयित्वा[११७] ***ऋतं च स्थ सत्यं च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि तया --- ध्रुवास्सीदत । ध्रुवे सीदतं*** इति वा । युगपद्दक्षिणतोऽनुसीतमुपधाय । कुम्भादुत्तरतः कुम्भी । ***चक्षुषे वां*** युगपत् हिरण्यशल्कौ प्रत्यस्यति ।

---

११५. पञ्चस्वपि मन्त्रेषु जरायुशब्दस्य जरायुः इति पाठा० ॥ ११६. हिरण्यशकलौ इति सर्वत्र पाठा० ।
११७. क्रमेण पूरणे मन्त्रस्यावृत्तिः, युगपत्पूरणे सकृदेव मन्त्रः।

**मन्द्रास्थाभिभुवो विश्वेषां वो देवानां देवताभिर्गृह्णामि** कुम्भं कुम्भीं चाद्भिः पूरयित्वा । **सपत्नघ्नीश्च स्थाभिमातिघ्नीश्च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि तया --- ध्रुवास्सीदत । ध्रुवे सीदतं** इति वा । युगपत्पश्चादनुसीतमुपधाय । कुम्भी पूर्वा तु कुम्भतः । **रेतसे वां** युगपत् हिरण्यशल्कौ प्रत्यस्यति ।

**अधिपतयस्थौजस्वानादित्यानां वो देवानां देवताभिर्गृह्णामि** कुम्भं कुम्भीं चाद्भिःपूरयित्वा । **रक्षोघ्नीश्च स्थारातिघ्नीश्च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि तया --- ध्रुवास्सीदत । ध्रुवे सीदतं** इति वा । युगपदुत्तरतोऽनुसीतमुपधाय । कुम्भादुत्तरः कुम्भी । **प्रजाभ्यो वां** युगपत् हिरण्यशल्कौ प्रत्यस्यति ।

**क्षत्रभृदस्थौजस्विनीर्मित्रावरुणयोर्वो ब्रह्मणा देवताभिर्गृह्णामि** कुम्भं कुम्भीं चाद्भिः पूरयित्वा । **वसु च स्थ वामं च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि तया --- ध्रुवास्सीदत । ध्रुवे सीदतं** इति वा । युगपन्मध्येऽनुसीतमुपधाय । कुम्भादीशानदिश्यत्र मध्यतः कुम्भिका मता । **तेजसे वां** युगपत् हिरण्यशल्कौ प्रत्यस्यति ॥

**व्रजक्षितस्थोर्ध्वश्रितो बृहस्पतेर्वो ब्रह्मणा देवताभिर्गृह्णामि** कुम्भं कुम्भीं चाद्भिः पूरयित्वा ॥ **भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामि तया --- ध्रुवास्सीदत । ध्रुवे सीदतं** इति वा । पुनर्मध्येऽनुसीतमुपधाय ॥ कुम्भात् पूर्वा तु कुम्भिका । **वर्चसे वां** युगपत् हिरण्यशल्कौ प्रत्यस्यति[११८] ॥

**हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निँय्या गर्भं दधिरे विरूपास्ता न आपश्शᳫं स्योना भवन्तु ॥ यासाᳫं राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्ता न आपश्शᳫं स्योना भवन्तु ॥ यासां देवा दिवि कृण्वन्ति भक्षँय्या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीं**

---

११८. अर्थे शर्म ज्योतिः, शुक्रा ऋतं चक्षुः, मन्द्राः सपत्नघ्नी रेतः, अधिपती रक्षोघ्नीः प्रजाः, क्षत्रभृद्वसु तेजः, व्रजक्षितो भूतं वर्चः षट् इति क्वचित् प्रयोगेषु कुम्भेष्टकानां मन्त्रादयः सङ्ग्रहीताः । ध्रुवे सीदतमिति कुम्भेष्टकानां सादनं वाजसनेयिनः समामनन्ति इति क्वचित् मातृकासूपलभ्यते ।

**पयसोन्दन्ति शुक्रास्ता न आपश्शꣳ स्योना भवन्तु ॥ शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोपस्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳ रफ्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त ॥ यददस्सम्प्रयतीरहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ॥ यत्प्रेषिता वरुणेन ताश्शीभꣳ समवल्गत । तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन ॥ अपकामꣳ स्यन्दमाना अवीवरत वो हि कम् । इन्द्रो वश्शक्तिभिर्देवी-स्तस्माद्वार्णाम वो हितम् ॥ एको देवो अप्यतिष्ठत्स्यन्दमाना यथावशम् । उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥ आपो भद्रा घृतमिदाप आसुरग्नीषोमौ बिभ्रत्याप इत्ताः । तीव्रो रसो मधुपृचामरङ्गम आ मा प्राणेन सह वर्चसा गन् । आदित्पश्याम्युत वा शृणोम्यामा घोषो गच्छति वाङ्न आसाम् । मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपँय्यदा वः ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः** इत्युपहिताः कुम्भेष्टका युगपदभिमन्त्रयते ॥ **दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सम्भव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा** बार्हस्पत्यं नैवारं पयसि चरुं मध्ये कुम्भेष्टकानामुपदधाति[११९] ॥

**समन्यायन्त्युपयन्त्यन्याः समानमूर्वं नद्यः पृणन्ति । तमू शुचिꣳ शुचयो दीदिवाꣳ-समपां नपातं परितस्थुरापः ॥** ***हिरण्यवर्णस्सहिरण्यसन्दृगपां पतिः सेदु हिरण्यवर्णः । हिरण्ययात्परि योनेर्निषद्या हिरण्यदा ददत्वन्नमस्मै***[१२०] एताभ्यां च नैवारम् चरुमभिमन्त्रयते[१२१] ।

**अथ त्रिवृतः :-**

***त्रिवृत्ते अग्ने शिरस्तन्मे अग्ने शिरस्तया*** शिरस्युपदधाति । ***त्रिवृत्ते अग्ने शिरस्तेन माभि पाहि***[१२२] इति सन्नमयन्नुपहितां तां तामुपतिष्ठते यजमानः ।

---

११९. क्वचिन्मातृकाग्रन्थेषु चरोरुपधानेऽपि तयादेवतं कृतम् ।

१२०. ददत्य*न्नमस्मै* इति पाठा० । १२१. चरुमुपतिष्ठते इति पाठा० ।

१२२. *तेन मा पाहि* इति सर्वत्र पाठा० ।

अध्वर्युः – ***पञ्चदशौ ते अग्ने बाहू तौ मे अग्ने बाहू तया*** दक्षिणे पक्षे ।

यजमानः – ***पञ्चदशौ ते अग्ने बाहू ताभ्यां माभि पाहि*** ।

अध्वर्युः – ***सप्तदशस्ते अग्न आत्मा स मे अग्न आत्मा तया*** मध्ये ।

यजमानः – ***सप्तदशस्ते अग्न आत्मा तेन माभि पाहि*** ।

अध्वर्युः – ***एकविꣳशौ ते अग्न ऊरू तौ मे अग्न ऊरू तया*** उत्तरे पक्षे ।

यजमानः – ***एकविꣳशौ ते अग्न ऊरू ताभ्यां माभि पाहि*** ।

अध्वर्युः – ***त्रिणवौ ते अग्ने अष्ठीवन्तौ***[१२३] ***तौ मे अग्ने अष्ठीवन्तौ तया*** मध्ये ।

यजमानः – ***त्रिणवौ ते अग्ने अष्ठीवन्तौ ताभ्यां माभि पाहि*** ।

अध्वर्युः – ***त्रयस्त्रिꣳशं ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठानं तया*** पुच्छे । इत्येताः शिरसि पक्षयोः मध्ये पुच्छे चोपदधाति[१२४] ।

यजमानः – ***त्रयस्त्रिꣳशं ते अग्ने प्रतिष्ठानं तेन माभि पाहि*** ।

**त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरिणो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳशिशाधि तया** ऋषभेष्टकामुपधाय । **लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् । ता अस्य सूददोहसस्सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिवस्तया** द्वाभ्यां द्वाभ्यां मन्त्राभ्यामेकैकाम् । अवशिष्टा पञ्च लोकंपृणाभिः प्रच्छादयति[१२५] ।

सर्वान् वर्णानिष्टकानां कुर्यादिति लेखाधिकारो भवतीति विज्ञायते या दक्षिणावृतस्ता दक्षिणत उपदध्यात् । सव्यावृत उत्तरतः । ऋजुलेखा पश्चात् पुरस्ताच्च । त्र्यालिखिता मध्ये । ततश्चितौ हिरण्यं निधाय । **चित्तिमचित्तिं चिनवद्वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान्राये च नस्स्वपत्याय देव दितिं च रास्वादितिमुरुष्य** चितिक्लृप्त्याभिमृशति ।

---

१२३. *अग्नेऽष्ठीवन्तौ* इति पाठा० ।

१२४. प्राचीनकारिकारीत्या एवमुपधानम् । वासुदेवकारिकारीत्या शिरसि, दक्षिणे पक्षे, उत्तरे पक्षे, मध्ये द्वयम्, पुच्छे अन्तिमा इति क्रमः ।

१२५. ऋषीष्टकान्ते ऋषभः इति पक्षे अष्टाविंशत्या लोकम्पृणाभिः प्रच्छादयति ।

अथ चितेरभिमर्शनादि :-

*यत्ते चितं यदु चितं ते अग्ने यदूनं यद्वात्रातिरिक्तम् । विश्वे देवा अङ्गिरसश्चिन वन्ना*[१२६] *दित्यास्ते चितिमा पूरयन्तु ।* यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन्न् ॥ चित्तिमचित्तिं चिनवद्वि --- दितिं च रास्वादितिमुरुष्य ॥ *वयमग्ने धनवन्तस्स्यामालं यज्ञायोत दक्षिणायै । ग्रावा वदेदभि सोमस्या॑ॅशुनेन्द्र॑ॅ शिक्षेमेन्दुना सुतेन ॥ रायस्पोषं नो धेहि जातवेद ऊर्जो भागं मधुमत्सूनृतावत् ।* दधाम *यज्ञ॑ॅ सुनवाम सोमं यज्ञेन त्वामुप शिक्षेम शक्र ॥ ईशानं त्वा शुश्रुमो वयं धनानां धनपते गोमदग्ने । अश्वावद्भूरि पुष्ट॑ॅ हिरण्यवदन्नमध्येहि*[१२७] *मह्यम् ॥ दुहान्ते द्यौः बृहती*[१२८] *पयोऽजगरस्त्वा सोदको विसर्पतु प्रजापतिनात्मानमाप्रीणेऽरिक्तो*[१२९] *म आत्मा ॥* यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु देवाः एताभिः स्वयञ्चित्याभिमृशति ।

उत्तरतः कृष्णोऽश्वस्तिष्ठति । श्यावो वा । तमालभ्य चात्वालात् पुरीषमाहृत्य । **पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा स रिषः पातु नक्तम्** वैश्वानर्यर्चा चितावनुव्यूहति । सा चितिर्भवति । **वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह समस्ते अस्तु मा मा हि॑ॅसीः** प्रत्यवरोहञ्जपति ।

जुह्वां सकृत् सकृत् गृहीत्वा[१३०] ***यो अप्स्वन्तरग्निर्यो वृत्रे यः पुरुषे यो अश्मनि । य आविवेश भुवनानि विश्वा तेभ्योऽग्निभ्यो हुतमस्त्वेतत्स्वाहा ।*** अग्निभ्य इदम् । ***यस्सोमे***[१३१] ***अन्तर्यो गोष्वन्तर्वया॑ॅसि य आविवेश यो मृगेषु । य आविवेश द्विपदो यश्चतुष्पदस्तेभ्योऽग्निभ्यो हुतमस्त्वेतत्स्वाहा ।*** अग्निभ्य इदम् । **पृष्टो दिवि पृष्टो ---**

---

१२६. चिन्वन् इति पाठा० ।
१२७. हिरण्यवदन्नमद्धेहि इति पाठा० ।
१२८. दुहान्ते द्यौःपृथिवी इति पाठा० ।
१२९. आप्रेणेऽरिक्तो इति पाठा० ।
१३०. जुह्वां षड्गृहीतं गृहीत्वा पाठा० ।
१३१. *यस्समो* इति पाठा० ।

**रिषः पातु नक्त७ँ स्वाहा** । अग्नये वैश्वानरायेदम् । ***येनेन्द्रस्य रथ७ँ***[१३२] **सं बभूवुर्यो वैश्वानर उत वैश्वदेव्यः । धीरो***[१३३] ***यश्शक्रः परिभूरदाभ्यस्तेभ्योऽग्निभ्यो हुतमस्त्वेतत्स्वाहा*** । अग्निभ्य इदम् । ***य७ँ हुतादमग्निं यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः । यो देवानां देवतमस्तपोजास्तेभ्योऽग्निभ्यो हुतमस्त्वेतत्स्वाहा*** । अग्निभ्य इदम् । **उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये स्वाहा** । अग्नय इदम् । एताभिः षड्भिश्चितिं चितिमुपधायाभिजुहोति । **अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम । याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीस्सन्दधुः पृष्टबन्धो स्वाहा** । अग्नये धामच्छद इदम् । आग्नेय्या धामच्छदा चितिं चितिमुपधायाभिजुहोति । उपतिष्ठत इत्येके । **अग्ने देवा७ँ इहावह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः** आग्नेय्या गायत्र्या प्रथमां चितिमभिमृशेत् ।

ततः आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्ति । **या ते अग्नेऽयाशया** इत्युपसदाहुतिः । षडुपसदः । द्व्यहं द्व्यहमेकैकेनोपसन्मन्त्रेण जुहोति । अनूपसदमग्निं चिनोति द्व्यहमुत्तमा चितिः । त्रीणि चतुस्तनानि व्रतानि । त्रीणि त्रिस्तनानि । त्रीणि द्विस्तनानि । एकमेकस्तनम् । आपराह्णिकीभ्यां प्रचर्य सुब्रह्मण्यान्ते श्वेतमश्वं परिणीय[१३४] वसन्ति वसन्ति । अधिवृक्षसूर्ये अग्नीन् ज्योतिष्मतः कुरुतेत्यादि । रात्रौ चतुस्स्तनं व्रतं ददाति । यजमानो व्रतं प्रतिगृह्य[१३५] **या ते अग्ने रुद्रिया तनूः** इति व्रतयति । **शिवाः पीता भवथ** । रात्रौ जागरणम् ।

## ॥ इति प्रथमा चितिः ॥



---

१३२. *येनेन्द्रस्य रस७ँ* इति पाठा० ।
१३३. *वीरो यश्शक्रः* इति पाठा० ।
१३४. अग्नेः प्रागुदगारभ्य प्राग्वा आरभ्य प्रादक्षिण्येन सर्वतो नयन्ति ।
१३५. क्वचिन्मातृकासु अन्नपते, देवस्य त्वा इति द्वाभ्यां समिदाधानं उपसद्व्रतेष्वपि उक्तं इति पाठा० ।

# ॥ लाङ्गलकर्षणक्रमः॥




'▬▬▬ रेखा' कर्षणं द्योतयति । '•••••• रेखा' प्रत्यावर्तनं कर्षणाभावं च द्योतयति । सङ्ख्याः कर्षणक्रमं द्योतयन्ति । '↑' कर्षणदिशं द्योतयति ।

# ॥ अग्निचयने द्वितीयप्रश्नः ॥

## ॥ अथ द्वितीया चितिः ॥

श्वो भूते विसृष्टवाचि यजमाने पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिं चिनोति। या ते अग्नेऽयाशया तनूः इत्युपसदाहुतिः। सुब्रह्मण्यान्ते[१३६] इष्टकादोषप्रायश्चित्तं पूर्ववत्। दक्षिणतः श्वेतोऽश्वस्तिष्ठति तमालभ्य। **वाङ्म आसन्नसोः --- नमस्ते अस्तु मा मा हिꣳसीः** आरोहञ्जपति॥

**ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवाँय्योनिमा सीद साध्या। उख्यस्य केतुं प्रथमं पुरस्तादश्विनाध्वर्यू सादयतामिह त्वा तया॥ स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा। स्वासस्था तनुवा सँविशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाध्वर्यू सादयतामिह त्वा तया॥ कुलायिनी वसुमती वयोधा रयिं नो वर्ध बहुलꣳ सुवीरम्। अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाध्वर्यू सादयतामिह त्वा तया॥ अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभिगृणन्तु देवाः। स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽयजस्वाश्विनाध्वर्यू सादयतामिह त्वा तया॥ दिवो मूर्धासि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनानाम्। ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा तया** पञ्चाश्विनीरुपदधाति॥

**सजूरृतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानराया-रश्विनाध्वर्यू सादयतामिह त्वा तया॥ सजूरृतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैः --- इह त्वा तया॥ सजूरृतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैः--- इह त्वा तया॥ सजूरृतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैः--- इह त्वा तया॥ सजूरृतुभिः सजूर्विधाभिः सजूर्देवै-**

---

१३६. एतदनन्तरं 'द्वितीयप्रस्तारस्य शुल्बोपधानं कृत्वा' इति आन्ध्रपाठः।

**स्सजूर्देवैर्वयोनाधैः --- इह त्वा तया** पञ्चर्तव्या आश्विनीरनूपदधाति ॥

**प्राणं मे पाहि तया ॥ अपानं मे पाहि तया ॥ व्यानं मे पाहि तया ॥ चक्षुर्म उर्व्या वि भाहि तया ॥ श्रोत्रं मे श्लोकय तया** पञ्च प्राणभृत ऋतव्या अनूपधाय ॥

**अपस्पिन्व तया ॥ ओषधीर्जिन्व तया ॥ द्विपात्पाहि तया ॥ चतुष्पादव तया ॥ दिवो वृष्टिमेरय तया** पञ्चापस्या अनुपरिहारम् ॥

**वायोर्यान्यसि तया ॥ देवानां वायोयान्यसि तया** द्वे संयान्यौ ॥

**शुक्रश्च शुचिश्च ग्रैष्मावृतू अग्नेरन्तश्लेषोऽसि कल्पेतां --- अन्तरा द्यावापुथिवी ग्रैष्मावृतू अभिकल्पमाना --- अभि संविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्** द्वे ऋतव्ये समानतयादेवते हस्तद्वयेन युगपदुपदधाति । अवकामनूपदधाति ॥

**अथ वयस्याः :-**

**त्र्यविर्वयस्त्रिष्टुप् छन्दस्तया । दित्यवाड्वयो विराट् छन्दस्तया । पञ्चाविर्वयो गायत्री छन्दस्तया । त्रिवत्सो वय उष्णिहा छन्दस्तया । तुर्यवाड्वयोऽनुष्टुप् छन्दस्तया** पञ्च दक्षिणस्यां श्रोण्याम् ।

**पष्ठवाद्वयो बृहती छन्दस्तया । उक्षा वयस्सतोबृहती छन्दस्तया । ऋषभो वयः ककुच्छन्दस्तया । धेनुर्वयो जगती छन्दस्तया । अनड्वान् वयः पङ्क्तिश्छन्दस्तया** पञ्चोत्तरस्यां श्रोण्याम् ॥

**बस्तो वयो विवलं छन्दस्तया** दक्षिणेंऽसे ॥ **वृष्णिर्वयो विशालं छन्दस्तया** उत्तरेंऽसे । **व्याघ्रो वयोऽनाधृष्टं छन्दस्तया** दक्षिणे पक्षे । **सिꣳहो वयश्छदिश्छन्दस्तया** उत्तरे पक्षे । **पुरुषो वयस्तन्द्रं छन्दस्तया** मध्ये । **विष्टम्भो वयोऽधिपतिश्छन्दस्तया । क्षत्रं वयो मयन्दं छन्दस्तया । विश्वकर्मा वयः परमेष्ठी छन्दस्तया । मूर्धा वयः प्रजापतिश्छन्दस्तया** चतस्रो वयस्याः पुरस्तात्प्रतीचीरुपधाय[१३७] । ऋषभादिश्चित्यन्तः ॥

**त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरिणो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि तया** ऋषभमुपधाय । **लोकंपृण --- दिवस्तया ।**

१३७. मध्ये पुरस्तादारभ्य प्रत्यगपवर्गाः इति पाठा० ।

अवशिष्टाः षट्पञ्चाशदधिकशतं लोकंपृणाः ॥

ततश्चितौ हिरण्यं निधाय । **चित्तिमचित्तिं --- रास्वादितिमुरुष्य** चितिक्लृप्त्याभिमृशति ।

**यत्ते चितं यदु चितं, यास्ते अग्ने, चित्तिमचित्तिं,** ***वयमग्ने धनवन्तः, रायस्पोषं नो धेहि जातवेदः, ईशानं त्वा*** **शुश्रुमो,** ***दुहां ते द्यौः,*** **यो रुद्रो अग्नौ---नमो अस्तु देवाः** एताभिः स्वयञ्चित्याभिमृशति ।

उत्तरतः कृष्णोऽश्वस्तिष्ठति । श्यावो वा । तमालभ्य चात्वालात् पुरीषमाहृत्य । **पृष्टो दिवि --- पातु नक्तम्** वैश्वानर्यर्चा चितावनुव्यूहति । सा चितिर्भवति । **वाङ्म आसन्नसोः --- मा मा हिꣳसीः** प्रत्यवरोहञ्जपति ।

जुह्वां सकृत् सकृत् गृहीत्वा[१३८] ***यो अप्स्वन्तरग्निः, यस्सोमे अन्तः, पृष्टो दिवि, येनेन्द्रस्य रथं, यꣳहुतादमग्निं,*** **उक्षान्नाय वशान्नाय** इति षडाहुतीर्हुत्वा । **अग्ने भूरीणि तव --- पृष्टबन्धो स्वाहा** आग्नेय्या धामच्छदा चितिं चितिमुपधायाभिजुहोति ॥

**अगन्म महा मनसा यविष्ठँय्यो दीदाय समिद्धस्स्वे दुरोणे । चित्रभानू रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम्** आग्नेय्या त्रिष्टुभा द्वितीयां चितिमभिमृशेत् । ततो मध्यन्दिने व्रतप्रदानम्[१३९] इत्यादि नाभ्यभिमर्शनान्तम् । तत आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति । **या ते अग्नेऽयाशया तनूः** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते अश्वपरिणयनम् । अधिवृक्षसूर्ये ***अग्नीन् ज्योतिष्मतः कुरुत*** इत्यादि व्रतं कृणुतेत्यन्तम् । ततो मध्यरात्रे व्रतप्रदानम्[१३९] । न रात्रौ जागरणम् । **अग्ने त्वꣳ सुजागृहि** इत्यादि ॥

## ॥ इति द्वितीया चितिः ॥



---

१३८. जुह्वां षड्गृहीतं गृहीत्वा पाठा० ।

१३९. चतुस्स्तनं व्रतं ददाति ।

# ॥ अथ तृतीया चितिः ॥

उपोदये *अग्नीन् ज्योतिष्मतः कुरुत* इत्यादि पूर्ववत् । श्वो भूते विसृष्टवाचि यजमाने पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चिनोति । **या ते अग्ने रजाशया तनूः** इत्युपसदाहुतिः ॥ सुब्रह्मण्यान्ते[१४०] इष्टकादोषप्रायश्चित्तं पूर्ववत्। श्वेतमश्वमालभ्य । **वाङ्म आसन् --- मा मा हि॒सीः** आरोहञ्जपति ।

**द्वितीयस्वयमातृण्णाया उपधानम् :-**

**इन्द्राग्नी अव्यथमानामिष्टकां दृ॒हतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधताम्** स्वयमातृण्णामभिमृश्याश्वेनावघ्राप्य[१४१] । **विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वती॒ सूरिमतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृ॒हान्तरिक्षं मा हि॒सीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुस्त्वाभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद । भुवः** ऊर्ध्वज्ञुः स्वयमातृण्णां मध्येऽग्नेरुपदधात्यविदुषा ब्राह्मणेन सह[१४२]। **चित्तिं जुहोमि --- हविस्स्वाहा** स्वयमातृण्णायां हुत्वा व्यनिति[१४३]। विश्वकर्मण इदम् । अविद्वान्ब्राह्मणोऽध्वर्यवे वरं ददाति । ***स्वयमातृण्णाया॒ साम गाय*** इति सम्प्रेष्यति ।

**ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहि तया** हिरण्येष्टकां मध्ये । **अधिद्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु तया** मण्डलेष्टकाम् ।

अत्र तिस्रो रेतस्सिचो विवयस उपदधाति **विराड्ज्योतिरधारयत्तया । सम्म्राड्ज्योति-रधारयत्तया । स्वराड्ज्योतिरधारयत्तया** मध्यमं मन्त्रं मनसा स्मरन् ।

**विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ वायुस्तेऽधिपतिस्तया** विश्वज्योतिषम्[१४३(अ)] । **अन्तरिक्षस्य यान्यसि तया ।**

---

१४०. एतदनन्तरं 'प्रथमप्रस्तारवत् शुल्बोपधानं कृत्वा' इति आन्ध्रपाठः ।

१४१. अश्वेनोपघ्राप्य इति पाठा० A.V. पाठश्च ॥

१४३. होमं कृत्वा निरुछवासेनावतिष्ठते इत्यर्थः ।

१४२. मध्ये सन्ध्यन्तराले उपधातव्यम्, मृन्मयीनामिष्टकानामबाधाय

१४३(अ). अत्र चित्यग्निप्रणयनेन प्रणीतानां तिसृणां पादेष्टकानां द्वितीयामुपदधाति ।

**देवानामन्तरिक्षयान्यसि तया** द्वे सँय्यान्यौ ।

**नभश्च नभस्यश्च वार्षिकावृतू अग्नेरन्तश्लेषोऽसि --- अन्तरा द्यावापृथिवी वार्षिकावृतू अभिकल्पमाना --- विशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ।** अवकामनूपदधाति । **इषश्चोर्जश्च शारदावृतू अग्नेरन्तश्लेषोऽसि --- अन्तरा द्यावापृथिवी शारदावृतू अभिकल्पमाना --- विशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्** चतस्र ऋतव्याः द्वे द्वे समानतयादेवते । अवकामनूपदधाति ।

**राज्ञ्यसि प्राची दिक्तया । विराडसि दक्षिणा दिक्तया । सम्म्राडसि प्रतीची दिक्तया । स्वराडस्युदीची दिक्तया । अधिपत्न्यसि बृहती दिक्तया** पञ्च दिश्याः पुरस्तादरभ्य प्रतिदिशमेकां मध्ये ।

**आयुर्मे पाहि तया । प्राणं मे पाहि तया । अपानं मे पाहि तया । व्यानं मे पाहि तया । चक्षुर्मे पाहि तया । श्रोत्रं मे पाहि तया । मनो मे जिन्व तया । वाचं मे पिन्व तया । आत्मानं मे पाहि तया । ज्योतिर्मे यच्छ तया** दश प्राणभृतः पुरस्तादुपधाय षट्त्रिंशतं बृहतीरुपदधाति ।

**अथ बृहतीः :-**

**मा छन्दस्तया । प्र मा छन्दस्तया । प्रतिमा छन्दस्तया । अस्रीविश्छन्दस्तया । पङ्क्तिश्छन्दस्तया । उष्णिहा छन्दस्तया । बृहती छन्दस्तया । अनुष्टुप् छन्दस्तया । विराट् छन्दस्तया । गायत्री छन्दस्तया । त्रिष्टुप्छन्दस्तया । जगती छन्दस्तया** द्वादश दक्षिणतः ।

**पृथिवी छन्दस्तया । अन्तरिक्षं छन्दस्तया । द्यौश्छन्दस्तया । समाश्छन्दस्तया । नक्षत्राणि छन्दस्तया । मनश्छन्दस्तया । वाक् छन्दस्तया । कृषिश्छन्दस्तया । हिरण्यं छन्दस्तया । गौश्छन्दस्तया । अजा छन्दस्तया । अश्वश्छन्दस्तया** द्वादश पश्चात् ।

**अग्निर्देवता तया । वातो देवता तया । सूर्यो देवता तया । चन्द्रमा देवता तया । वसवो देवता तया । रुद्रा देवता तया । आदित्या देवता तया । विश्वे देवा देवता तया । मरुतो देवता तया । बृहस्पतिर्देवता तया । इन्द्रो देवता तया । वरुणो देवता तया** द्वादशोत्तरतः ।

**मूर्धासि राट् तया । ध्रुवासि धरुणा तया । यन्त्र्यसि यमित्री तया । इषे त्वा तया । ऊर्जे त्वा तया । कृष्यै त्वा तया । क्षेमाय त्वा तया** सप्त वालखिल्याः पुरस्तात्प्रतीचीरुपदधाति।

**यन्त्री राट् तया । ध्रुवासि धरणी तया । धर्त्र्यसि धरित्री तया । आयुषे त्वा तया । वर्चसे त्वा तया । ओजसे त्वा तया । बलाय त्वा तया** सप्त पश्चात्प्राचीः ।

***प्रसवाय त्वा तया । उपयामाय त्वा तया । काटाय त्वा तया । अर्णवाय त्वा तया । धर्णसाय त्वा तया । द्रविणाय त्वा तया । सिन्धवे त्वा तया । समुद्राय त्वा तया । सरस्वते त्वा तया । विश्वव्यचसे त्वा तया । सुभूताय त्वा तया । अन्तरिक्षाय त्वा तया*** द्वादश भूतेष्टकाः । ऋषभादिश्चित्यन्तः ।

**त्वामग्ने वृषभं --- शिशाधि तया ।** ऋषभमुपधाय । **लोकम्पृण, ता अस्य सूददोहसः** इति द्वाभ्यां एकादशाधिकशतं लोकम्पृणाः ।

ततश्चितौ हिरण्यं निधाय । **चित्तिमचित्तिं --- रास्वादितिमुरुष्य** चितिकॢप्त्याभिमृशति ।

**यत्ते चितं यदु चितं, यास्ते अग्ने, चित्तिमचित्तिं,** ***वयमग्ने धनवन्तः, रायस्पोषं नो धेहि जातवेदः, ईशानं त्वा शुश्रुमो, दुहां ते द्यौः,*** **यो रुद्रो अग्नौ**---नमो **अस्तु देवाः** एताभिः स्वयञ्चित्याभिमृशति ।

उत्तरतः कृष्णोऽश्वस्तिष्ठति । श्यावो वा । तमालभ्य चात्वालात् पुरीषमाहृत्य । **पृष्टो दिवि --- पातु नक्तम्** वैश्वानर्यर्चा चितावनुव्यूहति । सा चितिर्भवति । **वाङ्म आसन्नसोः --- मा मा हि९ंसीः** प्रत्यवरोहन् जपति ।

जुह्वां सकृत् सकृत् गृहीत्वा[१४४] ***यो अप्स्वन्तरग्निः, यस्सोमे अन्तः, पृष्टो दिवि, येनेन्द्रस्य रथं, य९ंहुतादमग्निं,*** **उक्षान्नाय वशान्नाय** इति षडाहुतीर्हुत्वा । **अग्ने भूरीणि तव --- पृष्टबन्धो स्वाहा** आग्नेय्या धामच्छदा चितिं चितिमुपधायाभिजुहोति ॥

**मेधाकारं विदथस्य प्रसाधनमग्नि९ं होतारं परिभूतमं मतिम् । त्वामर्भस्य हविषस्स-मानमित् त्वां महो वृणते नरो नान्यन्त्वत्** आग्नेय्या जगत्या तृतीयां चितिमभिमृशेत् । ततो

---

१४४. जुह्वां षड्गृहीतं गृहीत्वा पाठा० ।

व्रतकाले त्रिस्तनं व्रतं प्रयच्छति । अस्मिन्नहनि यूपकरणम् । अग्निष्ठप्रथमान् त्रयोदशयूपान् एकयूपं वा मन्त्रेण छिनत्ति[१४५] । ततः आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति । **या ते अग्ने रजाशया तनूः** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते श्वेतमश्वं परिणीय वसन्ति । रात्रौ च त्रिस्तनं व्रतम् । **अग्ने त्वꣳ सुजागृहि** इत्यादि ॥

## ॥ इति तृतीया चितिः ॥



---

१४५. एतदनन्तरं " अथ यूपकर्म ततो व्रतं " इत्यान्ध्रपाठः ।

# ॥ अथ चतुर्थी चितिः ॥

उपोदये *अग्नीन् ज्योतिष्मतः कुरुत* इत्यादि पूर्ववत् । श्वो भूते विसृष्टवाचि यजमाने पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य चतुर्थीं चितिं चिनोति[१४६] । **या ते अग्ने रजाशया** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते[१४७] इष्टकादोषनिमित्तप्रायश्चित्तं पूर्ववत् । श्वेतमश्वमालभ्य **वाङ्म आसन् --- मा मा हिꣳसीः** आरोहञ्जपति ।

**आशुस्त्रिवृत्तया** पुरस्तात् । **व्योम सप्तदशस्तया** दक्षिणतः । **धरुण एकविꣳशस्तया** पश्चात् । **भान्तः पञ्चदशस्तया** उत्तरतः । एवमग्रेऽपि । अनुवाकद्वयशेषेण चतस्रश्चतस्रः प्रतिदिश-मुपधेयाः । **प्रतूर्तिरष्टादशस्तया । अभिवर्तस्सविꣳशस्तया । वर्चो द्वाविꣳशस्तया । तपो नवदशस्तया ॥ योनिश्चतुर्विꣳशस्तया । गर्भाः पञ्चविꣳशस्तया । ओजस्त्रि-णवस्तया । सम्भरणस्त्रयोविꣳशस्तया ॥ क्रतुरेकत्रिꣳशस्तया । ब्रध्नस्य विष्टपं चतुस्त्रिꣳशस्तया । प्रतिष्ठा त्रयस्त्रिꣳशस्तया । नाकष्षट्त्रिꣳशस्तया ॥**

**अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत् स्तोमस्तया । नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदशस्तोमस्तया । मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वाताः स्पृता एकविꣳशस्तोमस्तया । इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदशस्तोमस्तया ॥**

**वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विꣳशस्तोमस्तया । आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भास्स्पृताः पञ्चविꣳशस्तोमस्तया । अदित्यै भागोऽसि पूष्ण आधिपत्यमोजस्पृतं त्रिणवस्तोमस्तया । देवस्य सवितुर्भागोसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशस्पृताश्चतुष्टोमस्स्तोमस्तया ।**

**धर्त्रश्चतुष्टोमस्तया । यावानां भागोऽस्ययावानामाधिपत्यं प्रजास्स्पृताश्चतुश्चत्वारिꣳश-स्तोमस्तया । ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तꣳ स्पृतं**

---

१४६. श्वोभूते चतुर्थ्योपसदहे पौर्वाह्णिकीभ्यां प्रचर्य इति पाठा०।

१४७. एतदनन्तरं " द्वितीयप्रस्तारवत् शुल्बोपधानं कृत्वा " इति आन्ध्रपाठः ।

त्रयस्त्रि॑ꣳशस्तोमस्तया । विवर्तोऽष्टाचत्वारि॑ꣳशस्तोमस्तया एताभ्यामनुवाकभ्यां यथाब्राह्मणमुपधाय ।

अन्तरिक्षमसि तया । अन्तरिक्षाय त्वा तया । द्वे सँय्यान्यौ ।

सहश्च सहस्यश्च हैमन्तिकावृतू अग्नेरन्तश्लेषोऽसि --- अन्तरा द्यावापृथिवी हैमन्तिकावृतू अभिकल्पमाना --- विशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् द्वे ऋतव्ये समानतयादेवते । अवकामनूपदधाति ।

अथ सृष्टीः :-

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्तया । तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्तया । पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्तया । सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासीत्तया । नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीत्तया । एकादशभिरस्तुवतर्तवोऽसृज्यन्तार्तवोऽधिपतिरासीत्तया । त्रयोदशभिरस्तुवत मासा असृज्यन्त सँव्वत्सरोऽधिपतिरासीत्तया । पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्तया । सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीत्तया । नवदशभिरस्तुवत शूद्रार्याव सृज्येतामहोरात्रे अधिपत्नी आस्तां तया । एकवि॑ꣳशत्याऽस्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्तया । त्रयोवि॑ꣳशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत्तया । पञ्चवि॑ꣳशत्याऽस्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्तया । सप्तवि॑ꣳशत्याऽस्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या अनुव्यायन् तेषामाधिपत्यमासीत्तया । नववि॑ꣳशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीत्तया । एकत्रि॑ꣳशताऽस्तुवत प्रजा असृज्यन्त यावानां चायावानां चाधिपत्यमासीत्तया । त्रयस्त्रि॑ꣳशतास्तुवत भूतान्यशाम्यन् प्रजपतिः परमेष्ठ्यधिपतिरासीत्तया सप्तदश सृष्टीर्दक्षिणे पार्श्वे ।

अथ व्युष्टीः :-

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवगज्जनित्री त्रय एनां महिमानस्सचन्ते तया ॥ छन्दस्वती उषसा पेपिशाने समानँय्योनिमनु सञ्चरन्ती । सूर्यपत्नी वि चरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा तया ॥ ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽगुः । प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनां तया ॥ चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती । गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानास्सुवराभरन्निदं तया ॥ पञ्चभिर्धाता विदधाविदं यत्तासाꣳ स्वसृरजनयत् पञ्चपञ्च । तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि ऋतवो वसानास्तया ॥ त्रिꣳशत्स्वसार उप यन्ति निष्कृतꣳ समानं केतुं प्रतिमुञ्चमानाः । ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परि यन्ति भास्वतीस्तया ॥ ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे तया ॥ एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणाम-भवच्छचीभिस्तया ॥ अनानुजामनुजां मामकर्त सत्यँव्वदन्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त तया ॥ अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् । भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त तया ॥ पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्तास्समानमूर्ध्नीरभि लोकमेकं तया ॥ ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकान्नियच्छति तया ॥ या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समां तया ॥ शुक्रर्षभा नभसा ज्योतिषाऽऽगाद्विश्वरूपा शबलीर-ग्निकेतुः । समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आगास्तया ॥ ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोषो व्युच्छस्यजीर्णा

**त्वं जरयसि सर्वमन्यत्तया ॥ ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्याॅं स्तया** षोडश व्युष्टीरुत्तरे पार्श्वे ।

**त्वामग्ने वृषभं --- शिशाधि तया** ऋषभमुपधाय । **लोकम्पृण --- । ता अस्य सूददोहस** इति द्वाभ्यां चतुस्त्रिंशदधिकशतं लोकम्पृणाः ।

ततश्चितौ हिरण्यं निधाय । **चित्तिमचित्तिं --- रास्वादितिमुरुष्य** चितिकॢप्त्याभिमृशति ।

**यत्ते चितं यदु चितं, यास्ते अग्ने, चित्तिमचित्तिं, *वयमग्ने धनवन्तः, रायस्पोषं नो धेहि जातवेदः, ईशानं त्वा शुश्रुमो, दुहां ते द्यौः,* यो रुद्रो अग्नौ---नमो अस्तु देवाः** एताभिः स्वयञ्चित्याभिमृशति ।

उत्तरतः कृष्णोऽश्वस्तिष्ठति । श्यावो वा । तमालभ्य चात्वालात् पुरीषमाहृत्य । **पृष्टो दिवि --- पातु नक्तम्** वैश्वानर्यर्चा चितावनुव्यूहति । सा चितिर्भवति । **वाङ्म आसन्नसोः --- मा मा हिॅंसीः** प्रत्यवरोहन् जपति ।

जुह्वां सकृत्सकृत् गृहीत्वा[१४८] ***यो अप्स्वन्तरग्निः, यस्सोमे अन्तः,* पृष्टो दिवि, *येनेन्द्रस्य रथं, यॅंहुतादमग्निं,* उक्षान्नाय वशान्नाय** इति षडाहुतीर्हुत्वा । **अग्ने भूरीणि तव --- पृष्टबन्धो स्वाहा** आग्नेय्या धामच्छदा चितिं चितिमुपधायाभिजुहोति ॥

**मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान्देवायते यज** आग्नेय्यानुष्टुभा चतुर्थीं चितिमभिमृशेत् । पूर्ववन्मध्यन्दिने त्रिस्तनव्रतम् । आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति । **या ते अग्ने रजाशया तनूः** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते श्वेतमश्वं परिणीय वसन्ति । रात्रौ द्विस्तनं व्रतम् । **अग्ने त्वॅं सुजागृहि** इत्यादि ॥

## ॥ इति चतुर्थी चितिः ॥



---

१४८. जुह्वां षड्गृहीतं गृहीत्वा इति पाठा० ।

# ॥ अथ पञ्चमी चितिः ॥

उपोदये *अग्नीन् ज्योतिष्मतः कुरुत* इत्यादि पूर्ववत् । श्वो भूते विसृष्टवाचि यजमाने पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य पञ्चमीं चितिं चिनोति । **या ते अग्ने हराशया** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते[१४९] इष्टकादोषनिमित्तप्रायश्चित्तं पूर्ववत् । श्वेतमश्वमालभ्य **वाङ्म आसन् --- मा मा हिꣳसीः** आरोहञ्जपति ।

**अथ असपत्नाः :-**

**अग्ने जातान्प्रणुदा नस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अस्मे दीदिहि सुमना अहेडन् तव स्याꣳ शर्मन् त्रिवरूथ उद्भित्तया** पुरस्तादुपदधाति । **सहसा जातान्प्र णुदा नस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नस्सपत्नान्तया** पश्चात् । **चतुश्चत्वारिꣳशस्स्तोमो वर्चो द्रविणं तया** दक्षिणतः । **षोडश स्तोम ओजो द्रविणं तया** उत्तरतः । इष्टकायां पुरीषमध्यूह्य । **पृथिव्याः पुरीषमस्यप्सो नाम तया** मध्येऽग्नेः पुरीषवतीम् ।

**अथ विराजः :-**

**एवश्छन्दस्तया । वरिवश्छन्दस्तया । शम्भूश्छन्दस्तया । परिभूश्छन्दस्तया । आच्छच्छन्दस्तया । मनश्छन्दस्तया । व्यचश्छन्दस्तया । सिन्धुश्छन्दस्तया । समुद्रञ्छन्दस्तया । सलिलञ्छन्दस्तया** दश पूर्वस्याम् ॥

**सँय्यच्छन्दस्तया । वियच्छन्दस्तया । बृहच्छन्दस्तया । रथन्तरञ्छन्दस्तया । निकायश्छन्दस्तया । विवधश्छन्दस्तया । गिरश्छन्दस्तया । भ्रजश्छन्दस्तया । स्रष्टुप् छन्दस्तया । अनुष्टुप् छन्दस्तया** दश दक्षिणतः ।

**ककुच्छन्दस्तया । त्रिककुच्छन्दस्तया । काव्यञ्छन्दस्तया । अङ्कुपञ्छन्दस्तया । पदपङ्क्तिश्छन्दस्तया । अक्षरपङ्क्तिश्छन्दस्तया । विष्टारपङ्क्तिश्छन्दस्तया । क्षुरो भृज्वान् छन्दस्तया । प्रच्छच्छन्दस्तया । पक्षश्छन्दस्तया** दश पश्चात् ।

**एवश्छन्दस्तया । वरिवश्छन्दस्तया । वयश्छन्दस्तया । वयस्कृच्छन्दस्तया ।**

---

१४९. एतदनन्तरं 'प्रथमप्रस्तारवत् शुल्बोपधानं कृत्वा' इति आन्ध्रपाठः ।

**विशालञ्छन्दस्तया । विष्पर्धाश्छन्दस्तया । छदिश्छन्दस्तया । दूरोहणञ्छन्दस्तया । तन्द्रञ्छन्दस्तया । अङ्काङ्कञ्छन्दस्तया** दशोत्तरतः । चत्वारिंशतं विराजो दश दश प्रतिदिशमक्ष्णया ॥

**अथ स्तोमभागाः :-**

**रश्मिरसि क्षयाय त्वा क्षयं जिन्व तया । प्रेतिरसि धर्माय त्वा धर्मं जिन्व तया । अन्वितिरसि दिवे त्वा दिवं जिन्व तया । सन्धिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व तया । प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व तया । विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व तया । प्रवास्यह्ने त्वाहर्जिन्व तया ।** सप्त पुरस्तात् ।

**अनुवासि रात्रियै त्वा रात्रिं जिन्व तया । उशिगसि वसुभ्यस्त्वा वसून् जिन्व तया । प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्रान् जिन्व तया । सुदीतिरस्यादिभ्यस्त्वाऽऽदित्यान् जिन्व तया । ओजोऽसि पितृभ्यस्त्वा पितॄन् जिन्व तया । तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व तया । पृतनाषाडसि पशुभ्यस्त्वा पशून् जिन्व तया ।** सप्त दक्षिणतः ।

**रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व तया । अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्व तया । अधिपतिरसि प्राणाय त्वा प्राणं जिन्व तया । यन्तास्यपानाय त्वाऽपानं जिन्व तया । स৺सर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व तया । वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व तया । त्रिवृदसि तया ।** सप्त पश्चात् ।

**प्रवृदसि तया । सँव्वृदसि तया । विवृदसि तया । स৺रोहोऽसि तया । नीरोहोऽसि तया । प्ररोहोऽसि तया । अनुरोहोऽसि तया ।** सप्त उत्तरतः । **वसुकोऽसि तया । वेषश्रिरसि तया । वस्यष्टिरसि तया** तिस्रो मध्ये । एकत्रिंशत् स्तोमभागाः सप्तसप्त प्रतिदिशं अवशिष्टा मध्ये।

**अथ नाकसदः :-**

**राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्या৺ श्रयत्वाज्यमुक्थमव्यथयथ्स्तभ्नातु रथन्तर৺ साम प्रतिष्ठित्या अन्तरिक्षाय-र्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिश्च ते त्वा**

सर्वे सँव्विदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानं च सादयन्तु तया ॥

विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्या॑ श्रयतु प्रउगमुक्थमव्यथयथ्स्तभ्नातु बृहत्साम प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा --- यजमानं च सादयन्तु तया ॥

सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयस्सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्या॑ श्रयतु मरुत्वतीयमुक्थमव्यथयथ्स्तभ्नातु वैरूप॑ साम प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा --- यजमानं च सादयन्तु तया ॥

स्वराडस्युदीची दिग्विश्वे ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकवि॑शस्त्वा स्तोमः पृथिव्या॑ श्रयतु निष्केवल्यमुक्थमव्यथस्यथ्स्तभ्नातु वैराज॑ साम प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा --- यजमानं च सादयन्तु तया ॥

अधिपत्न्यसि बृहती दिङ्मरुतस्ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रि॑शौ त्वा स्तोमौ पृथिव्या॑ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती- स्तभ्नीता॑ शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षायर्षयस्त्वा --- यजमानं च सादयन्तु तया पञ्च नाकसदः प्रतिदिशमेकां मध्ये । तासु पुरीषमध्यूह्य ।

अथ पञ्चचोडाः :-

अयं पुरो हरिकेशस्सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षा॑सि प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि पाप्मानं तया ॥

अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमस्ते नो --- जम्भे दधामि पाप्मानं तया ॥

अयमुत्तराथ्सँय्यद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो नमस्ते नो --- जम्भे दधामि पाप्मानं तया ॥

**अयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन् प्रहेतिस्तेभ्यो नमस्ते नो --- जम्भे दधामि पाप्मानं तया ॥**

**अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चाऽनुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिस्तेभ्यो नमस्ते नो --- जम्भे दधामि पाप्मानं तया** पञ्चचोडा अभ्युपदधाति द्वेष्यं मनसा ध्यायन् । पश्चात्प्राचीमुत्तमाम् ।

**अथोत्तमस्वयमातृण्णाया उपधानम् :-**

**आयोस्त्वा सदने सादयाम्यवतश्छायायां नमस्समुद्राय नमस्समुद्रस्य चक्षसे** स्वयमातृण्णामभिमृश्य अश्वेनावघ्राप्य[१५०] **परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं दिवँय्यच्छ दिवं दृ७ह दिवं मा हि७सीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाभि पातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद । सुवः** तिष्ठन्नविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति । सुवरिति चैतया व्याहृत्या ।

**चित्तिं जुहोमि --- हविः स्वाहा** स्वयमातृण्ण्यायां हुत्वापानिति*। **अविद्वान् ब्राह्मणो वरं ददाति ।** ***स्वयमातृण्णाया७ साम गाय*** इति सम्प्रेष्यति ।

**प्रोथदश्वो न यवसे अविष्यन् यदा महस्सँव्वरणाद्व्यस्थात् । आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ति तया** उत्तरेऽंसे विकर्णीम् । ते नान्याभिरिष्टकाभिरभ्युपदधाति[१५१] ।

**सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि तया** हिरण्येष्टकाम् । **द्यौरपराजितामृतेन विष्टादित्यास्ते गोप्तारस्सूर्यो वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु तया** मण्डलेष्टकाम् ।

---

*. श्वासं गृह्णातीत्यर्थः ।

१५०. अश्वेनोपघ्राप्य इति पाठा० A.V. पाठश्च ।

१५१. अत्र कपर्दिभाष्यम् – 'ते त्विष्टके स्वयमातृण्णा च विकर्णी च । तयोरुपरि नान्यामिष्टकामुपदधाति । यत्रापि द्विप्रस्तारः(रा) त्रिप्रस्तारो(रा) वा चितिः तदाप्येना(ने) उपधाय तासामुपरि स्वयमातृण्णा विकर्णी चोपधीयते । अथवा अत्र वा विकर्णीं स्वयमातृण्णां चोपदध्यादिति वा करोति पक्षम्' इति ।

अत्रैकां रेतस्सिचं स्थविरस्य **स्वराड्ज्योतिरधारयत्तया । प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ परमेष्ठी तेऽधिपतिस्तया** विश्वज्योतिषम्[१५१(अ)] ।

**तपश्च तपस्यश्च शैशिरावृतू अग्नेरन्तश्लेषोऽसि --- द्यावापृथिवी शैशिरावृतू अभिकल्पमाना --- विशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्** द्वे ऋतव्ये समानतयादेवते । अवकामनूपदधाति ।

***देवानां यान्यसि तया । देवानां देवयान्यसि तया*** द्वे संयान्यौ ।

विरम्य तूष्णीं प्रत्यवरुह्य मध्यन्दिने द्विस्तनं व्रतम् । ततः आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य । **या ते अग्ने हराशया** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते नाश्वपरिणयनम्[१५२] । औदुम्बरीस्समिधो घृते वासयति । घृतं चाप्सु । रात्रौ च द्विस्तनव्रतम् । **अग्ने त्वꣳ सु जागृहि** इत्यादि ।

## ॥ अथ याज्ञसेनी चितिः ॥

उपोदये ***अग्नीन् ज्योतिष्मतः कुरुत*** इत्यादि पूर्ववत् । श्वो भूते विसृष्टवाचि यजमाने पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य पञ्चम्याश्चितेश्शेषं याज्ञसेनीं चितिं चिनोति । **या ते अग्ने हराशया** इत्युपसदाहुतिः । सुब्रह्मण्यान्ते तूष्णीमारुह्य **अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति तया ॥ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतस्तया ॥ अयमग्निस्सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणान्तया** तिस्रो गायत्रीः पुरस्तादुपदधाति ।

**भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहन्तया ॥ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवाऽऽयतीमुषासम् । यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ तया ॥ अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । गविष्ठिरो नमसास्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत्तया** तिस्रस्त्रिष्टुभो दक्षिणतः ।

---

१५१(अ). अत्र चित्यग्निप्रणयनेन प्रणीतानां तिसृणां पादेष्टकानां तृतीयामुपदधाति ।

१५२. अत्र 'सुब्रह्मण्याह्वयान्ते तु श्वेतोऽश्वः परिणीयते' इति वासुदेवकारिका ।

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदख्षः सुविताय नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिस्तया ॥ त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने । स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्र-मङ्गिरस्तया ॥ यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते । इन्द्रेण देवैस्सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुस्तया तिस्रो जगतीः पश्चात् ।

त्वां चित्रश्रवस्तम हवन्ते विख्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे तया ॥ सखायः सँव्वः सम्यञ्चमिषꣳ स्तोमं चाग्नये । वर्षिष्ठाय ख्षितीनामूर्जो नप्त्रे सहस्वते तया ॥ सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर तया तिस्रोऽनुष्टुभ उत्तरतः ।

एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतन्तया ॥ स योजते अरुषो विश्वभोजसा स दुद्रवथ्स्वाहुतः । सुब्रह्मा यज्ञस्सुशमी वसूनां देवꣳ राधो जनानान्तया ॥ उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः । उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरस्तया तिस्रो बृहतीर्यथावकाशम् ।

अग्ने वाजस्य गोमत ईशानस्सहसो यहो । अस्मे धेहि जातवेदो महि श्रवस्तया ॥ स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि तया ॥ ख्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः । स तिग्मजम्भ रख्षसो दह प्रति तया तिस्र उष्णिहो यथावकाशम् ॥

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर तया ॥ आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते । सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आ भर तया ॥ उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर तया तिस्रः पङ्क्तीर्यथावकाशम् ।

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदि स्पृशम् । ऋध्यामा त ओहैस्तया ॥ अधा ह्यग्ने क्रतोर्भद्रस्य दख्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ तया ॥ आभिष्टे

**अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्मास्तया ।** तिस्रोऽक्षर-पङ्क्तीर्यथावकाशम्[१५३] ।

**अग्निꣳ होतारं मन्ये दास्वन्तं वसोस्सूनुꣳ सहसो जातवेदसम् । विप्रं न जातवेदसम् । य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा । घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषस्तया** अतिछन्दसं मध्ये ।

**अग्ने त्वं नो अन्तम उत त्राता शिवो भव वरूथ्यस्तया ॥ तं त्वा शोचिष्ठ दीदिवस्सुम्नाय नूनमीमहे सखिभ्यस्तया ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दास्तया** तिस्रो द्विपदा अन्ततः[१५४] ।

**इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मि तया । आघाराभ्यां त्वा सयुजा युजा युनज्मि तया । तेजसा त्वा सयुजा युजा युनज्मि तया । वर्चसा त्वा सयुजा युजा युनज्मितया । उक्थेभिस्त्वा सयुजा युजा युनज्मि तया । स्तोमेभिस्त्वा सयुजा युजा युनज्मि तया । छन्दोभिस्त्वा सयुजा युजा युनज्मि तया । रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्मि तया** अष्टौ सयुजः ॥

***रोहितेषु त्वा जीमूतेषु सादयामि तया । अरुणेषु त्वा जीमूतेषु सादयामि तया । कृष्णेषु त्वा जीमूतेषु सादयामि तया । नीलेषु त्वा जीमूतेषु सादयामि तया । सितेषु त्वा जीमूतेषु सादयामि तया*** पञ्च जीमूताः ॥

**अम्बा नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि तया ॥ दुला नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि तया ॥ नितत्निर्नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि तया ॥ अभ्रयन्ती नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप**

---

१५३. **एभिर्नो अर्कैर्भवा नो अर्वाङ्सुवर्न ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैस्तया** इति चतुर्थी अक्षरपङ्क्तिर्विकल्प्यते ।

१५४. उपधानकाले एतेषां मन्त्राणां पाठविषये भूमिका द्रष्टव्या । कपर्दिभाष्यानुसारेण वासुदेवदीक्षितकारिकानुसारेण च एवं अर्धर्चे विरामो न भवति ।

दधामि तया ॥ मेघयन्ती नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि तया ॥ वर्षयन्ती नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि तया ॥ चुपुणीका नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि तया सप्त कृत्तिकाः ॥

पुरोवातसनिरसि तया । अभ्रसनिरसि तया । विद्युथ्सनिरसि तया । स्तनयित्नुसनिरसि तया । वृष्टिसनिरसि तया पञ्च वृष्टिसनीरनुपरिहारम् । प्रतिदिशमेकां मध्ये ॥

सलिलाय त्वा तया । सर्णीकाया त्वा तया । सतीकाय त्वा तया । केताय त्वा तया । प्रचेतसे त्वा तया । विवस्वते त्वा तया । दिवस्त्वा ज्योतिषे तया । आदित्येभ्यस्त्वा तया अष्टावादित्येष्टकाः ॥

ऋचे त्वा तया । रुचे त्वा तया । द्युते त्वा तया । भासे त्वा तया । ज्योतिषे त्वा तया पञ्च घृतेष्टका अनुपरिहारम् ॥

यशोदां त्वा यशसि सादयामि तेनर्षिणा तेन ब्रह्मणा तया । तेजोदां त्वा तेजसि सादयामि तेनर्षिणा तेन ब्रह्मणा तया । पयोदां त्वा पयसि सादयामि तेनर्षिणा तेन ब्रह्मणा तया । वर्चोदां त्वा वर्चसि सादयामि तेनर्षिणा तेन ब्रह्मणा तया । द्रविणोदां त्वा दविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया पञ्च यशोदाः[१५५] ॥

भूयस्कृदसि तया । वरिवस्कृदसि तया । प्राच्यसि तया । ऊर्ध्वासि तया । अन्तरिख्षसदस्यन्तरिख्षे सीद तया पञ्च भूयस्कृतः ॥

अप्सुषदसि तया । श्येनसदसि तया । गृध्रसदसि तया । सुपर्णसदसि तया । नाकसदसि तया । पञ्चाग्निरूपाणि ॥

पृथिव्यास्त्वा द्रविणे सादयामि तया । अन्तरिख्षस्य त्वा द्रविणे सादयामि तया ।

---

१५५. उज्वलकारिकारीत्या अष्टोत्तरशतद्वये पञ्चमे प्रस्तारे यशोदानन्तरं ऋषभः प्राजापत्या पञ्चाज्यान्यः । पृथिव्यै त्वा, अन्तरिक्षाय त्वा, दिवे त्वा इति तिस्रो लोकेष्टकाः । अग्नये त्वा पवमानाय, अग्नये त्वा पावकाय, अग्नये त्वा शुचये इति तिस्रः पावमान्यः । ऋचा त्वा छन्दसा सादयामि, वषट्कारेण त्वा छन्दसा सादयामि, हिङ्कारेण त्वा छन्दसा सादयामि, प्रस्तावेन त्वा छन्दसा सादयामि, प्रतिहारेण त्वा छन्दसा सादयामि, उद्गीथेन त्वा छन्दसा सादयामि, निधनेन त्वा छन्दसा सादयामि इति सप्त छन्दस्याः । चतस्रो राष्ट्रभृतः । अवशिष्टाः एकोनत्रिंशत् लोकंपृणा इत्युपधानक्रमः ।

दिवस्त्वा द्रविणे सादयमि तया । दिशां त्वा द्रविणे सादयमि तया । द्रविणोदां त्वा द्रविणे सादयमि तया पञ्च द्रविणोदाः ॥

प्राणं मे पाहि तया । अपानं मे पाहि तया । व्यानं मे पाहि तया । आयुर्मे पाहि तया । विश्वायुर्मे पाहि तया । सर्वायुर्मे पाहि तया षडायुष्याः ॥

अग्ने यत्ते परꣳ हृन्नाम तावेहि सꣳरभावहै पाञ्चजन्येष्वप्येध्यग्ने तया अग्नेर्हृदयम् ॥

यावास्तया । अयावास्तया । एवास्तया । ऊमास्तया । सब्दस्तया । सगरस्तया । सुमेकस्तया सप्तर्तव्याः । एतासु ऋतव्यासु न अवकामनूपदधाति ॥

विश्वकर्मा दिशां पतिस्स नः पशून्पातु सोऽस्मान् पातु तस्मै नमस्तया । प्रजापतिर्दिशां पतिस्स नः पशून्पातु सोऽस्मान् पातु तस्मै नमस्तया । रुद्रो दिशां पतिस्स नः पशून्पातु सोऽस्मान् पातु तस्मै नमस्तया । वरुणो दिशां पतिस्स नः पशून्पातु सोऽस्मान् पातु तस्मै नमस्तया । अग्निर्दिशां पतिस्स नः पशून्पातु सोऽस्मान् पातु तस्मै नमस्तया पञ्च हिरण्येष्टकाः प्रतिदिशमेकां मध्ये ॥

प्राणाय त्वा चक्षुषे त्वा तया । व्यानाय त्वा चक्षुषे त्वा तया । अपानाय त्वा चक्षुषे त्वा तया । वाचे त्वा चक्षुषे त्वा तया चतस्रः स्वयमातृण्णाः प्रतिदिशम् ॥

त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि तया ऋषभेष्टकामुपदधाय ।

संवथ्सरस्य प्रतिमां यां त्वा रात्र्युपासते । प्रजाꣳ सुवीराङ्कृत्वा विश्वमायुर्व्यशनवत्तया प्राजापत्याम् ।

शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे । शतं यो नश्शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा तया ॥ ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परि दत्तेह सर्वे तया ॥ ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षास्सुवितन्नो अस्तु । तेषामृतूनाꣳ शतशारदानान्निवात एषामभये स्याम तया ॥ इदुवथ्सराय परिवथ्सराय सँव्वथ्सराय कृणुता बृहन्नमः ।

तेषां वय७ं सुमतौ यज्ञियानां ज्योगजीता अहतास्स्याम तया ॥ भद्रान्नश्श्रेयस्समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोभूः पितो आ विशस्व शन्तोकाय तनुवे स्योनस्तया पञ्चाज्यानीः प्रतिदिशमेकां मध्ये ॥

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पुरस्तादघायुरभिदासत्येत७ं सोऽश्मानमृच्छतु तया ॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नो दख्षिणतोऽघायुरभिदासत्येत७ं सोऽश्मानमृच्छतु तया ॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पश्चादघायुरभिदासत्येत७ं सोऽश्मानमृच्छतु तया ॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो न उत्तरतोऽघायुरभिदासत्येत७ं सोऽश्मानमृच्छतु तया चतस्रो वज्रिणीः प्रतिदिशमश्मनः इषुहस्त उपदधाति ।

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो न उपरिष्टादघायुरभिदासत्येत७ं सोऽश्मानमृच्छतु तया मध्ये पञ्चमीमेके समामनन्ति ।

अग्ने यशस्विन् यशसेममर्पयेन्द्रावतीमपचितीमिहाऽऽवह । अयं मूर्धा परमेष्ठी सुवर्चास्समानानामुत्तमश्लोको अस्तु तया ॥ भद्रं पश्यन्त उप सेदुरग्रे तपो दीख्षामृषयस्सुवर्विदः । ततः ख्षत्रं बलमोजश्च जातन्तदस्मै देवा अभि सन्नमन्तु तया ॥ धाता विधाता परमोत सन्दृक्प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दा७ंसि निविदो म आहुरेतस्मै राष्ट्रमभिसन्नमाम तया ॥ अभ्यावर्तध्वमुपमेत साकमय७ं शास्ताऽधिपतिर्वो अस्तु । अस्य विज्ञानमनु स७ंरभध्वमिमं पश्चादनु जीवाथ सर्वे तया चतस्रो राष्ट्रभृतः पुरस्तादुपधाय हिरण्येष्टकाभिः सर्वतोमुखमुपदधाति ।

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपा७ं रेता७ंसि जिन्वति तया गायत्रीं पुरस्तादुपदधाति ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहं तया त्रिष्टुभम् दक्षिणे पक्षे ॥

जनस्य गोपा अजनिष्ट जागृविरग्निस्सुदख्षः सुविताय नव्यसे । घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिस्तया जगतीम् पुच्छे ॥

**त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे तया** अनुष्टुभमुत्तरे पक्षे ॥

**अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्र॰ँ हृदिस्पृशम् । ऋध्यामा त ओहैस्तया** पङ्क्तिं मध्ये ॥

**लोकम्पृण --- असीषदन् ॥ ता अस्य सददोहसः --- दिवस्तया** । इति द्वाभ्यां अवशिष्टमेकविंशत्या[१५६] पञ्चभिर्वा लोकम्पृणाभिः प्रच्छादयति ॥

ततश्चितौ हिरण्यं निधाय । **चित्तिमचित्तिं --- रास्वादितिमुरुष्य** चितिक्लृप्त्याभिमृशति ।

**यत्ते चितं यदु चितं, यास्ते अग्ने, चित्तिमचित्तिं, *वयमग्ने धनवन्तः*, *रायस्पोषं नो धेहि* जातवेदः, *ईशानं त्वा शुश्रुमो, दुहां ते द्यौः*, यो रुद्रो अग्नौ---नमो अस्तु देवाः** एताभिः स्वयञ्चित्याभिमृशति ।

उत्तरतः कृष्णोऽश्वस्तिष्ठति । श्यावो वा । तमालभ्य चात्वालात् पुरीषमाहृत्य । **पृष्टो दिवि --- पातु नक्तम्** वैश्वानर्यर्चा चितावनुव्यूहति । सा चितिर्भवति । **वाङ्म आसन्नसोः --- मा मा हि॰ँसीः** प्रत्यवरोहन् जपति ।

जुह्वां सकृत् सकृत् गृहीत्वा[१५७] ***यो अप्स्वन्तरग्निः, यस्सोमे अन्तः, पृष्टो दिवि, येनेन्द्रस्य रथं, य॰ँहुतादमग्निं,* उक्षान्नाय वशान्नाय** इति षडाहुतीर्हुत्वा । **अग्ने भूरीणि तव --- पृष्टबन्धो स्वाहा** आग्नेय्या धामच्छदा चितिं चितिमुपधायाभिजुहोति ॥

**अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवं सप्रीतो याति वार्यमिष॰ँ स्तोतृभ्य आभर** आग्नेय्या पङ्क्त्या पञ्चमीं चितिमभिमृशति ॥

तदानीमेव आपराण्हिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्ति । प्रवर्ग्येण प्रचरिष्यन्त इत्यादि समानम् । तूष्णीं समिधमाधाय **भूः स्वाहा** इत्यग्निहोत्रहोमः । **या ते अग्ने हराशया** इत्युपसदाहुतिः ।

---

१५६. पञ्चम्यां चितौ अस्मिन् द्विशते प्रस्तारे यशोदान्ते ऋषभः, प्राजापत्या, पञ्चाज्यान्यः, तिस्रो लोकेष्टकाः, तिस्रः पावमान्यः, सप्त छन्दस्याः, चतस्रो राष्ट्रभृतः इत्येवंक्रमेण उपधाने अवशिष्टा एकविंशतिर्लोकम्पृणास्सम्पद्यन्ते।

१५७. जुह्वां षड्गृहीतं गृहीत्वा इति पाठा० ।

# ॥ अथ सञ्चितकर्म ॥

सुब्रह्मण्यान्ते श्वेतमश्वं परिणीय **अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः ॥ युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यस्सदः** द्वाभ्यां सञ्चितमग्निमभिमृशति । ब्रह्मा दक्षिणत आस्ते ।

**वसवस्त्वा रुद्रैः पुरस्तात्पान्तु** पुरस्तात् प्रत्यङ्मुखः । न प्राचीनावीती[१५८] **पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्तु** दक्षिणत उदङ्मुखः । प्रसव्यमेत्य **आदित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु** पश्चात् प्राङ्मुखः । **द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु** उत्तरतो दक्षिणामुखः । **देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु** एतैर्यथालिङ्गं सञ्चितमग्निमाज्येन प्रोक्षति । मध्य उत्तमेन प्राङ्मुखः ।

**सहस्रस्य प्रमा असि । सहस्रस्य प्रतिमा असि । सहस्रस्य विमा असि । सहस्रस्योन्मा असि । साहस्रोऽसि सहस्राय त्वा** सहस्रेण हिरण्यशल्कैः ऊर्ध्वस्तिष्ठन् प्रतिदिशमग्निं प्रोक्षति द्वाभ्यां द्वाभ्यां शताभ्याम् । मध्य उत्तमाभ्यां प्राङ्मुखः ॥

**इमा मे अग्न इष्टका धेनवस्सन्त्वेका च शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवस्सन्तु षष्टिस्सहस्रमयुतमक्षीयमाणा ऋतस्थास्स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीस्स्वधाविनीस्ता मे अग्न इष्टका धेनवस्सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिँल्लोके** इष्टका धेनूः यजमानः कुरुते ॥

अध्वर्युः – **अग्निरसि वैश्वानरोऽसि । सँव्वत्सरोऽसि परिवत्सरोऽसि । इदावत्सरोऽ–सीदुवत्सरोऽसि । इद्वत्सरोऽसि वत्सरोऽसि । तस्य ते वसन्तश्शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् । अहोरात्राणीष्टकाः । तस्य ते मासाश्चार्धमासाश्च कल्पन्ताम् । ऋतवस्ते कल्पन्ताम् । सँव्वत्सरस्ते कल्पताम् । अहोरात्राणि ते कल्पन्ताम् । एति**

---

१५८. अग्निसंस्कारत्वात्,. अपितृकर्मत्वात् ।

**प्रेति वीति समित्युदिति । प्रजापतिस्त्वा सादयतु । तया देवतयाङ्गिरस्वद्ध्रुवस्सीद ।** ऐडिक्या चित्या अध्वर्युरग्निमभिमृश्य । शतरुद्रीयं जुहोति ।

**शतरुद्रीयहोमः :-**

जर्तिलयवाग्वा गवीधुकयवाग्वा वा जर्तिलैर्गवीधुकसक्तुभिः कुसयसर्पिषाऽजाक्षीरेण मृगीक्षीरेण वा जुहुयात् अर्कपर्णेन उदङ्मुखस्तिष्ठन् । उत्तरस्य पक्षस्य उत्तरापरस्यां स्रक्त्यां विकर्ण्यां स्वयमातृण्णायां अनुपरिचारं वा । नमस्ते रुद्रमन्यव इत्येताननुवाकान् त्रैधं विभज्य[१५९] उक्तक्षीराणामन्यतमेन माहिषक्षीरेण वा उत्तरपक्षस्य अपरकोणसमीपे लौकिकेष्टकाभिः अग्निसंमितं पीठं कृत्वा तत्रस्थ एव दक्षिणेनार्कपर्णेन सन्ततया धारया शतरुद्रियानुवाकानां तृतीयेन **नमस्ते रुद्रमन्यव** इत्यारभ्य **नमस्सभाभ्यः सभापतिभ्यश्च वो नमः स्वाहा** इत्यन्तं जानुदघ्ने धारयमाणो जुहोति । रुद्रेभ्य इदम्[१६०] । स्वयमातृण्णायां चेद्दीर्घवंशान्तर्गतपर्वस्थलानि छित्वा तदन्तेऽर्कपर्णं बध्वा वंशे पय आसिच्य तेन सन्ततया धारया जुहुयात् । **नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नम** इत्यारभ्य **नमः पार्याय चावार्याय च स्वाहा** नाभिदघ्ने जुहोति । रुद्रेभ्य इदम् ॥ **नमः प्रतरणाय च** इत्यारभ्य **य एतावन्तश्च --- तन्मसि स्वाहा** आस्यदघ्ने जुहोति । रुद्रेभ्य इदम् ॥

अस्मिन् महत्यादिषु चाष्टकेषु तेषां सहस्रेत्यनुषङ्ग इष्टः ।

**नमो रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तँव्वो जम्भे दधामि स्वाहा** जानुदघ्ने जुहोति । रुद्रेभ्य इदम् ॥

**नमो रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तँव्वो जम्भे दधामि स्वाहा** नाभिदघ्ने जुहोति । रुद्रेभ्य इदम् ॥

**नमो रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि**

---

१५९. त्रेधाविभागस्य होमविषये भूमिका द्रष्टव्या ।

१६०. शतरुद्रेभ्य इदं इति पाठा० ।

**तँव्वो जम्भे दधामि स्वाहा** आस्यदघ्ने जुहोति[१६१]। रुद्रेभ्य इदम् ॥ नमो रुद्रेभ्यः इत्येतानेव यजमानं वाचयति ।

[१६२]अपि वा **नमस्ते रुद्रमन्यव** इत्युपक्रम्य **नमस्तक्षभ्यस्स्वाहा** जानुदघ्ने धारयमाणो जुहोति । रुद्रेभ्य इदम् । **रथकारेभ्यश्च वो नम** इत्युपक्रम्य **नमस्स्वायुधाय च स्वाहा** नाभिदघ्ने धारयमाणो जुहोति । रुद्रेभ्य इदम् । **सुधन्वने च** इत्युपक्रम्य **पराचीना मुखा कृधि स्वाहा** आस्यदघ्ने धारयमाणो जुहोति । रुद्रेभ्य इदमिति सर्वत्र त्यागः ।

---

१६१. अयमेव क्रमः सर्वेषु मातृकाग्रन्थेषु दृश्यते । किं तु कपर्दिभाष्ये 'आस्यदघ्ने च उत्तरास्तिस्रः' इति । प्राचीनकारिकासु 'क्रमेण सर्वा अपि चास्यदघ्ने' इति । आन्ध्रपाठे च 'आस्यदघ्ने एव तिस्र आहुतीः' इति । पक्षद्वयस्याप्याधारं नैवोपलभामहे । प्रयोगस्य भाष्यादिभिर्विप्रतिपत्तेः कारणं न जानीमः । विमृशन्तु सूक्ष्मदृष्टयो विद्वांसः । K.D.M. पाठे एतदनन्तरं 'एतानेव विपरीतान् प्रत्यवरोहान् जपति जुहोतीत्येके' इति विद्यते ।

१६२. अपि वा प्रथमादिति पक्षमाश्रित्योत्तरस्य पक्षस्योत्तरापरस्यां स्रक्त्यामिति च पक्षमाश्रित्याजाक्षीरपक्षमाश्रित्य च प्रयोगः । अग्निसंमितां वेदिमुद्धत्य तस्यामर्कपर्णं धारयन्नध्वर्युरुदङ्मुखस्तिष्ठति । अन्यः कश्चित्तस्मिन्नर्कपुटे अजाक्षीरमासिञ्चन् तिष्ठति । यदा धाराग्निं प्राप्नोति तत्प्रतिपद्यते । जानुदघ्ने धारयन् नमस्ते रुद्रमन्यव इति प्रथमं द्वितीयं तृतीयं चानुवाकं निगद्य चतुर्थेनुवाके नमस्तक्षभ्य इत्युक्त्वा स्वाहाकरोति । रुद्रेभ्य इदम् । अथ नाभिदघ्ने धारयन् रथकारेभ्यश्च व इति शिष्टमनुवाकं पञ्चमं षष्ठं चानुवाकं सप्तमानुवाके नमस्स्वायुधायेत्यन्तमुक्त्वा स्वाहाकरोति । रुद्रेभ्य इदम् । अथ मुखदघ्ने धारयन् सुधन्वने चेत्यादि शिष्टमनुवाकमष्टमं नवमं दशमं चानुवाकं निगद्य पराचीना मुखा कृधीत्यन्ते स्वाहाकरोति । रुद्रेभ्य इदम् । सहस्राणि सहस्रशो --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । अस्मिन्महत्यर्णवे --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । नीलग्रीवाः शितिकण्ठाः --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । नीलग्रीवाः शितिकण्ठा --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । ये वृख्षेषु --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । ये भूतानामधिपतयो --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । ये अन्नेषु --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । ये पथां --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । ये तीर्थानि --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । य एतावन्तश्च --- तन्मसि स्वाहा ॥ रुद्रेभ्य इदम् । इति मुखदघ्ने धारयन्नेव दशावतानान् हुत्वा अथान्वारोहान् जुहोति । नमो रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो --- दधामि स्वाहा जानुदघ्ने जुहोति । रुद्रेभ्य इदम् ॥ नमो रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो --- दधामि स्वाहा नाभिदघ्ने जुहोति । रुद्रेभ्य इदम् ॥ नमो रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो --- दधामि स्वाहा आस्यदघ्ने जुहोति । रुद्रेभ्य इदम् ॥ आरोहान् हुत्वा एतानेव यजमानं वाचयित्वा एतानेव विपरीतान् प्रत्यवरोहान् जुहोति । नमो रुद्रेभ्यो ये दिवि --- दधामि स्वाहा इत्यास्यदघ्ने । नमो रुद्रेभ्यो येऽन्तरिक्षे --- दधामि स्वाहा इति नाभिदघ्ने । नमो रुद्रेभ्यो ये पृथिव्यां --- दधामि स्वाहा इति जानुदघ्ने । असञ्चरे पशूनामर्कपर्णमुदस्यति । अप उपस्पृश्य इति M.M पाठः ।

**सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**अस्मिन्महत्यर्णवेऽन्तरिख्षे भवा अधि । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**नीलग्रीवाः शितिकण्ठाः शर्वा अधः, ख्षमाचराः । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**नीलग्रीवाः शितिकण्ठा दिव॒ रुद्रा उपश्रिताः । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**ये वृख्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**ये पथां पथिरख्षय ऐलबृदा यव्युधः । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥**

**य एतावन्तश्च भूया॒सश्च दिशो रुद्रा वितस्थिरे । तेषा॒ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा ॥** इत्येताभिः दशभिः प्रतिमन्त्रं जुहोति ।

**नमो रुद्रेभ्य** इति तिसृभिः पूर्ववदन्वारोहं जुहोति । **नमो रुद्रेभ्यो ये पृथिव्यां --- दधामि स्वाहा** इति जानुदघ्ने । **नमो रुद्रेभ्यो येऽन्तरिक्षे --- दधामि स्वाहा** इति नाभिदघ्ने । **नमो रुद्रेभ्यो ये दिवि --- दधामि स्वाहा** इत्यास्यदघ्ने । आरोहान् हुत्वा एतानेव यजमानं वाचयित्वा एतानेव विपरीतान् प्रत्यवरोहान् जुहोति ।

**नमो रुद्रेभ्यो ये दिवि --- दधामि स्वाहा** इत्यास्यदघ्ने । **नमो रुद्रेभ्यो येऽन्तरिक्षे**

**--- दधामि स्वाहा** इति नाभिदघ्ने । **नमो रुद्रेभ्यो ये पृथिव्यां --- दधामि स्वाहा** इति जानुदघ्ने । असञ्चरे पशूनामर्कपर्णमुदस्यति । अप उपस्पृश्य । **यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु** रौद्रं गावीधुकं चरुं लौकिकेऽग्नौ श्रपयित्वा एतेन यजुषा यस्यामिष्टकायां शतरुद्रीयं जुहोति तस्यां प्रतिष्ठापयति ।

तिसृधन्वमयाचितं यजमानो ब्राह्मणाय दत्वा अध्वर्यवे[१६३]। **यत्ते रुद्र पुरो धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र सँव्वत्सरेण नमस्करोमि** इति पुरस्तात्प्रत्यङ्मुखः । **यत्ते रुद्र दखिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवथ्सरेण नमस्करोमि** इति दक्षिणत उदङ्मुखः। **यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदावत्सरेण नमस्करोमि** इति पश्चात्प्राङ्मुखः। **यत्ते रुद्रोत्तराद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदुवथ्सरेण नमस्करोमि** इति उत्तरतो दक्षिणामुखः। **यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वत्सरेण नमस्करोमि** इति पश्चात्प्राङ्मुख उपरिष्टात् । एवमेतैः सञ्चितमग्निं यथालिङ्गमुपतिष्ठते ।

उदकुम्भमादायाध्वर्युः । **अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि सम्भृतां तां न इषमूर्जं धत्त मरुतः स७ँरराणाः** त्रिः प्रदक्षिणमग्निं परिषिञ्चन् पर्येति । निधाय कुम्भं पुनरादाय । **अश्म७ँस्ते क्षुत्पाप्मानं**[१६४] **ते शुगृच्छतु यं द्विष्मः** त्रिरपरिषिञ्चन् प्रतिपर्येति[१६५]। अवकां वेतसशाखां मण्डूकं च दीर्घवंशे प्रबध्य **समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि । पावको अस्मभ्य७ँ शिवो भव ॥ हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि । पावको अस्मभ्य७ँ शिवो भव ॥ उप ज्मन्नुपवेतसेऽवत्तरं नदीष्वा । अग्ने पित्तमपामसि ॥ मण्डूकि ताभिरा गहि सेमं नो यज्ञम् । पावकवर्ण७ँ शिवं कृधि ॥ पावक आ चितयन्त्या कृपा । क्षामन्नुरुच उषसो न भानुना ॥ तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे । न ततृषाणो अजरः ॥ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥ स नः पावक**

---

१६३. तिसृभिरिषुभिर्युक्तमेकं धनुः अयाचितमपि ब्राह्मणाय दद्यात् इति सायणभाष्यम् ॥ 'अध्वर्यो तिसृधन्वं ते ददामि । अध्वर्युः उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु इति प्रतिगृह्णाति' इति पाठा० ।

१६४ क्षुदमुं इति पाठा० ।

१६५. निधाय कुम्भं अश्म७ँस्ते --- यं द्विष्मः त्रिरपरिषिञ्चन् प्रतिपर्येति इति पाठा० ।

**दीदिवोऽग्ने देवा॑ँ इहाऽऽवह । उप यज्ञ॑ँ हविश्च नः** सप्तभिरष्टाभिर्वा अग्निं विकर्षति । विकर्षन्नेवानुगमयित्वा मण्डूकस्य प्राणान् सर्वान् सँल्लोभ्योत्करे उदस्याप उपस्पृश्य पृष्ठैरुपतिष्ठते ।

गायत्रेण पुरस्तादुपतिष्ठते । बृहद्रथन्तराभ्यां पक्षौ । ऋतुस्थायज्ञायज्ञियेन पुच्छम् । दक्षिणस्यां श्रोण्यां वारवन्तीयेन । उत्तरस्यां वामदेव्येन । अपिपक्षे प्रजापतेः सामानृचं[१६६] गायति । अथवा प्रस्तोता स्वाधीतेन[१६७] अग्न आयूंषीत्यादि । **स्तुतस्य स्तुतमसि --- पतयो रयीणां** अध्वर्युर्यजमानं वाचयति । अथाग्निं सञ्चितमनुगीतमनुशंसेत्[१६८] । यजमानः पश्चादग्निपुच्छस्योपविश्य[१६९] अभिहिङ्कृत्य ***हिं भर्भुवस्सुवरो३म् अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नामो३म्*** इति त्रिः मध्यमया वाचा । **शस्त्रस्य शस्त्रमसि --- पतयो रयीणां** अध्वर्युर्यजमानं वाचयति । अग्ने युक्ष्वाहीत्याद्येतदन्तं ब्रह्मा दक्षिणत आस्ते । एतत्संचितं कर्म ॥

अत्र प्रवर्ग्यमुद्वासयति । प्रवर्ग्यमुद्वासयिष्यन्नित्यादि इममूषुत्यमस्मभ्यमित्यन्तम् ।

जुह्वां पञ्चगृहीतं गृहीत्वा । **स्वयं कृण्वानस्सुगमप्रयावं तिग्मशृङ्गो वृषभश्शोशुचानः । प्रत्न॑ँ सधस्थमनुपश्यमान आतन्तुमग्निर्दिव्यं ततान स्वाहा** । अग्नये तन्तुमत इदम् । **त्वं नस्स्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्ठं वयमारुहेमाथा देवैस्सधमादं मदेम स्वाहा** । अग्नये तन्तुमत इदम् । ***अतिसर्गं वदतो मानवायजुं पन्थामनु पश्यमानाः । अजुषन्त मरुतो यज्ञमेतं वृष्टिर्देवानाममृत॑ँ स्वर्विद॑ँ स्वाहा***[१७०] ।

---

१६६. साम अनृचमिति छेदः । ऋग्वर्जितस्तोभवता साम्ना इत्यर्थः । पक्षस्य आत्मनश्च सन्धिस्थानमपिपक्षः ।

१६७. स्वविधिना इति पाठा० ।

१६८. सञ्चितमग्निं प्रस्तोत्रा सामभिरनुगीतं सन्तं होता यजमानो वा वक्ष्यमाणेन विधिनाऽनुशंसेत् । अनुगीतमिति वचनात् प्रस्तोतुरनुगानानन्तरमेव अनुशंसनं क्रियते ।

१६९. अत्रैवं सूत्रं- 'पिता मातरिश्वेति सञ्चितोक्थ्येन होतानुशंसति । होतर्यकामयमानेऽध्वर्युः' इति । अस्य कपर्दिभाष्यं- "पिता मातरिश्वेति सञ्चितस्याग्नेः यच्छस्त्रं तेन होताग्नेः पश्चात्स्थितः शंसति । अकामयमाने अनिच्छति होतरि शंसनं कर्तुं, अध्वर्युरेव शंसति । पिता मातरिश्वेत्यारभ्य पदानुतक्षुरिति विरम्य बृहस्पतिरुक्थामदानि शंसिषों इत्येतामेव त्रिः । पराचानुशंसतीति वचनात् । अथवा बह्वृचानामेका ऋक् अग्निरस्मि जन्मना इत्यनूच्यते । सकृदेव प्रयोगः इत्युपदेशः' इति ।

१७०. आजुषन्त---सुवर्विद॑ँ स्वाहा इति पाठा० । वृष्टिं देवानां इति पाठा० ।

मरुद्भ्य इदम् । **आवर्तमानो भुवनस्य मध्ये प्रजा विकुर्वन् जनयन्विरूपाः । संवत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः पुरस्तात्स्वाहा**[१७१] संवत्सराय परमेष्ठिन इदम् । **प्रजां दधातु परिवत्सरो नो धाता ददातु सुमनस्यमानः । बह्वीस्साकं बहुधा विश्वरूपा एकव्रता मामभि**[१७२] **संविशन्तु स्वाहा ।** परिवत्सराय धात्र इदम् । पञ्चान्वारोहान् शालामुखीये हुत्वा अपरं पञ्चगृहीतं गृहीत्वा कार्ष्णी उपानहावुपमुञ्चते । **चिते त्वा** दक्षिणाम् । **मनुचिते**[१७३] **त्वा** उत्तराम् । एवं यजमानः कार्ष्णी उपानहौ **चिते त्वा , मनुचिते त्वा** । **अपामिदं न्ययनꣳ समुद्रस्य निवेशनम् । अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव** द्वाभ्यामध्वर्युरग्निमधिरोहति ।

**पृथिवीमाक्रमिषं प्राणो मा मा हासीत् । अन्तरिषमाक्रमिषं प्रजा मा मा हासीत् । दिवमाक्रमिषꣳ सुवरगन्म** । एतैर्यजमानोऽधिरोहति ।

सर्वत्र हिरण्यमुपास्यन् । **नृषदे वट्** दक्षिणमंसम् । नृषद इदम् । **अप्सुषदे वट्** उत्तरां श्रोणिम् । अप्सुषद इदम् । **वनसदे वट्** दक्षिणां श्रोणिम् । वनसद इदम् । **बर्हिषदे वट्** उत्तरमंसम् । बर्हिषद इदम् । **सुवर्विदे वट्** मध्ये । सुवर्विद इदम् । पञ्चभिरुत्तरवेदिवत् अग्निं स्वयमातृण्णां वा व्याघार्य । उद्ग्रहणान्तम् । न स्वाहाकारः । सर्वत्र अग्नय इदमिति वा ।

**ये देवा देवानां यज्ञिया यज्ञियानाꣳ सँव्वत्सरीणमुप भागमासते । अहुतादो हविषो यज्ञे अस्मिन्थ्स्वयं जुहुध्वं मधुनो घृतस्य ॥ ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य । येभ्यो नर्ते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु** द्वाभ्यामनुपरिचारं दध्ना मधुमिश्रेण दर्भग्रुमुष्टिना अग्निं व्यवोक्ष्य कूर्मपृषन्तं[१७४] कृत्वा ॥ **प्राणदा अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः। अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव** प्रत्यवरुह्य । तूष्णीं यजमानः प्रत्यवरोहति । उभावुपानहावुन्मुच्य । जुह्वां सकृद्गृहीत्वा **अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वं न्यत्रिणम् । अग्निर्नो वꣳसते रयिम् ॥ सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति । अदब्धो**

---

१७१. *परस्तात्स्वाहा* इति पाठा० ।
१७२. एकव्रतानामभि इति पाठा० ।
१७३. अनुचिते, मनचिते इति पाठा० ।
१७४. कूर्मपृष्ठं यथा तथा कृत्वा ।

**गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि स्वाहा** द्वाभ्यां शालामुखीये अग्नयेऽनीकवत एकामाहुतिं जुहोति ॥ अग्नयेऽनीकवत इदम् ॥

**वैश्वकर्महोमः :-**

षोडशगृहीतेन स्रुचं पूरयित्वा शालामुखीये एव वैश्वकर्मणानि जुहोति । **य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः । स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ विवेश ॥ विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक् । तेषामिष्टानि समिषा मदन्ति यत्र सप्तऋषीन् पर एकमाहुः ॥ यो नः पिता जनिता यो विधाता यो नस्सतो अभ्या सज्जजान । यो देवानां नामधा एक एव तꣳ सम्प्रश्नं भुवना यन्त्यन्या ॥ त आऽयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्ता सूर्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि ॥ न तं विदाथ य इदं जजाना-न्यद्युष्माकमन्तरं भवाति । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्गुहा यत् । कꣳ स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ॥ तमिद्गर्भं प्रथमं दध्र आपो यत्र देवास्समगच्छन्त विश्वे । अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधि श्रितम् ॥ विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद् द्वितीयः । तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात् पुरुत्रा स्वाहा ॥** अर्धमाज्यं जुहोति । विश्वकर्मण इदं ।

**चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने । यदेदन्ता अददृꣳहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्किमासीत् । यदी भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ किꣳ स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन्न् ॥ या ते धामानि परमाणि याऽवमा या मध्यमा विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि स्वधावस्स्वयं यजस्व तनुवं जुषाणः ॥ वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे**

**अद्या हुवेम । स नो नेदिष्ठा हवनानि जोषते विश्वशम्भूरवसे साधुकर्मा ॥ विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तनुवं जुषाणः । मुह्यन्त्वन्ये अभितस्सपत्ना इहास्माकं मघवा सूरिरस्तु ॥ विश्वकर्मन्, हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशस्समनमन्त पूर्वीरयमुग्रो विहव्यो यथाऽसत्स्वाहा ।** विश्वकर्मण इदम् । नानासूक्ताभ्यां द्वे आहुती हुत्वा ।

**अग्निप्रणयनम् :–**

**उदेनमुत्तरां नयाग्ने घृतेनाऽऽहुत । रायस्पोषेण सꣳ सृज प्रजया च धनेन च ॥** अग्नय इदम् । **इन्द्रेमं प्रतरां कृधि सजातानामसद्वशी । समेनं वर्चसा सृज देवेभ्यो भागधा असत् ॥** इन्द्रायेदम् । **यस्य कुर्मो हविर्गृहे तमग्ने वर्धया त्वम् । तस्मै देवा अधि ब्रवन्नयं च ब्रह्मणस्पतिः** अग्नय इदम् । औदुम्बरीस्समिधो घृतोषितास्तिसृभिस्तिस्र आधाय । पशुबन्धवदग्निं प्रणयति । आहवनीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्य *अग्नये प्रणीयमानायानुब्रू३हि* । **उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमः सुप्रतीको विभावसुः** उद्यम्याग्निमाहनीय उद्यतहोमं जुहोति ***यत्ते पावक चकृम --- पुरस्तात्स्वाहा*** । अपादानभूतायाग्नय इदम् । प्रथमायां त्रिरनूक्तायां **पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः । रायस्पोषे यज्ञपतिमाभजन्तीः ॥ रायस्पोषे अधि यज्ञो अस्थात्समिद्धे अग्नावधि मामहानः । उक्थपत्र ईड्यो गृभीतस्तप्तं घर्मं परिगृह्यायजन्त ॥ ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय धर्त्रे जोष्ट्रे । देवश्रीश्श्रीमणाश्शतपयाः परिगृह्य देवा यज्ञमायन् ॥ सूर्यरश्मिर् हरिकेशः पुरस्तात्सविता ज्योतिरुदयाꣳ अजस्रम् । तस्य पूषा प्रसवँय्याति देवः सम्पश्यन्विश्वा भुवनानि गोपाः ॥ देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतꣳ शमित्रे शमिता यजध्यै । तुरीयो यज्ञो यत्र हव्यमेति ततः पावका आशिषो नो जुषन्ताम्** पञ्चभिर्हरत्याग्नीध्रात् ।

आशुश्शिशान इति दक्षिणतो ब्रह्मा दशर्चेनान्वेति । **आशुश्शिशानो वृषभो न युध्मो घनाघनः, क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरश्शतꣳ सेना अजयत् साकमिन्द्रः ॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण**

जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा । स इषुहस्तैस्स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन । सꣳसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता । बृहस्पते परि दीया रथेन रक्षोहाऽमित्राꣳ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् । गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायोऽनु सꣳ रभध्वम् । बलविज्ञायस्स्थविरः प्रवीरस्सहस्वान्, वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् । अभि गोत्राणि सहसा गाहमानोऽदायो वीरश्शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्रयुत्सु । इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे । इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् । अस्माकमिन्द्रस्समृतेषु ध्वजेष्वस्माकँय्या इषवस्ता जयन्तु । अस्माकँव्वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु इति ॥

अध्वर्युः – आग्नीध्रदेशं प्राप्य विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् । स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥ उक्षा समुद्रो अरुणस्सुपर्णः पूर्वस्य योनिं पितुरा विवेश । मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसः पात्यन्तौ द्वाभ्यामाग्नीध्रीयेऽश्मानं निधाय[१७५] ।

इन्द्रँव्विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥ सुम्नहूर्यज्ञो देवाꣳ आ च वक्षद्यक्षदग्निर्देवो देवाꣳ आ च वक्षत् ॥ वाजस्य मा प्रसवेनोऽद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः ॥ उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे

---

१७५. अश्मा श्वेतवर्णः स्यात् 'निहितः पृश्निरश्मेति' लिङ्गात् ।

**विषूचीनान्व्यस्यताम्** चतसृभिः आपुच्छात् गत्वा ।

**प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह । विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ क्रमध्वमग्निना नाकमुख्य७ँ हस्तेषु बिभ्रतः । दिवः पृष्ठ७ँ सुवर्गत्वा मिश्रा देवेभिराध्वम् ॥ पृथिव्या अहमुदन्तरिक्षमाऽरुहमन्तरिक्षा-द्दिवमाऽरुहम् । दिवो नाकस्य पृष्ठात्सुवर्ज्योतिरगामहम् ॥ सुवर्यन्तो नापेक्षन्त आ द्या७ँ रोहन्ति रोदसी । यज्ञँय्ये विश्वतोधार७ँ सुविद्वा७ँसो वितेनिरे ॥ अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् । इयक्षमाणा भृगुभिस्सजोषास्सुर्वर्यन्तु यजमानास्स्वस्ति** इति पञ्चभिरध्वर्युरग्निमधिरोहति । प्रतिप्रस्थात्रेऽग्निं प्रदाय ।

**नक्तोषासा समनसा विरूपे धापयेते शिशुमेक७ँ समीची । द्यावा ख्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदा अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रमपानाः । त्व७ँ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा** द्वाभ्यां संहिताभ्यां[१७६] दध्नः पूर्णामौदुम्बरीं[१७६अ] स्वयमातृण्णायां जुहोति । अग्नय इदम् ।

**नक्तोषासा --- द्रविणोदास्स्वाहा** जुह्वा कृष्णायै श्वेतवत्सायै पयसा स्वयमातृण्णायामेव जुहोति । अग्नय इदम् ।

ऊर्णावन्तं प्रथमस्सीद योनिमिति होतुरभिज्ञाय विश्वायुरसीत्यादिभिः पौतुद्रवैः परिधिभिरग्निं परिदधाति[१७७] । अग्नेर्भस्मासीति स्वयमातृण्णायां सम्भारान्निवपति गुल्गुलु सुगन्धितेजनमित्यादीन् । **सुपर्णोऽसि गरुत्मान् पृथिव्या७ँ सीद पृष्ठे पृथिव्यास्सीद, भासाऽन्तरिक्षमा पृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृ७ँह ॥ आजुह्वानस्सुप्रतीकः पुरस्तादग्ने स्वाँय्योनिमा सीद साध्या । अस्मिन्थ्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च**

---

१७६. 'देवा अग्निं धारयन् द्रविणोदा अग्ने सहस्राक्षेत्येवं संहिताभ्याम् । अन्ये त्वाहुः अवसानं क्रियते नोच्छ्वस्यते मध्ये ऋचा' इति कपर्दिभाष्यम् ।

१७६अ. अन्यया औदुम्बर्या स्रुचा । 'औदुम्बरीस्थं दधि अभेदेन उच्यते' इति भट्टभास्करभाष्यम् । स्वयमातृण्णायां दधि जुहोतीत्यर्थः ।

१७७. 'अनवतीर्ण एव (चितेरुपरिस्थित एव) विश्वायुरसीत्यादि परिधिपरिधानादि कर्म कुर्यात् । अग्नेरधस्तात् (चितेरधस्तात्) परिधानम् ' इति कपर्दिभाष्यम् ।

**सीदत** तिसृभिः स्वयमातृण्णायामग्निं प्रतिष्ठाप्य[१७८] । **अग्नेर्भस्मास्यग्नेः पुरीषमसि** । उत्तरत उपयमनीर्न्युप्य । **मनुष्वत्त्वा -- देवायते यज** उपसमिध्य ।

**प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाꣳ शश्वन्त उप यन्ति वाजाः** औदुम्बरीं समिधमादधाति । अग्नय इदम् । **विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे** वैकङ्कतीम् । अग्नय इदम् । **ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गाम्** शमीमयीम् । सवित्र इदम् ।

ततः सकृत्सकृद्गृहीत्वा **चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधस्समुद्रस्य वयुनस्य पत्मन् जुहोमि विश्वकर्मणे विश्वाहामर्त्यꣳ हविस्स्वाहा ।** अग्नय इदम्, विश्वकर्मण इदम् इति वा । **अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृषम् । ऋध्यामा त ओहैस्स्वाहा** । अग्नय इदम् । द्वे आहुती हुत्वा । द्वादशगृहीतेन स्रुचं पूरयित्वा **सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि । सप्त होत्रास्सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन स्वाहा** । अग्नये सप्तवत इदम् । तां जुह्वत् ***यो दिक्ष्वग्निरिह सोऽस्तु*** इति दिग्भ्योऽग्निं मनसा ध्ययति ।

अथ अग्निर्यज्ञं नयतु प्रजानन्नित्यादि चतस्रोऽतिमुक्तीर्जुहोति । अग्निवत्युत्तरं परिग्राहं परिगृह्णाति । **वसवस्त्वा । धा असि ।** अत्र प्रतिप्रस्थाता मैत्रावरुण्याः पयस्याया वत्सानपाकरोति । **इषे त्वा** इत्यादि कुम्भीलेपनान्तम् । प्रोक्ष्य बर्हिस्त्रिर्वेदिं प्रोक्षति ॥

---

१७८. 'स्वयमातृण्णायां संभारवत्यां प्रतिष्ठापनमग्नेः इति' कपर्दिभाष्यम् ।

# ॥ वैश्वानरेष्टिः ॥

ततो वैश्वानरस्य तन्त्रं प्रक्रमयति । पौर्णमासं तन्त्रम् । उत्तरेण गार्हपत्यमित्यादि प्रस्तरबर्हिषा- माहरणम्[१७९] । अपि वा जुहूमेव प्रस्तरे इत्यस्मिन् पक्षे न प्रस्तराहरणम् । न व्रतप्रवेशः । ततो परिस्तरणादि । एकोनविंशतिदारुरिध्मः । **यत्कृष्णो रूपं --- ततस्त्वामेकोनविꣳशतिधा ---सुसम्भृता** । **त्रीन्परिधीनेकाꣳ समिधं यज्ञायुरनुसञ्चरान्** । इध्मप्रवृश्चननिधानम् । **त्वया वेदिम्** । **उपवेषोऽसि** । समूहन्त्यग्न्यगारम् । प्राजहितवर्जानां अलङ्कृत्य परिस्तरणम् । **देवा देवेषु** । **कर्मणे वाम्** इत्यादि । पात्रप्रयोगकाले वैश्वानरस्य द्वादशकपालानि मारुतानामेकोनपञ्चाशत्कपालानि स्फ्यश्च द्वन्द्वम् । अग्निहोत्रहवणी शूर्पद्वयञ्च द्वन्द्वम्, कृष्णाजिनादि षट् । पुरतः स्रुवं जुहूमित्यादि, पात्रीद्वयम् । प्राशित्रेडापात्रप्रणीतान्वाहार्यस्थालीवर्जम् । इतराणि प्रकृतिवत् । पवित्रे कृत्वा न ब्रह्मवरणम् । **वेषाय त्वा** इत्येव शूर्पद्वयग्रहणम्[१८०] । निर्वपणकाले **अग्नये वैश्वानराय जुष्टं निर्वपामि** । अन्वावापान्तं कृत्वा अन्यस्मिन् शूर्पे सप्तानां मारुतानां तूष्णीं निर्वापः । सप्तकृत्वोऽन्वावापान्तम् । इदं देवानामित्यादि । **अग्ने वैश्वानर हव्यꣳ रक्षस्व** । तूष्णीं मारुतानामुपसादनम् । निर्वापवत्प्रोक्षणाधिवापसँवापाभिघाराः । **अग्नये वैश्वानराय वो जुष्टं प्रोक्षामि** । मारुतानां तूष्णीं प्रोक्षणम् । वैश्वानरस्य कृष्णाजिनादानादि तण्डुलप्रस्कन्दनान्तं कृत्वा । तूष्णीं हविरावपनादि मारुतानामेवमन्तम् । वैश्वानरस्य **अदब्धेन व** इत्यादि । मारुतानां तूष्णीं फलीकरणम् । **त्रिष्फली क्रियमाणानाम्** । कृष्णाजिनादानादि **अग्नये वैश्वानराय जुष्टमधिवपामि धान्यमसि** इत्यादि । मारुतानां तूष्णीमधिवापः । वैश्वानरस्य कपालोपधानकाले युग्मानामावृत्तिः । मारुतानां तूष्णीमुपधानम् । **भृगूणामङ्गिरसां** वैश्वानरस्याङ्गाराध्यूहनादि । मारुतानां तूष्णीमङ्गाराध्यूहनम् । **अग्नये वैश्वानराय जुष्टं सँव्वपामि** । मारुतानामन्यस्यां पात्र्यां सँव्वापः । पिष्टान्युत्पूय अन्या आपो यजुषोत्पूय **समापो अद्भिरग्मत** इत्यादि । वैश्वानरस्य **मखस्य शिरोऽसि** इति पिण्डं कृत्वा । मारुतानां तूष्णीं उत्पवनादि, पिण्डं कृत्वा विभज्य लक्षणानि करोति । प्रथमो

---

१७९. बर्हिराहरणकाले प्रस्तरमेव आहरेत् इति पाठा० ।

१८०. वैश्वानरहविषः शूर्पस्य **वेषाय त्वा** इति ग्रहणम् । मारुतानां हविषः शूर्पस्य तूष्णीं इत्यर्थः । **वेषाय वाम्** शूर्पद्वयं इति पाठा० ।

द्वितीय इत्यादि । एवं क्रमेण उत्तरेषु कर्मसु सप्तानां मारुतानां आहोमात् । **घर्मोऽसि** वैश्वानरमधिश्रित्य मारुतानां तूष्णीमधिश्रयणम् । **उरु प्रथस्व** इत्यादि । प्रथनादि सर्वं तूष्णीं मारुतानाम् । आप्यलेपं निनीय ।

न वेदिकरणम् । ***प्रोक्षणीरासादय --- स्रुचौ च संमृड्ढ्याज्येनोदेहि*** इति संप्रैषः[१८१] । नोपभृत्संमार्गः न च प्राशित्रसम्मृजिः । **अग्ने गृहपत** इत्यादि शालामुखीये[१८२] ।

आज्यग्रहणकाले ध्रुवायामेव गृह्णाति । **सुप्रजास्त्वाय त्वा** । **आपो देवीः** इत्यादि **सूर्यस्त्वा पुरस्तात्** इत्यन्तम् । **वीतिहोत्रं** इत्येका समित् । स्तरणकाले अपरेणाग्निं बर्हिस्तृणाति । **विशो यन्त्रे स्थः** । **विच्छिनद्मि** । **वसूनाम्** । **अयं प्रस्तरः** । तूष्णीं जुहूपभृतावासाद्य । **ध्रुवासि** ध्रुवामासाद्य । **यो मा वाचा** । **ऋषभोऽसि** । **स्योनो मे सीद** । **इयꣳ स्थाली** । **एतावसदताम्** । **विष्णवसि** । **इदमहꣳ सेनाया** इत्यादि । **अग्नये वैश्वानराय जुष्टमभिघारयामि** । **प्रियेण** इत्यासादनम् । मारुतानां तूष्णीमभिघारणमुद्वासनमलङ्करणमासादनं च । **यज्ञोऽस्ययं यज्ञो ममाग्ने** चतुर्होता । **अयं वेद** इत्यादि । ***अग्नये समिध्यमानायानुब्रूहि*** । नानूयाजसमिधमवशिनष्टि । स्रौवमाघार्य आप्यायनान्तम् । न सम्प्रेष्यति । न संमार्ष्टि । स्रुच्याघारस्य लोपः । क इदमित्यादि मानुष इत्यन्तम् । **देवाः पितरः** । न प्रयाजान् यजति । आज्यभागाभ्यां प्रचर्य । आज्यभागान्त्यावदाने न ध्रौव्वाप्यायनम्[१८३] । जुह्वामुपस्तीर्य । **अग्निर्होता** । तूष्णीं कृत्स्नं वैश्वानरमवदाय । द्विरभिघार्य पञ्चावत्तिनां त्रिः । वैश्वानरप्रचारे ध्रौव्वसमाप्तिः। ***अग्नये वैश्वानरायानुब्रू३हि*** । उच्चैर्वैश्वानरस्याश्रावयति । ***अग्निं वैश्वानरं यज*** । वषट्कृते सर्वहुतं जुहोति । अग्नये वैश्वानरायेदम् । **अग्नेर्वैश्वानरस्याहं --- अन्नादः** । प्रत्याक्रम्य प्रस्तरादन्यत्र स्रुचौ सादयित्वा हस्तं प्रक्षाल्य । उपांशु मारुतान्त्सर्वहुतानासीनो हस्तेन गणेन गणमनुद्रुत्य जुहोति।

**मारुतहोमः :-**

**ईदृङ्चाऽन्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च सम्मितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चात्यꣳहाः । मितासश्च सम्मितासश्च**

---

१८१. एषः प्राचीनकारिकानुसृतः पाठः, वासुदेवदीक्षितकारिकानुसृतपाठस्तु स्रुचस्सम्मृड्ढि इत्येव ।

१८२. प्राजहिते पत्नीकर्माणि, आज्याधिश्रयणं शालामुखीये इति आन्ध्र प्र.पा. एवमेव वासु.का. मतम् ।

१८३. न हि असिदादानप्रभृति एतत्क्षणपर्यंतमित्यादि इति पाठा० ।

न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमँय्यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चाऽत्यꣳहाः । ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः ॥ मितासश्च सम्मितासश्च --- भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः । धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च निलिम्पश्च विलिम्पश्च विक्षिपः । मितासश्च सम्मितासश्च --- भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।

धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च निलिम्पश्च विलिम्पश्च विक्षिपः । ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः । मितासश्च सम्मितासश्च --- भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।

ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः । *स्वतवाꣳश्च प्रघासी च सान्तपनश्च गृहमेधी च क्रीडी च साकीचोर्जिषी च ।* मितासश्च संमितासश्च --- भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।

*स्वतवाꣳश्च प्रघासी च सान्तपनश्च गृहमेधी च क्रीडी च साकीचोर्जिषी च ।* ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च सम्मितासश्च --- भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।

ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन । ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च सम्मितश्च सभराः । मितासश्च सम्मितासश्च--- भवन्तु स्वाहा ॥ मरुद्भ्य इदम् ।[१८४]

---

१८४. वैश्वनरी मारुतान्ता उपदेशमतादिह इति आन्ध्र. प्र.पा.। एतन्मतेऽत्रैवेष्टिस्सन्तिष्ठते ततो वसोर्धाराहोम एव।

एवं मारुतान् हुत्वा स्रुचावादाय नारिष्ठान् जुहोति । न स्विष्टकृत् । वैश्वानरे हविः । आयतने स्रुचौ सादयित्वा ।

न प्राशित्रम् । न चेडा । न मार्जनम् । न दक्षिणा । न सम्प्रेष्यति । नानूयाजसमित् । न सम्मार्ष्टि । **यो भूतानां** इध्मसन्नहनप्रहरणम् । नानूयाजाः । वाजस्य मा प्रसवेनेत्यादि । सूक्तवाके **अग्नेर्वैश्वानरस्याहमुज्जितिम्** । **एमा अग्मन्, सा मे सत्याशीः** इति न भवति । अग्नीद्गमयेत्यादि । पत्नीस्सँय्याजयन्ति । प्रायश्चित्तहोमान्ते न समिष्टयजुर्जुहोति । तूष्णीं बर्हिप्रहरणम् । **अभिस्तृणीहि** । **यं देवा मनुष्येषु** । **यानि घर्मे** । तूष्णीं मारुतकपालानां विमोकः । **विष्णोः क्रमोऽसि** इत्यादि । न व्रतविसर्गः । ***यज्ञ शं च म, वृष्टि*** वर्जम् । ब्राह्मणतर्पणान्तम्[१८५] ।

## वसोर्धारा :-

जुह्वां चतुर्गृहीतं गृहीत्वा । **अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतꣳ स्वाहा** । अग्नाविष्णुभ्यामिदम् । औदुम्बरीं स्रुचं व्यायाममात्रीं मृदा प्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा सन्ततां वसोर्धारां जुहोति । मन्त्रादेः धारायाश्च सहोपक्रमः । **वाजश्च मे प्रसवश्च मे** इत्यादि **भुवनश्चाधिपतिश्च स्वाहा** एकादशानुवाकान्ते सकृत् स्वाहाकारः[१८६] । {**वाजश्च मे स्वाहा प्रसवश्च मे स्वाहा** इत्यादि । **अष्टाचत्वारिꣳशच्च मे स्वाहा** इत्यन्तम् । **वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चाऽऽन्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च स्वाहा** ।} अग्नाविष्णुभ्यामिदम् , वाजादिभ्यो वसोर्धारादेवताभ्य इदम् इति वा । आज्यमवशेषयित्वा जुहोति ।

**समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ वयं नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोवमीद्गौर एतत् ॥ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो**

---

१८५. यज्ञो बभूव यज्ञ शञ्च म वृष्टि वर्जम् इति वासुदेवकारिका ।

१८६. मातृकाग्रन्थेषु वसोर्धाराहोमस्य द्विधा प्रयोगो दृष्यते । तथैव अनुष्ठानञ्च द्विधा उपलभ्यते । कपर्दिभाष्ये पक्षद्वयमपि दर्शितम् ॥

**देवो मर्त्याँ॥ आविवेश ॥ त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकँ॥ सूर्य एकं जजान वेनादेकँ॥ स्वधया निष्टतक्षुः ॥ एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे । घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणो रीषमाणाः ॥ सिन्धोरिव प्राध्वनेशूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ अभिप्रवन्त समनेव योषाः कल्याण्य१ः स्मयमानासो अग्निम् । घृतस्य धारास्समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि । यत्र सोमस्सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त । इमँय्यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ धामन्ते विश्वं भुवनमधि श्रितमन्तस्समुद्रे हृद्य१न्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम्** हुतां हूयमानां वा यजमानोऽनुमन्त्रयते[१८७] ॥ (स्वरसहितो मन्त्रपाठः १६६ पृष्ठे दत्तः) ।

## ब्रह्मौदनं वाजप्रसवीयहोमाश्च :-

यदाज्यमुच्छिष्येत तस्मिन् ब्रह्मौदनं पक्त्वा चतुरो ब्राह्मणान् भोजयेत् । चतुश्शरावमोदनं लौकिकेऽग्नौ तस्मिन् घृते श्रपयित्वा अध्वर्यवादींश्चतुरो महर्त्विजो भोजयेत्[१८८] । प्राशितवद्भ्यः चतस्रो धेनूर्दद्यात् । रुद्राय गामिति प्रतिग्रहः । वाजप्रसवीयं जुहोति । सप्त ग्राम्या ओषधयस्सप्तारण्याः । लौकिकेऽग्नौ श्रपयित्वा पृथगन्नानि द्रवीकृत्य औदुम्बरेण स्रुवेण तिलमाषादि यवागूञ्जुहोति । अथ ग्राम्याः । **वाजस्येमं प्रसवस्सुषुवे अग्रे सोमँ॥ राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयँ॥ राष्ट्रे जाग्रियाम पुरोहितास्स्वाहा** तिलयवागूञ्जुहोति । हुत्वा हुत्वा पात्र्यां सम्पातमवनयति ।

---

१८७. सूत्रपाठक्रमे यजमानस्य घृतसूक्तेन वसोर्धारानुमन्त्रणं ब्रह्मौदनात् परमेव विद्यते । क्वचिन्मातृकाग्रन्थेषु तु ब्रह्मौदनात् पूर्वं क्वचित्परं च दृश्यते । अनुमन्त्रणस्य ब्रह्मौदनात् पूर्ववर्तित्वात् पूर्वमेव दत्तम् ।

१८८. चतुश्शरावं वौदनं पक्त्वा तद्व्यञ्जनं भोजयेत् इति सूत्रे पक्षान्तरमप्युक्तम् । एवमेव प्रायोऽनुष्ठीयते ।

अग्नय इदमिति सर्वत्र त्यागः ॥

**वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः । स विराजं पर्येति प्रजानन्प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा** माषयवागूम् ॥

**वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्सन्तं दापयतु प्रजानन्रयिं च नः सर्ववीरां नि यच्छतु स्वाहा** व्रीहियवागूम् ॥

**अग्ने अच्छा वदेह नः प्रति नः सुमना भव । प्रणो यच्छ भुवस्पते धनदा असि नस्त्वꣳ स्वाहा** यवकृतयवागूम् ॥

**प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः । प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नस्स्वाहा** प्रियङ्गुयवागूम् ॥

**अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनꣳ स्वाहा** अणुयवागूम् ॥

**सोमꣳ राजानं वरुणमग्निमन्वारभामहे । आदित्यान्, विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा** गोधूमयवागूम् । एते सप्त ग्राम्याः ॥

अथारण्याः = **वाजो नस्सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाता–विहावतु स्वाहा** वेणुयवागूम् ॥

**विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयस्समिद्धाः । विश्वे नो देवा अवसाऽऽगमन्तु विश्वमस्तु द्रविणं वाजो अस्मे स्वाहा** श्यामाकयवागूम् ॥

**वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः । अग्निरिन्द्रो बृहस्पतिर्मरुतस्सोमपीतये स्वाहा** नीवारयवागूम् ॥

**वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैस्स्वाहा** जर्तिलयवागूम् ॥

**वाजः पुरस्तादुत मध्यतो नो वाजो देवाꣳ ऋतुभिः कल्पयाति । वाजस्य हि प्रसवो नन्नमीति विश्वा आशा वाजपतिर्भवेयꣳ स्वाहा** गवीधुकयवागूम् ॥

**पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम् । पयस्वतीः प्रदिशस्सन्तु मह्य९ँ स्वाहा** मर्कटकयवागूम् ॥

**सं मा सृजामि पयसा घृतेन सं मा सृजाम्यप ओषधीभिः । सोऽहं वाज९ँ सनेयमग्ने स्वाहा** गार्मुतयवागूम् । इति सप्तरण्याः ॥

**सम्पाताभिषेकः :-**

दक्षिणं प्रत्यपिपक्षं औदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नासीनं यजमानं अग्निमन्वारब्धं सम्पातैरभिषिञ्चति । **देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्या९ँ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामि** प्राङ्मुखमासीनं प्रत्यङ्मुखस्तिष्ठन् शीर्षतोऽभिषिच्यामुखादन्ववस्रावयति ।

**राष्ट्रभृद्धोमः :-**

**नक्तोषासा समनसा --- द्रविणोदास्स्वाहा** जुह्वा कृष्णायै श्वेतवत्सायै पयसा जुहोति । अग्नय इदम् । षड्भिः पर्यायैर्द्वादश राष्ट्रभृतो जुहोति ॥ **ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौ-षधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा** । अग्नये गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । ओषधीभ्योऽप्सरोभ्य ऊर्भ्य इदम् । ओषधीभ्योऽप्सरोभ्य इदम् इति वा ।

**स९ँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम स इदं ब्रह्म --- तस्मै स्वाहा** । सूर्याय गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । मरीचिभ्योऽप्सरोभ्य आयुभ्य इदम् । मरीचिभ्योऽप्सरोभ्य इदम् इति वा ।

**सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम स इदं ब्रह्म --- तस्मै स्वाहा** । चन्द्रमसे गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । नक्षत्रेभ्योऽप्सरोभ्यो बेकुरिभ्य इदम् । नक्षत्रेभ्योऽप्सरोभ्यो इदम् इति वा ।

**भुज्युस्सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्स्तवा नाम स इदं ब्रह्म --- तस्मै स्वाहा** । यज्ञाय गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । दक्षिणाभ्योऽप्सरोभ्यस्स्तवाभ्य इदम् । दक्षिणाभ्योऽप्सरोभ्य इदम् इति वा ।

**प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्ख्सामान्यप्सरसो वह्नयो नाम स इदं ब्रह्म**

**--- तस्मै स्वाहा** । मनसे गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । ऋख्सामेभ्योऽप्सरेभ्यो वह्निभ्य इदम् । ऋख्सामेभ्योऽप्सरेभ्य इदम् इति वा ।

**इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नाम स इदं ब्रह्म --- तस्मै स्वाहा** । वाताय गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । अद्भ्योऽप्सरोभ्यो मुदाभ्य इदम् । अद्भ्योऽप्सरोभ्यो इदम् इति वा ।

**भुवनस्य पते यस्य त उपरि गृहा इह च । स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ सँव्वथ्सरीणाꣳ स्वस्तिꣳ स्वाहा** । भुवनस्य पतय इदम् । प्रजापतय इदम् इति वा।

अथ भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति । दश वा । उपर्याहवनीये रथशिरो धार्यमाणमभि जुहोतीत्येके[१८९] । पुनः **भुवनस्य पते यस्य त उपरि गृहा इह च । स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ सँव्वथ्सरीणाꣳ स्वस्तिꣳ स्वाहा** । भुवनस्य पतय इदम् । प्रजापतय इदम् इति वा ।

**परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नाम स इदं ब्रह्म --- तस्मै स्वाहा** । मृत्यवे गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । विश्वस्मा अप्सरोभ्यो भूभ्य इदम् । विश्वस्मा अप्सरोभ्य इदम् इति वा ।

**सुक्षितिस्सुभूतिर्भद्रकृथ्सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नाम स इदं ब्रह्म --- तस्मै स्वाहा** । पर्जन्याय गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । विद्युद्भ्योऽप्सरोभ्यो रुग्भ्य इदम् । विद्युद्भ्योऽप्सरोभ्य इदम् इति वा ।

**दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नाम स इदं ब्रह्म --- तस्मै स्वाहा** । मृत्यवे गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । प्रजाभ्योऽप्सरोभ्यो भीरुभ्य इदम् । प्रजाभ्योऽप्सरोभ्य इदम् इति वा ।

**चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसश्शोचयन्तीर्नाम स इदं ब्रह्म --- तस्मै स्वाहा** । कामाय गन्धर्वायेदम् । **ताभ्यस्स्वाहा** । आधिभ्योऽप्सरोभ्यश्शोचयन्तीभ्य इदम् । आधिभ्योऽप्सरोभ्य इदम् इति वा ।

---

१८९. रथमुखं प्राचीनं भवेदिति आन्ध्रसम्प्रदायः ।

**स नो भुवनस्य पते यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै क्षत्राय मयि शर्म यच्छ स्वाहा ।** भुवनस्य पतय इदम् । प्रजापतय इदम् इति वा ।

एवं दशाहुतीर्हुत्वा । अभिहुतमुद्यम्याध्वर्योरावसथं हरन्ति । अनुनयन्ति त्रीनश्वान्श्चतुरो वा । तान् सरथान् अध्वर्यवे ददाति । अध्वर्यो सरथान् अश्वांस्ते ददामि । सप्तदशकृत्वोऽपान्यात् । **देवस्य त्वा --- देवि दक्षिणे वरुणायाश्वम् । तेनामृतत्वमश्यां --- प्रतिगृह्णातु । देवस्य त्वा --- देवि दक्षिणे वैश्वानराय रथम् । वैश्वानरः प्रत्नथा नाकमारुहत् । दिवः पृष्ठं भन्दमानस्सुमन्मभिः । सपूर्ववज्जनयज्जन्तवे धनम् । समानमज्मा परि याति जागृविः । राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथम् । तेनामृतत्वमश्यां --- प्रतिगृह्णातु** इति उभयोः प्रतिग्रहः[१९०] ॥

अञ्जलिना त्रीणि वातनामानि जुहोति । वात एव द्रव्यम् । **समुद्रोऽसि नभस्वानार्द्रदानुश्शम्भूर्मयोभूरभि मा वाहि स्वाहा ॥ मारुतोऽसि मरुतां गणश्शम्भूर्मयोभूरभि मा वाहि स्वाहा ॥ अवस्युरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा ॥** प्रजापतय इदमिति सर्वत्र । वातायेदमिति वा ।

अथ पञ्चाज्याहुतीः । **अग्न उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म स्वाहा ॥ अग्ने दुध्र या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म स्वाहा ॥ अग्ने गह्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म स्वाहा ॥ अग्ने कि७ँशिल या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म स्वाहा ॥ अग्ने वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म स्वाहा ॥** सर्वत्र अग्नय इदम् ।

## सर्पाहुतीः :-

दध्ना मधुमिश्रेण षट् सर्पाहुतीरनुपरिचारं जुहोति । मधुमिश्रं दधि स्रुवेण जुह्वामादाय पुरस्तात्

---

१९०. अङ्गदक्षिणात्वात् तूष्णीं प्रतिग्रह इति पाठा० ।

प्रत्यङ्मुखस्स्थित्वा अग्निं प्रदक्षिणीकृत्य पुनः तत्रैवोपविश्य[१९१] जुहोति । **समीची नामासि प्राची दिक्तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यन्द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि स्वाहा** अग्नये असितायेदम् । **ओजस्विनी नामासि दक्षिणा दिक्तस्यास्त इन्द्रोऽधिपतिः पृदाकू रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां --- जम्भे दधामि स्वाहा** । दक्षिणतो गत्वा पूर्ववत् परिक्रम्य उदङ्मुख उपविश्य । इन्द्राय पृदाकव इदम् । **प्राची नामासि प्रतीची दिक्तस्यास्ते सोमोऽधिपतिस्स्वजो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां --- जम्भे दधामि स्वाहा** पश्चात् प्राङ्मुखः । सोमाय स्वजायेदम् । **अवस्थावा नामास्युदीची दिक्तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजी रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां --- जम्भे दधामि स्वाहा** । उत्तरतो दक्षिणामुखः । वरुणाय तिरश्चराजय इदम् । **अधिपत्नी नामासि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिश्श्वित्रो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां --- जम्भे दधामि स्वाहा** पश्चात् प्राङ्मुखो जुहोति । बृहस्पतये श्वित्रायेदम् । **वशिनी नामासीयन्दिक्तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां --- जम्भे दधामि स्वाहा** पश्चात् प्राङ्मुखो जुहोति । यमाय कल्माषग्रीवायेदम् ।

**महाहुतीः :-**

अथ षण्महाहुतीः यथा सर्पाहुतीरनुपरिचारं जुहोति[१९२]। **हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवस्सलिलो वातनामन्तेभ्यो वो नमस्ते नो मृडयत ते यन्द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि स्वाहा** ॥ हेतिभ्य इदम् । **निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवस्सगरो वातनामन्तेभ्यो---दधामि स्वाहा** ॥ निलिम्पेभ्य इदम् ॥ **वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहास्स्वप्नो व इषवो गह्वरो वातनामन्तेभ्यो --- दधामि स्वाहा** ॥ वज्रिभ्य इदम् । **अवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा आपो व इषवस्समुद्रो वातनामन्तेभ्यो --- दधामि स्वाहा** ॥ अवस्थावभ्य इदम् । **अधिपतयो**

---

१९१. पुरस्तात् प्रत्यङ्मुख उपविश्य इत्यर्थः । अनुपरिचारं जुहोतीति विहिताः सर्वा आहुतीः एवमेव होतव्याः।

१९२. दध्ना मधुमिश्रेणैव इति कपर्दिभाष्यम् ।

**नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वान् वातनामन्तेभ्यो --- दधामि स्वाहा** ॥ अधिपतिभ्य इदम् । **क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवो निमिषो वातनामन्तेभ्यो --- दधामि स्वाहा** ॥ क्रव्येभ्य इदम् ।

अथ पञ्च अर्काहुतीराज्येन जुहोति । **सुवर्न घर्मस्स्वाहा** । घर्मायेदम् । **सुवर्नार्कस्स्वाहा** । अर्कायेदम् । **सुवर्न शुक्रस्स्वाहा** । शुक्रायेदम् । **सुवर्न ज्योतिस्वाहा** । ज्योतिष इदम् । **सुवर्न सूर्यस्वाहा** । सूर्यायेदम् । **यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिस्सर्वाभी रुचे जनाय नस्कृधिस्वाहा** । अग्नय इदम् । **या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिस्सर्वाभी रुचं नो धत्त बृहस्पते स्वाहा** । देवेन्द्राग्निबृहस्पतिभ्य इदम् । **रुचं नो धेहि ब्राह्मणेषु रुच९ं राजसु नस्कृधि । रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुच९ं स्वाहा** । अग्नय इदम् । तिस्रो रुच आज्येनैव जुहोति ।

वेद्यास्स्तरणादि सौमिकं कर्म प्रतिपद्यते । अथैनां बर्हिषा बहुलं प्राचीनं स्तीर्त्वेत्यादि । सदःकरणकाले अग्निष्टोमश्चेत् प्रकृतिवत् नव छर्दींषि । अतिरात्राप्तोर्यामयोः सप्तदश छर्दींषि । **ऐन्द्रमसीति** पञ्च मध्यमानि छर्दींष्यध्यूहति । **विश्वजनस्य छाया** पञ्च दक्षिणानि । **इन्द्रस्य सदोऽसि** सप्तोत्तराणि । एकवदुपरवमन्त्रानेके समामनन्ति । उत्तरेषु ऋतुष्विति विशेषः । **रक्षोहणं वलगहनं वैष्णवं खनामि** इत्यादि । चतुरस्रं खरं करोति सोमपात्रेभ्य आप्तमित्यन्तं कृत्वा ।

## धिष्णियानां चयनम् :-

ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन प्रतिमन्त्रमिष्टकाभिर्धिष्णियांश्चिनोति । अश्मनवमा आग्नीध्रीय उपदधाति । द्वादश होत्रीये । एकादश ब्राह्मणाच्छंसीये । षण्मार्जालीये । अष्टावष्टावन्येषु धिष्णियेषूपदधाति । चतुरश्राः परिमण्डला वा धिष्णियाः । तेषां यावत्य इष्टकास्तावतीश्शर्कराः परिश्रिताः[१९३] । चतुरश्रपक्षमाश्रित्य प्रयोगः । अथाग्नीध्रीयं नवभिः शर्कराभिः परिश्रयति । अथाग्नीध्रीयस्येष्टकोपधानम् । **ममाग्ने --- जयेम तया देवतया । मम देवा -- अस्मिन्तया देवतया । मयि देवा ---**

१९३. सर्वेषां धिष्णियानां तूष्णीमेव परिश्रयणम् । अत्र क्वचित् मातृकाग्रन्थेषु उपधानात् प्रागेव परिश्रयणवाक्यानि एकत्रैव संगृह्य दर्शितानि यथा 'होत्रीयं द्वादशभिः शर्कराभिः परिश्रित्य **ममाग्ने वर्चः** । एकादशभिः ब्राह्मणाच्छंसीयं परिश्रित्य **ममाग्ने वर्चः** इत्यादि' इत्येवम् ।

**सुवीरास्तया देवतया । मह्यं यजन्तु -- अधिवोचता मे तया देवतया । देवीष्षडुर्वीरुरु- -- सोमराजन् तया देवतया । अग्निर्मन्युं --- विनेशत् तया देवतया । धाता धातृणां --- न्यर्थात्तया देवतया । उरुव्यचा नो --- मा परा दास्तया देवतया ।** एवमादित अष्टाभिः क्रमेण अष्टाविष्टका उपधाय । **ये नस्सपत्ना --- अधिराजमक्रन्तया देवतया ।** मध्ये पूर्वनिहितमश्मानमुपदधाति । चात्वालात्पुरीषमाहृत्य तूष्णीं तासु व्यूहति[१९४] ।

अथ होत्रीयं द्वादशभिश्शर्कराभिः परिश्रित्य । ममाग्ने वर्च इति पञ्चभिः पञ्चोपधाय देवीष्षडुर्वीरित्यावृत्तिः । अग्निर्मन्युमित्यारभ्य पञ्चोपधाय अर्वाञ्चमित्यावृत्तिः । अथ पुरीषम् ॥

अग्रेणाहवनीयं गत्वा प्रशास्त्रीयमष्टाभिः परिश्रित्य ममाग्ने वर्च इत्यरभ्य अष्टावुपधाय पुरीषम् । यथेतं गत्वा ब्राह्मणाच्छंसीयमेकादशभिः परिश्रित्य ममाग्ने वर्च इति दशभिर्दशोपधाय अर्वाञ्चमित्यावृत्तिः । एवमेकादश । अथ पुरीषम् ।

पोतृनेष्ट्रच्छावाकानां क्रमेण अष्टाभिः परिश्रित्य ममाग्ने वर्च इत्याष्टाभिरष्टावष्टावुपधाय पुरीषम् । प्रशास्त्रीयस्य दक्षिणतः[१९५] सञ्चरमवशिष्य ब्रह्मसदनम् । अष्टाभिः परिश्रित्य ममाग्ने वर्च इति आदितः पञ्चभिः पञ्चोपधाय । ***तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवन्तया देवतया ।*** **बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रं तया । बृहस्पतिस्समजयद्वसूनि महो व्रजाङ्गोमतो देव एषः । अपस्सिषासन्थ्सुवरप्रतीत्तो बृहस्पतिर्हन्त्यमित्रमर्कैस्तया** इत्यष्टौ, पुरीषं च ।

मार्जालीयं षड्भिः परिश्रित्य ममाग्ने वर्च इति आदितः तिसृभिस्तिस्र उपधाय । **यमो दाधार पृथिवीं यमो विश्वमिदं जगत् । यमाय सर्वमित्रस्थे यत्प्राणद्वायुरक्षितम् तया । यथा पञ्च यथा षड्यथा पञ्च दशर्षयः । यमं यो विद्यात्थ्स ब्रूयाद्यथैक ऋषिर्विजानते तया । त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप् छन्दाꣳसि सर्वा ता यम आहिता तया ।** इति षट् पुरीषं च । चात्वालमष्टाभिः परिश्रित्य ममाग्ने इति पञ्च । **मृडा नो**

---

१९४. धिष्णियानां इष्टकोपधानान्ते सर्वत्र तूष्णीं पुरीषव्यूहनम् ।

१९५. प्रशास्त्रीयस्य पुरतः इति द्रा. प्र ।

**रुद्रोत नो--- रुद्र प्रणीतौ तया । *अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्नायन्निद्विशो अस्माकमाचरारिष्ट वीरा जुहुवाम ते हविस्तया । त्वेषं वयꣳ रुद्रं यज्ञसाधनं वङ्कुं कविमवसे निह्वयामहे । आरे अस्मदमतिꣳहेडो अस्य तु सुमतिमिद्वयमस्या वृणीमहे तया*** इत्यष्टौ, पुरीषं च ।

शामित्रमष्टाभिः परिश्रित्य । ***हव्यं प्रीणीहि तया । हव्यꣳ श्रीणीहि तया । हव्यं पच तया । हव्यꣳ श्रपय तया । हव्यमसि तया । हव्याय त्वा तया । हव्येभ्यस्त्वा तया । हव्ये सीद तया*** इत्यष्टौ, पुरीषं च ।

अवभृथस्थानं गत्वा अष्टाभिश्शर्कराभिः परिश्रित्य[१९६] ममाग्ने वर्च इति पञ्च । **अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि तया । उदुत्तमं वरुण --- स्याम तया । तत्त्वा यामि --- प्रमोषीस्तया** । इत्यष्टौ, पुरीषं च । तासु प्रचरन्ति । अवभृथकाले अवभृथेष्टका उपधीयन्त इति केचित्[१९७] । तदा अवभृथेष्टकाश्शर्कराश्च प्रज्ञातानि निदधाति । खण्डाः कृष्णा लक्ष्मणा चोत्कर उदस्यति । अवशिष्टाश्च भित्वा चोत्करे क्षिपति । धिष्णियानां न विभूरसीति निवपनम् । अध्वनामध्वपत इत्याद्यग्निष्टोमवत्[१९८] । एकस्तनं व्रतम् । अपरेणोत्तरवेदिं व्रतं प्रयच्छति । **या ते अग्ने रुद्रिया । *शिवाः पीता भवथ।।***

---

१९६. "सर्वतः कृत्वा परिश्रयणं पूर्वम्, पश्चादुपधानमिष्टकानाम् । इहापि अवभृथे तासु प्रचरणम् । साङ्गस्यावभृथस्य प्रधानकालत्वादङ्गानाम् । उदके यथा (इष्टकाः) तिष्ठन्ति तासु च यथा आहुतयो भवन्ति तथा कर्तव्यमवभृथकाले" इति कपर्दिभाष्यम् । 'यस्मिन्देशे उपहिताश्चेष्टकाः साङ्गप्रधानाहुतयः तासु भवन्ति तस्मिन् स्थले जले अष्टाभिः शर्कराभिः परिश्रयणम् । प्रधानदेशत्वादङ्गानाम्' इति T.G.M पाठे एव विद्यते ।

१९७. 'उपदेशस्तु बर्हिरभिजुहोत्याहुतीनां प्रतिष्ठित्या इति बर्हिप्रत्याम्नायत्वादिष्टकानां तासु प्रचरन्तीति तस्मिन्नेव काल उपदधाति नास्मिन्काल इति । अस्मिन्काल इति न्यायः । अस्मिन्काल उपहिता अपि तृणप्रत्याम्नाय एव । नैव तृणं प्रह्रियते' इति कपर्दिभाष्यम् ।

१९८. एतानेवोपस्थानान् व्याघारणांश्चैके समामनन्ति इति सूत्रकारेण सोमप्रकरणे पक्षान्तरमप्युक्तम् । तस्मिन्पक्षे धिष्णियचयनानन्तरं विभूरसीत्यादिभिरुपस्थानं कर्तव्यम् । तत अध्वनामध्वपत इत्यादि । अग्निष्टोमे येषां आग्नीध्रीयादीनां धिष्णियानां निवपनं विहितं तेषां निवपनमत्र निवर्तते निवपनप्रत्याम्नायाच्चयनस्य । चात्वालशामित्रयोः कर्तोऽपि चयने अनुदेशस्तु न निवर्तते । अनुदेशस्य प्रत्याम्नायेन अनुक्तत्वात् ।

# ॥ चयने अग्नीषोमीयपशुप्रयोगः ॥

अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति । **इषे त्वा** इत्यादि । **विष्णूनि स्थ** इत्याज्याभिमन्त्रणान्तं समानमग्निष्टोमवत् । एकयूपमेकादश वा यूपान्थ्सम्मिनोति । यूपसम्मानादि, अग्नीषोमीयवपाहोमान्ते सुब्रह्मण्याह्वानं वसतीवरीग्रहणं च । अग्नीषोमीयस्य पशुपुरोडाशं अष्टौ देवसुवां हवींषि अनुनिर्वपति । उत्तरेण गार्हपत्याहवनीयौ दर्भान् संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । द्विचत्वारिंशत्कपालानि पञ्च स्थाल्यो नव शूर्पाणि च द्वन्द्वम् । इतरत् समानं पशुपुरोडाशेन । नव पात्र्यः, नवगृहयुक्ता एकैव वा पात्री प्राशित्रहरणं मदन्तीं मेक्षणमुपवेषमुत्पवनार्थं पात्रं तृणं च । पवित्रकरणादि ।

**वेषाय वः** शूर्पाण्यादत्ते । नवग्रहयुक्तायामेकस्यां पात्र्यामसंस्पृष्टानि बीजानि स्थापयित्वा । **धूरसि** इत्यादि । **निरस्तं** इति तन्त्रेण निरसनम् । शूर्पे पवित्रे निधायेत्यन्तं कृत्वा । **देवस्य त्वा -- हस्ताभ्यामग्नीषोमाभ्यां जुष्टं निर्वपामि** । पुरोडाशार्थान् । अन्वावापान्तम् । एकैकस्य निर्वापं कृत्वाग्निहोत्रहवणीं पवित्रे हस्तौ च प्रक्षालयति । यजमानः अग्निँ होतारमिति प्रतिहविर्निरुप्यमाणमनुमन्त्रयते ।

अध्वर्युः – अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्यामग्नये गृहपतये जुष्टं निर्वपामि** । पुरोडाशार्थान् कृष्णान् व्रीहीन् निरूप्य । अन्वावापान्तं सर्वत्र । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्याँ सोमाय वनस्पतये जुष्टं निर्वपामि** । चर्वर्थान् श्यामाकान् । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा ---- हस्ताभ्याँ सवित्रे सत्यप्रसवाय जुष्टं निर्वपामि** । पुरोडाशार्थानाशून्व्रीहीन् । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्याँरुद्राय पशुपतये जुष्टं निर्वपामि** । चर्वर्थान् गवीधुकान् । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्यां बृहस्पतये वाचस्पतये जुष्टं निर्वपामि** । चर्वर्थान् नीवारान् । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्यामिन्द्राय ज्येष्ठाय जुष्टं निर्वपामि** । पुरोडाशार्थान् महाव्रीहीन् । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्याम्मित्राय सत्याय जुष्टं निर्वपामि** । चर्वर्थानाम्बान् । अन्यस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा --- हस्ताभ्यां वरुणाय धर्मपतये जुष्टं निर्वपामि** । चर्वर्थान् यवान् । एवं सर्वेषामन्वावापान्तं कृत्वा । **इदं देवानां** इत्यावृत्तिः **इदमुनस्सह** इति च । **स्फात्यै त्वा** इत्यादि तन्त्रेण । क्रमेण उपसादनमसामर्थ्ये ।

**अदित्यास्त्वोपस्थे सादयाम्यग्नीषोमौ हव्यꣳ रक्षेथामग्ने गृहपते हव्यꣳरक्षस्व सोम वनस्पते हव्यꣳ रक्षस्व सवितस्सत्यप्रसव हव्यꣳ रक्षस्व रुद्र पशुपते हव्यꣳ रक्षस्व बृहस्पते वाचस्पते हव्यꣳ रक्षस्वेन्द्र ज्येष्ठ हव्यꣳ रक्षस्व मित्र सत्य हव्यꣳ रक्षस्व वरुण धर्मपते हव्यꣳ रक्षस्व** इत्युपसादनम् । न कस्त्वा । सशूकायामित्यादि । **देवस्य त्वा ---हस्ताभ्यामग्नीषोमाभ्यां वो जुष्टं प्रोक्षाम्यग्नये गृहपतये वो जुष्टं प्रोक्षामि सोमाय वनस्पतये वो जुष्टं प्रोक्षामि सवित्रे सत्यप्रसवाय वो जुष्टं प्रोक्षामि रुद्राय पशुपतये वो जुष्टं प्रोक्षामि बृहस्पतये वाचस्पतये वो जुष्टं प्रोक्षामीन्द्राय ज्येष्ठाय वो जुष्टं प्रोक्षामि मित्राय सत्याय वो जुष्टं प्रोक्षामि वरुणाय धर्मपतये वो जुष्टं प्रोक्षामि ।** शुन्धध्वमित्यादि । पात्रप्रोक्षणे प्रोक्षणीनां समाप्तिः ।

कृष्णाजिनादानादि । **अधिषवणमसि** इत्यन्तं तन्त्रेण कृत्वा । **अग्नेस्तनूरसि** इत्यादि तण्डुलप्रस्कन्दनान्तं प्रतिबीजमावर्तते ***हविष्कृदेहि*** इति च[१९९] प्रतिबीजम् । प्रथमबीजे आग्नीध्रप्रैषश्च अश्माघातश्च । प्रतिबीजमुलूखलमुसलहस्तानां प्रक्षालनम् । श्यामाकादिचरूणां हस्तेन तुषोपवपनम् । वारुणस्य **अग्नेस्तनूरसि** इत्यन्तं कृत्वा हविष्कृता वाचं विसृज्य पशुं विशास्ति । ***गुदं मा निर्ल्लेषीः*** इत्यादि । शूले प्रणीक्ष्य हृदयं शामित्रे श्रपयतीत्यन्तं कृत्वा । वारुणस्य अवहननादि[२००] । **अदब्धेन व** इति तन्त्रेण । ***त्रिष्फलीकर्तवै*** इति च । पर्यायेण फलीकरणमेकैकस्य त्रिस्त्रिः प्रक्षालनं च । सर्वहविषां प्रक्षालितमुदकमेकस्मिन् पात्रे आनीय त्रिष्पलीक्रियमाणानामिति तन्त्रेण निनयनम् ।

कृष्णाजिनादानादि दृषदमत्यादधातीत्यन्तं तन्त्रेण । अधिवापादि ***अणूनि कुरुतात्*** इत्यन्तमेकैकस्य

---

१९९. मातृकाग्रन्थेषु 'हविष्कृदेहीति प्रथमबीजे आग्नीद्रप्रैषश्चाश्माघातश्च' इति विद्यते । आण्डिवल्लाप्रयोगेऽपि 'हविष्कृदाह्वानं तन्त्रेण' इत्येवास्ति । सूत्रकारेण आग्रयणप्रकरणे नानाबीजप्रयोग उक्तः । तत्र भाष्यकारेण 'एकस्मिन्नुलूखले कालभेदादावर्तते' इत्युक्तम् । वृत्तिकारोऽपि भाष्यकारपक्षमेवानुसरति । परिभाषासूत्रेऽपि कपर्दिना आवृत्तिः दर्शिता । अत अस्माभिरेवं परिष्कृतम् । केचित् प्रतिबीजं उलूखलमुसलहस्तानां प्रक्षालनमिच्छन्ति ।

२००. 'समाहतान् सर्वान् तुषान् अग्नीषोमीयस्य मध्यमे पुरोडाशकपाले ओप्य रक्षसां भागोऽसि इति निरसनं करोति' इत्येकेषां पाठः। 'पुरोडाशानां तेन तेन मध्यमेन पुरोडाशकपालेन, श्यामाकादि चरूणां हस्तेन तुषोपवपनम्' इत्यन्येषां पाठः ।

पुरोडाशस्यावर्तते[२०१]। कपालानामुपधानकाले अग्नीषोमीयस्यैकादश कपालानि, अष्टावुपधाय तूष्णीं त्रीणि । अग्नेर्गृहपतेरष्टौ कपालानि । ध्रुवोऽसीति सौम्यस्थालीम् । सावित्रस्य द्वादशकपालानि द्वितीयचतुर्थषष्ठाष्टमानामावृत्तिः । ध्रुवोऽसीति रौद्रस्थालीं बार्हस्पत्यस्थालीं च । ऐन्द्रस्यैकादश कपालानि । ध्रुवोऽसीति मैत्रस्थालीं वारुणस्थालीं च । **भृगूणामङ्गिरसां** इत्यादि । अधिवापवत् सँवापः पृथक्पृथक् । पिष्टानां तण्डुलानाञ्चोत्पत्तिक्रमेणोत्पवनम् । अन्या आपो यजुषोत्पूय **समापो अद्भिः । अद्भ्यः परि । जनयत्यै त्वा । मखस्य शिरोऽसि** इत्यादि प्रतिपुरोडाशमावर्तते । नात्र निर्देशः । निर्वापक्रमेण अधिश्रयणम् । प्रथनादि पुरोडाशनामन्तरितं सर्वेषाम् । आप्यलेपं बर्हिषि निनीय ।

***घृताऽगेहि*** इत्यादि प्राशित्रं सम्मृज्य । प्रस्तरे पवित्रे अपिसृज्य । **इदमह॒ सेनाया** इत्यादि । अग्नीषोमीयं तूष्णीमभिघार्य । **आप्यायतां --- तेजसाग्नये गृहपतये जुष्टमभिघारयामि ।** तूष्णीं सौम्यम् । **सवित्रे सत्यप्रसवाय जुष्टमभिघारयामि । रुद्राय पशुपतये जुष्टमभिघारयामि । बृहस्पतये वाचस्पतये जुष्टमभिघारयामि** । तूष्णीमैन्द्रम् । **मित्राय सत्याय जुष्टमभिघारयामि । वरुणाय धर्मपतये जुष्टमभिघारयामि** । स्योनन्त इत्यादि क्रमेणोद्वासनम् । **आर्द्रो** भुवनस्येति चरूणामुद्वासनम् । सर्वेषामलङ्करणम् । प्रियेणेत्यासादनम् । यज्ञोऽसीति षट् । **अयं यज्ञः । यो नः कनीयः --- अपतमिन्द्रो ज्येष्ठो भुवनान्नुदताम् ।** ममाग्ने चतुर्होता । शृते पशौ पञ्चहोता । जुह्वामुपस्तीर्येत्यादि । ***अग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहि । अग्नीषोमाभ्यां पुरोडाशस्य* प्रेष्य** । अग्नीषोमाभ्यामिदम् । **अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् ।**

उपांशु देवसुवां प्रचारः वारुणवर्जम्[२०२] । ***अग्नये गृहपतये ,अनुब्रूहि । अग्निं गृहपतिं, यज***[२०३]। अग्नये गृहपतय इदम् । **अग्नेर्गृपतेरहं---अन्नादो भूयासम् ।** ***सोमाय वनस्पतये, अनुब्रूहि । सोमं वनस्पतिं, यज*** । सोमाय वनस्पतय इदम् । **सोमस्य**

---

२०१. तद्यथा "अग्नीषोमाभ्यां जुष्टमधिवपामि । अणूनि कुरुतादित्यन्तम् । अग्नये गृहपतये जुष्टमधिवपामि । अणूनि कुरुतादित्यन्तम् । सवित्रे सत्यप्रसवाय जुष्टमधिवपामि । अणूनि कुरुतादित्यन्तम् । इन्द्राय ज्येष्ठाय जुष्टमधिवपामि । अणूनि कुरुतादित्यन्तम्" ॥

२०२. 'स्रुचं प्रक्षाल्य हस्तं प्रक्षाल्य देवसुवाहविषां प्रचारः' इति आन्ध्रप्रयोगः ।

२०३. अत्र सर्वत्र अर्धविरामचिह्नपर्यन्तः पठितो मन्त्रभाग उपांशु । तदनन्तरः उच्चैः ।

**वनस्पतेरहं --वृत्रहा भूयासम्** । ***सवित्रे सत्यप्रसवाय, अनुब्रूहि । सवितारं सत्यप्रसवं, यज*** । सवित्रे सत्यप्रसवायेदम् । **सवितुस्सत्यप्रसवस्याहं देवयज्ययान्नादो भूयासम्** । ***रुद्राय पशुपतये, अनुब्रूहि । रुद्रं पशुपतिं, यज*** । रुद्राय पशुपतय इदम् । **रुद्रस्य पशुपतेरहं देवयज्ययान्नादो भूयासम्** । अप उपस्पृश्य । ***बृहस्पतये वाचस्पतये, अनुब्रूहि । बृहस्पतिं वाचस्पतिं, यज*** । बृहस्पतये वाचस्पतय इदम् । **बृहस्पतेर्वाचस्पतेरहं देवयज्ययान्नादो भूयासम्** । ***इन्द्राय ज्येष्ठाय, अनुब्रूहि । इन्द्रं ज्येष्ठं, यज*** । इन्द्राय ज्येष्ठायेदम् । **इन्द्रस्य ज्येष्ठस्याहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्** । ***मित्राय सत्याय , अनुब्रूहि । मित्रं सत्यं, यज*** । मित्राय सत्यायेदम् । **मित्रस्य सत्यस्याहं देवयज्ययान्नादो भूयासम्** । अथोच्चैः ***वरुणाय धर्मपतयेऽनुब्रूहि । वरुणं धर्मपतिं यज*** । वरुणाय धर्मपतय इदम् । **वरुणस्य धर्मपतेरहं देवयज्ययान्नादो भूयासम्** । नात्र नारिष्ठाः । समानं तु स्विष्टकृदिडम्[२०४] । अग्नीषोमीयस्य मुख्यत्वात् ***अग्नयेऽनुब्रूहि अग्नये प्रेष्य*** इत्येव स्विष्टकृतः सम्प्रैषः । रौद्रं शेषं क्षिपेदप्सु प्राशित्रेडं न तस्य तु[२०५] । अग्नीषोमीयसौम्य ऐन्द्रवर्ज्यानां विरुज्य प्राशित्रम् । इडावदानकाले न यजमानभागम् । इडामार्जनान्ते । स्रुवेण पृषदाज्यस्योपहत्येत्यादि समानमा समाप्तेः । पत्नीसंयाजान्तोऽग्नीषोमीयस्सन्तिष्ठते । निशायां वसतीवरीपरिहरणादि अग्निष्टोमवत् । रात्रौ परिस्तरणान्ते व्रतम्[२०६] । प्राजहिते दीक्षितस्य व्रतमित्यादि । अपरेण शालामुखीयं व्रतं प्रयच्छति ।

**ये देवा मनोजाता** इति व्रतयति । ***शिवाः पीता भवथ*** । रात्रौ यजमानं जागरयन्ति ।

## ॥ इति चयने अग्नीषोमीयपशुप्रयोगः ॥



---

२०४. अग्नीषोमीयेन पशुपुरोडाशेन सहैव देवसुवां हविषां स्विष्टकृद्भागः इडावदानं च इत्यर्थः ।

२०५. नास्तीदं वाक्यं क्वचिन्मातृकाग्रन्थेषु । अपेक्षितं तु, बौधायनेनोक्तत्वात् ।

२०६. आन्ध्रप्रयोगे द्राविडप्रयोगे च अत्र व्रतं न विद्यते ।

# ॥ अग्निष्टोमक्रतुः ॥

महारात्रे बुध्वेत्यादि । हृदे त्वा, सोम राजन्नित्येताभ्यां राजानमुपावहरतीत्यन्तं कृत्वा ।

[होतरेहीत्यस्मात्पूर्वं तिसृभिरग्नियोगकम् ।

आग्निके सवनीये तु सर्वत्राग्नेय एव हि[२०७] इति आन्ध्रप्रयोगपाठः ।]

**अग्निं युनज्मि शवसा घृतेन दिव्य्ँ सुपर्णं वयसा बृहन्तम् । तेन वयं पतेम ब्रध्नस्य विष्टप्ँ सुवो रुहाणा अधि नाक उत्तमे ॥ इमौ ते पक्षावजरौ पतत्रिणो याभ्याँ रक्षाँस्यपहँस्यग्ने । ताभ्यां पतेम सुकृतामु लोकँय्यत्रऋषयः प्रथमजा ये पुराणाः ॥ चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षश्शकुनो भुरण्युर्महान्त्सधस्थे ध्रुव आ निषत्तः** पुरस्तात् प्रातरनुवाकात्तिसृभिरभिमृशन्नग्निं युनक्ति, सोऽग्नियोगः । **होतरेहि** प्रातर्यावभ्य इत्यादि समानम् । पशुकाले आग्नेयः एकः पशुः ऐकादशिना वा साग्निचित्येषु । तत्रापि प्रतिपशु स्वरवः । शेषं समानम् । दक्षिणाकाले प्रतिहर्त्रे दत्वा हिरण्यपात्रं मधोः पूर्णं शतमानस्य कृतं **चित्रं देवानां ---तस्थुषश्च**[२०८] । अवेक्ष्य अश्वेनावघ्राप्य ब्रह्मणे ददाति ।

[ प्रतिहर्तुश्च दानान्ते मधोः पूर्णं हिरण्यकम् ।

चित्रमित्यादि चमसाध्वर्युदानान्तमेव हि ॥

ब्रह्मन् मधुपूर्णं हिरण्यपात्रं ते ददामि । अध्वर्यो कल्याणीस्ते ददामि इति आन्ध्रप्रयोगपाठः ।]

ब्रह्मा **अग्नये हिरण्यं** इति तत् प्रतिगृह्णाति[२०९] । यद्यग्निचिदध्वर्युस्स्यात् तिस्रो धेनूर्बहुमूल्या

---

२०७. अग्निचयने सवनीयपशुः आग्नेय एव इत्यर्थः ।

२०८. "हिरण्यपात्रस्य प्रतिग्रहः अग्नये हिरण्यमिति । तस्य हिरण्मयत्वात् । हिरण्यपात्रं मधोः पूर्णं ददातीति पात्रस्य प्रतिग्रहणं न मधुनः" इति कपर्दिभाष्यम् ।

२०९. आन्ध्रप्रयोगपाठे हिरण्यपात्रस्य प्रतिग्रहमन्त्रो नास्ति । अध्वर्योस्तु प्रतिगृह्णामि रुद्राय गामिति वा, इति विकल्प उक्तः ।

दक्षिणा ददाति । ततश्चमसाध्वर्यवादीनामित्यादि । अथ यज्ञायज्ञियस्य स्तोत्रे एकयाऽप्रस्तुतं भवति । उपान्त्यनिधने कृते **नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः । समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते ॥ उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत । दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म सप्रथा नमस्पथे ।** द्वाभ्यामग्निमभिमृशति । समिष्टयजुषां काले एकादश समिष्टयजूंषि जुहोति । सप्तकृत्व आप्याय्य चतुरनाप्याय्य तूष्णीं ध्रौवं समापयन् जुह्वामेकादशगृहीतं गृहीत्वा धातारातिरित्यादि वाते धास्स्वाहेत्यन्तं हुत्वा । **इष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्स्वाहा** । यज्ञायेदम् । **तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीय स्वाहा** । यज्ञायेदम् । नात्र बर्हिः प्रह्रियते । नाभिस्तृणीहि । **यौ देवा** इत्यादि ।

# ॥ अप्तोर्यामक्रतुः ॥

महारात्रे बुध्वेत्यादि । ग्रहासादनकाले ध्रुवस्थालीं प्रयुज्य खरे षोडशिपात्रं खादिरं चतुस्स्रक्ति प्रयुनक्ति । ***को वो युनक्ति स वो युनक्तु*** । खरस्य मध्ये परिप्लवामित्यादि । **हृदे त्वा, सोम** राजन्नित्येताभ्यां राजानमुपावहरतीत्यन्तं कृत्वा । **अग्निं युनज्मि शवसा घृतेन दिव्य॑ँ सुपर्णं वयसा बृहन्तम् । तेन वयं पतेम ब्रध्नस्य विष्टप॑ँ सुवो रुहाणा अधि नाक उत्तमे ॥ इमौ ते पक्षावजरौ पतत्रिणो याभ्या॑ँ रक्षा॑ँस्यपह॑ँस्यग्ने । ताभ्यां पतेम सुकृतामु लोकँय्यत्रर्षयः प्रथमजा ये पुराणाः ॥ चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षश्शकुनो भुरण्युर्महान्त्सधस्थे ध्रुव आ निषत्तः ॥** तिसृभिरभिमृशन्नग्निं युनक्ति, सोऽग्नियोगः । **होतरेहि, प्रातर्यावभ्यो देवेभ्य** इत्यादि समानम् । क्रतुकरणकाले न जुहोति नोपस्पृशति । **यमग्ने पृत्सु मर्त्यं** इत्येतद्यजुर्वदन् समुद्यैव प्रचरणीं हविर्धानं प्रपद्यते । ग्रहग्रहणकाले ध्रुवस्थालीं गृहीत्वा षोडशिनं गृह्णाति । **आतिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीन॑ँ सु ते मनो ग्रावा कृणोतु वग्नुना । उपायामगृहीतोऽसीन्द्राय त्वा षोडशिने** । गृहीत्वा, पवित्रदशाभिः परिमृज्य । **एष ते योनिरिन्द्राय त्वा षोडशिने** सादयति । **यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया सँव्विदानस्त्रीणि ज्योति॑ँषि सचते स षोडशी । एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे । प्र ते महे विदथेऽश॑ँसिष॑ँ हरी । य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् । इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसङ्गिरः** इत्येताभिश्चतसृभिः सन्नं षोडशिनमभिमन्त्र्य । अत्र धारा विरमतीत्यादि । पशुकाले आग्नेय एकः पशुः । ऐकादशिना वा । एकयूपः एकादशिनी वा साग्निचित्येषु । तत्र प्रतिपशु बर्हिषीत्यादि । शेषं समानम् । ग्रहाभिमर्शनकाले वर्चसे मे इति सौर्यमवेक्ष्य । ***वीर्याय मे वर्चोदा वर्चसे पवस्व*** षोडशिनम् । **विष्णोर्जठरमसि** इत्यादि । सर्वमितरत्प्रकृतिवत् ।

*माध्यन्दिनपवमाने रथशब्देन बर्हिर्मुष्टिना च स्तोत्रोपाकरणम् । रथशब्दो उपाकरणमन्त्रस्थाने भवति । दक्षिणाकाले प्रतिहर्त्रे दत्वा हिरण्यपात्रं मधोः पूर्णं शतमानस्य कृतं **चित्रं देवानां** ---

---

* षोडशिनं सवने सवनेऽभिगृह्णातीति पक्षे माध्यन्दिने सवने मरुत्वतीयग्रहग्रहणानन्तरं षोडशिनं गृह्णीयात् ।

**तस्थुषश्च** । अवेक्ष्य अश्वेनावघ्राप्य ब्रह्मणे ददाति । यद्यग्निचिदध्वर्युस्स्यात् कल्याणीर्धेनूर्बहुमूल्या दक्षिणा ददाति । ततश्चमसाध्वर्यवादीनामित्यादि । अथ माहेन्द्रस्य स्तोत्रोपाकरणकाले दुन्दुभिघोषेण अरणिभ्यां बर्हिर्भ्यां च स्तोत्रमुपाकरोति[२१०] उपाकृतं सामाप्रस्तुतं भवति । अथोद्गातुर्दक्षिणगूरुमवकाभिः प्रच्छाद्य तस्मिन्नग्निं मन्थति । तं जातमुद्गाताभिहिंकृत्य प्रस्तोत्रे प्रयच्छति[२११] । *समाप्ते स्तोत्रे पूर्णवच्छस्त्र प्रतिगरः । अस्मिञ्च्छस्त्रे न्यूङ्खो न्यूङ्खवत् प्रतिगरः । **ओ३ओओओओओ३ओओओओ ओओ३ओओओथामोदैवोम्** इति । **ओथामोदैव** इत्यवसानेषु । उद्गातृहस्तस्थमग्निं अध्वर्युरादायोत्तरेण सर्वान्धिष्णियान् परीत्य पूर्वया द्वारा निष्क्रम्य आहवनीये प्रहरति । **प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वा॑ं शश्वन्त उप यन्ति वाजास्स्वाहा** । प्रजापतय इदम् । अपि वा उद्गातैव प्रहृत्य जुहुयात्[२१२] । ततो अग्नये पथिकृत इत्यादि । माध्यन्दिनसवनस्योक्थ्यपर्याये स्तोत्रोपाकरणकाले अद्भिरवकावास्ताभिः[२१३] बर्हिभ्यां च स्तोत्रमुपाकरोति । **असर्ज्यसर्जि** । उत्तराभ्यां पर्यायाभ्यां प्रतिप्रस्थाता चरति । स्तोत्रोपाकरणकाले आधावत्रयेण[२१४] दर्भद्वयेन च उपाकरोति । वैरूपस्य हिंकारप्रभृति आ समाप्तेः यजमानस्य परिचारकाः

---

* कासुचिन्मातृकासु माहेन्द्रस्तोत्रे स्तूयमाने यजमानस्याभिषेकः उक्तः । तद्यथा :- "बृहस्पतिसववदभिषेकं कार्यम् । दर्शिता भाष्यकारेण । सवनस्यान्ते । तस्मादिहाप्यभिषेकः स्तूयमाने कृष्णाजिन आसीनं यजमानमाज्येनाभिषिञ्चति । शुक्रामन्थिनोर्वा संस्रावेण । बृहस्पते युवमिन्द्रश्च --- सदा नः इत्यृचाभिषिञ्चति" इति ।

२१०. बर्हिस्स्थाने अरणिभ्यां माहेन्द्रस्य स्तोत्रमुपाकरोति इति सूत्रम् । अत्र भूमिका द्रष्टव्या ।

२११. वैराजस्य स्तोत्र उपाकृत उपर्यनूरुशकलं निधाय तृणे च तस्योपरि तिरश्चीमरणीं निधायाध्यात्मं प्रजननं कृत्वा त्रिःप्रदक्षिणमभिमन्थेत् गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमिति गौतमः । चतुर्भिरिति धानञ्जय्यः । त्रिभिरिति शाण्डिल्यः । अरण्योः सन्धानमालभ्योपजिघ्रेत्पाणी तेजोऽसि तेजो मयि धेहीति । मथ्यमाने स्तोमं युञ्ज्यात् । जाते स्तुवीरन् । वाचयित्वा यजमानं ( स्तुतस्य स्तुतमसीति ) पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः । सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि इत्यनुमन्त्र्याभि जुहुयात् । तदुक्तं ब्राह्मणेन - प्रेद्धो अग्ने दीदिही पुरो न इति विराजाभि जुहोतीति । स्वाहाकारेणोत्तराम् । आगत्योपरिष्टाज्जपः । इति उद्गातृणां प्रयोग उक्तः ॥ 'अथान्येन मथ्यमाने स्तोमं युक्त्वा दुन्दुभिघोषं कारयन्त एकविंशस्यैकं पर्यायं बृहता स्तुत्वा मथितमग्निमन्येन ज्वालयन्तो वैराजेन मध्यमं स्तुयुः । पुनर्दुन्दुभिघोषं कारयन्त उत्तमं पर्यायं बृहता समापयेयुः' इति चोद्गातृणां प्रयोगः ॥

२१२ आपस्तम्बसूत्रानुसारेण प्रस्तोता अध्वर्यवे प्रयच्छति तमध्वर्युरादाय ....... आहवनीये प्रहरति इति प्रयोगक्रमः । औद्गातृप्रयोगस्तु उद्गातुर्हस्तस्थमग्निमध्वर्युरादाय ....... आहवनीये प्रहरति इति प्रयोगक्रमः ।

२१३. अवकामिश्रमुदकं कस्मिंश्चित् पात्रे आनीय इत्यर्थः ।

२१४. आधावाः तालवृन्ताः इत्यर्थः ।

स्वेन स्वेनाधावेन धून्वन्त्युद्गातॄन् । अग्नये पथिकृत इत्यादि । तृतीयोक्थ्यपर्याये उद्गातृणां दक्षिणतः बहिर्वेदि गाः कृत्वा तथैवोत्तरतो वत्सान् कृत्वा वत्सान् प्रति धेनूस्संवाशयेयुः । ***असर्ज्यसर्जि*** । स्तोत्रान्ते उत्तमे पर्याये स्तुते धेनूर्वत्सांश्च पूर्वेण सदः संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीस्त्यजेयुः । एतत् औद्गातृकर्मेत्येके । **स्तुतस्य स्तुतम्** । ततश्शस्त्रं प्रतिगृणाति । **शस्त्रस्य शस्त्रम्** । अग्नये पथिकृत इत्यादि । समानं माध्यन्दिनं सवनमासमाप्तेः ।

अथ तृतीयसवनम् । धाराग्रहणकाले आग्रयणं गृहीत्वा उक्थ्यं गृह्णाति* । पञ्चहोत्राभिमर्शनान्ते । **द्वौ समुद्रौ** इत्यादि । **आत्मने मे--पवस्व** । **अङ्गेभ्यो मे वर्चोदा --- पवस्व** । ***पुष्ट्यै मे वर्चोदा --- पवध्वम्*** । ***शृतोऽस्यात्मानं मे*** । ***शृतोऽस्यङ्गानि मे*** । ***शृतास्स्थ पुष्टिं मे*** इत्यादि ।

अथ यज्ञायज्ञियं दुन्दुभिशब्देन बर्हिर्भ्यां च स्तोत्रमुपाकरोति । यद्यु वै स्तनयित्नुः स्यात्स एव स्याच्छब्दो मन्त्रस्थाने । स्तोत्रमेकयाऽप्रस्तुतं भवति । उपान्त्यनिधने कृते **नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः । समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते ॥ उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत। दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म सप्रथा नमस्पथे** । द्वाभ्यामग्निमभिमृशति । न पूतभृतो बिल इत्यादि[२१५] । चमसोन्नयनकाले नोन्नेतः सर्वं राजानं उन्नय । एकविंशत्यै चमसगणेभ्यो राजानमतिरेचयति[२१६] । ***असर्ज्यसर्जि*** । स्तुतस्य स्तुतमसीत्यादि । आग्निमारुतशस्त्रान्ते **शस्त्रस्य शस्त्रमसि** । अग्नये पथिकृत इत्यादि ।

अथोक्थ्यपर्यायाः । ***उपयामगृहीतोऽसि इन्द्रावरुणाभ्यां त्वा जुष्टं गृह्णामि देवेभ्यो देवायुवमुक्थेभ्य उक्थायुवम्*** उक्थ्यपात्रेणोक्थ्यतृतीयं गृहीत्वा । ***एष ते योनिरिन्द्रावरुणाभ्यां त्वा*** सादयति । **पुनर्हविरसि** स्थालीमभिमृशति । मैत्रावरुणचमसमुख्यान् चमसानुन्नयति । ***असर्ज्यसर्जि*** । **तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व** । **स्तुतस्य स्तुतमसि** इत्यादि । **इडा देवहूः**। शस्त्रप्रतिगरे विशेषः । अभि प्र वस्सुराधसमित्यादिषु षट्सु सूक्तेषु **ओथामोदैवमदे** इत्यर्धर्चेषु ।

---

* सवने सवनेऽभिगृह्णाति इति पक्षे अत्रापि षोडशिनं गृह्णीयात् ।

२१५. चमसोन्नयनकाले *उन्नेता न सर्वं राजानमुन्नय ---* इति प्रैषः क्वचिन्मातृकाग्रन्थे विद्यते । परन्तु सूत्रेषु एतादृशः प्रैषः नोपलभ्यते ।

२१६. सोमवृद्धिं करोतीत्यर्थः ।

**मदामोदैवोमथ** इति प्रणवेषु । सर्वास्वेकपदासु **ओथामोदैवोम्** इति प्रणवान्तः प्रतिगरः । दूरोहणे च यत्र प्रणवेनावस्यति तत्रापि **ओथामोदैवोम्** इति प्रणवान्तः प्रतिगरः । अवशिष्टः प्राकृतः प्रतिगरः । **शस्त्रस्य शस्त्रमसि** । अग्नये पथिकृत इत्यादि । ग्रहमध्वर्युरादत्ते । चमसाँश्चमसाध्वर्यवः । आश्राव्य प्रत्याश्राविते **उक्थशा यज सोमानाम्** । इन्द्रावरुणाभ्यामिदम् । अग्नये स्विष्टकृत इदम् । मैत्रावरुणचमसमध्वर्युः प्रतिभक्षयति । प्रक्षालितेषु चमसेषु । एवं विहितावुत्तरौ पर्यायौ । ताभ्यां प्रतिप्रस्थाता चरति । ***उपयामगृहीतोऽसीन्द्राबृहस्पतिभ्यां त्वा जुष्टं --- युवम्*** अर्धं चोक्थ्यशेषस्य गृहीत्वा । ***एष ते योनिरिन्द्राबृहस्पतिभ्यां त्वा*** सादयति । **पुनर्हविरसि** स्थालीमभिमृशति । ब्राह्मणाच्छंसिचमसमुख्यान् चमसानुन्नयति । **असर्ज्यसर्जि। पृतनाषाडसि पशुभ्यस्त्वा पशून् जिन्व** । स्तुतस्य स्तुतमसि । इडा देवहूः । अस्मिञ्छस्त्रे प्रतिगरे विशेषः । आदित आरभ्य विहिसोतोरसृक्षतनेन्द्रं देवमममंसत पर्यन्तं प्राकृताः प्रतिगराः **ओथामोदैव, ओ३थामोदैव** । न्यूङ्खे न्यूङ्खवत् **ओ३ओओओओओओ३ओओ ओओओओ३ओओओ मदेथ मदैवो३ओओओ३मोथामोदैव** इति । अवसाने **ओथामोदैव** । ऋगन्ते प्रणवे **ओ३थामोदैव** । न्यूङ्खान्ते इदं जना उपश्रुतेत्यादि यस्सभेय इत्यन्तं प्रणवान्तः प्रतिगरः **ओथामोदैवोम्** इति । अवसानेषु **ओथामोदैव** । यस्सभयो विदथ्येत्यादि विततौ किरणौ पर्यन्तं **ओथामोदैव, ओ३थामोदैव** इति प्राकृतौ प्रतिगरौ । विततौ किरणौ द्वौ इति षडनुष्टुभः । तासां **दुन्दुभिमाहननाभ्यां जरितरोथामोदैव । कोशबिले जरितरोथामोदैव । रजनिग्रन्थैर्धानां जरितरोथामोदैव । उपानहि पादं जरितरोथामोदैव । उत्तरां जनीमां जन्यां जरितरोथामोदैव । उत्तरां जनीं वर्त्मन्यां जरितरोथामोदैव** इति प्रतिगरा अवसानेषु[२१७] । प्रणवेषु **ओ३थामोदैव** ।

इहेत्थप्रागपागुदगधराक् इति चतस्रः द्वेधाकारम् । तासामवसाने **ओथामोदैव । अलाबूनि जरितरोथा-मोदैवो३म् । पृषातकानि जरितरोथामोदैवो३म् । अश्वत्थपलाशं जरितरोथामोदैवो३म् । पिपीलिका-वटो जरितरोथामोदैवो३म्** इति प्रतिगराः प्रणवेषु ।

भुगित्यभिगतः इति त्रीणि पदानि । तेषु **श्वा जरितरोथामोदैव । पर्णशदो जरितरोथामोदैव । गोशफो जरितरोथामोदैव** इति प्रतिगराः ।

वीमे देवा अक्रंसत इत्यनुष्टुप् । तस्या अवसाने **पत्नी यीयप्स्यते जरितरोथामोदैव** इति

२१७. अवसाने अवसानेषु इत्युक्ते प्रायेणार्धर्चेषु इत्यर्थः ।

प्रतिगरः । प्रणवे **होता विष्टीमेन जरितरोथामोदैव** इति प्रतिगरः । आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन् इति सप्तदश पदानि । तेषामाद्ये पदे प्राकृतः प्रतिगरः, मध्यवर्तिषु पञ्चदशसु **ओं ह जरितरोथामोदैव । तथा ह जरितरोथामोदैव** इति प्रतिगरौ व्यत्यासम्, प्रणव एवोत्तमे पदे । त्वमिन्द्र शर्मरिणा इत्यारभ्य यदस्या अंहुभेद्याः इत्यन्तं प्राकृतौ प्रतिगरौ **ओथामोदैव, ओ३थामोदैव** इति । ततः न्यूङ्खेषु **ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३ मोथामोदैवो३म्** इति प्रतिगरः । दधिक्राव्णेत्यादि आसमाप्तेः प्राकृतः प्रतिगरः ।

**शस्त्रस्य शस्त्रमसि** इत्यादि । ग्रहं प्रतिप्रस्थातादत्ते । ***उक्थशा यज सोमानाम्*** । इन्द्राबृहस्पतिभ्यामिदम् । अग्नये स्विष्टकृत इदमित्यादि । प्रक्षालितेषु चमसेषु । ***उपयामगृहीतोऽसीन्द्राविष्णुभ्यां त्वा जुष्टं --- उक्थायुवम्*** सर्वं चोक्थ्यशेषस्य गृह्णाति । ***एष ते योनिरिन्द्राविष्णुभ्यां त्वा*** सादयति। न स्थालीमभिमृशति । अच्छावाकचमसमुख्यान् चमसानुन्नयति । **रेवदस्योषधीभ्य स्त्वौषधीर्जिन्व । इडा देवहूः । शो९ सामोद इव** । प्रवो मह इति नवानां ऋचां पूर्वावसानेषु प्राकृतः प्रतिगरः । आसां न्यूङ्खेषु निनर्दे च **ओ३ओओओओओ३ओओओओओ३ओओओमदे मधोर्मदस्य मदिरस्य मदैवो३ओ३ओ३ओ३मोथामोदैवोम्** इति प्रतिगरः । शेषं प्रकृतिवत् । **शस्त्रस्य शस्त्रमसि** इत्यादि । ग्रहं प्रतिप्रस्थातादत्ते ***उक्थशा यज सोमानाम्*** । इन्द्राविष्णुभ्यामिदम् । अग्नये स्विष्टकृत इदम् । प्रक्षालितेषु चमसेषु ।

समयाविषिते सूर्ये[२१८] ***असर्ज्यसर्जि*** । हिरण्येन बर्हिर्भ्यां च षोडशिस्तोत्रमुपाकरोति । **अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्व** । सदः पुरस्तात् श्वेतमश्वं धारयन्ति । आत्वा वहन्तु हरय इत्यारभ्य प्रप्र वस्त्रिष्टुभ इत्येतत्पर्यन्तं अवसानप्रणवयोः ***ओथामोदैवमदे । मदामोदैवोमथ*** इति यथाक्रमम् प्रतिगरौ भवतः । **शस्त्रस्य शस्त्रमसि** इत्यादि । षोडशिनमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । ***उक्थशा यज सोमानाम्*** । **इन्द्राधिपतेऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु स्वाहा** । इन्द्रायाधिपतय इदम् । अग्नये स्विष्टकृत इदम् । ग्रहमध्वर्युः

हरिवत

२१८. अर्धास्तमिते सूर्ये इत्यर्थः । अत्रैवं सूत्रं– समयाविषिते सूर्ये हिरण्येन षोडशिनः स्तोत्रमुपकरोति । बर्हिस्थाने भवति इति । अत्र रुद्रदत्तः–हिरण्यं बर्हिषोः स्थाने भवति. न तु ताभ्यां समुच्चीयते इति । तथापि प्रयोगकारैः समुच्चय एव विहितः । अत्र भूमिका द्रष्टव्या ।

प्रतिभक्षयति । **भक्षेहि --- अवख्येषम्** । होतरुपह्वयस्व । **इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरनु भक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यतु ।** इति षोडशिनं भक्षयति । **हिन्व मे** । चमसिनः समाख्याभक्षणं भक्षयन्ति । प्रक्षालितेषु चमसेषु हिरण्यमश्वं चोद्गात्रे दद्यात् ।

अथ रात्रिपर्यायैः प्रचरन्ति । होतृचमसमुख्यांश्चमसानुन्नयन्ति ***इन्द्राय त्वाऽपिशर्वराय*** * इति सर्वत्र मुख्यचमसोन्नयनम् । स्तोत्रोपाकरणादि । (%)**अधिपतिरसि प्राणाय त्वा प्राणं जिन्व** । **स्तुतस्य स्तुतमसि** इत्यादि । प्राकृतः प्रतिगरः । **शस्त्रस्य शस्त्रं** इत्यादि । होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । ***उक्थशा यज सोमानाम्*** । इन्द्रायापिशर्वरायेदम् । अग्नये स्विष्टकृत इदम् । होतृचमसमध्वर्युः प्रतिभक्षयति । सर्वांश्चमसान् होता भक्षयति । चमसिनः समाख्याभक्षं भक्षयन्ति । प्रक्षालितेषु चमसेषु ।

द्वितीये पर्याये मैत्रावरुणचमसमुख्यान् चमसानुन्नयति ***इन्द्राय त्वाऽपिशर्वराय*** । स्तोत्रोपाकरणादि । **यन्ताऽस्यपानाय त्वाऽपानं जिन्व** । मैत्रावरुणचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । ***उक्थशा यज सोमानाम्*** । इन्द्रायाऽपिशर्वरायेदम् । अग्नये स्विष्टकृत इदम् । मैत्रावरुणचमसमध्वर्युः प्रतिभक्षयति । सर्वांश्चमसान् मैत्रावरुणो भक्षयति । प्रक्षालितेषु चमसेषु ।

एवं विहितावुत्तरौ पर्यायौ ताभ्यां प्रतिप्रस्थाता चरति । तृतीये पर्याये ब्राह्मणाच्छंसिचमसमुख्यान् चमसानुन्नयति । ***इन्द्राय त्वाऽपिशर्वराय*** । स्तोत्रोपाकरणादि । **स९ सर्पोऽसि चक्षिषे त्वा चक्षुर्जिन्व** । ब्राह्मणाच्छंसिचमसं प्रतिप्रस्थातादत्ते । चमसांश्चमसाध्वर्यवः । ***उक्थशा यज सोमानाम्*** । इन्द्रायाऽपिशर्वरायेदम् । अग्नये स्विष्टकृत इदम् । ब्राह्मणाच्छंसिचमसं प्रतिप्रस्थाता भक्षयति । प्रक्षालितेषु चमसेषु ।

चतुर्थे अच्छावाकचमसमुख्यान् चमसानुन्नयति । ***इन्द्राय त्वाऽपिशर्वराय*** । स्तोत्रोपाकरणादि । **वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व** । अच्छावाकचमसं प्रतिप्रस्थातादत्ते । चमसांश्चमसाध्वर्यवः । ***उक्थशा यज सोमानाम्*** । इन्द्रायाऽपिशर्वरायेदम् । अग्नये स्विष्टकृत इदम् । अच्छावाकचमसं प्रतिप्रस्थाता भक्षयति । प्रक्षालितेषु चमसेषु । एषः प्रथमपर्यायः ।

---

*. **उपयामगृहीतोसीन्द्राय त्वाऽपिशर्वराय** इति पाठान्तरम् । (%)अत्र रुद्रदत्तमतानुसारेण सांप्रदायिकानुष्ठानपक्षेण च षोडशस्य स्तोमभागस्यैव (अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्व इत्यस्य ) आवृत्तिः करणीया ।

एवं विहितो द्वितीयस्तृतीयश्च । *इन्द्राय त्वाऽपिशर्वराय* इति सर्वत्र मुख्यचमसोन्नयनम् । होतृमैत्रावरुणचमसाभ्यामध्वर्युश्चरति । ब्राह्मणाच्छंस्यच्छावाकचमसाभ्यां प्रतिप्रस्थाता । द्वितीय पर्यायस्य स्तोमभागानाह । **त्रिवृदसि** इति प्रथमे । **प्रवृदसि** इति द्वितीये । **सँव्वृदसि** इति तृतीये । **विवृदसि** इति चतुर्थे । इति द्वितीयः पर्यायः ।

तृतीयपर्यायस्य स्तोमभागानाह । **स७ रोहोऽसि** इति प्रथमे । **नीरोहोऽसि** इति द्वितीये । **प्ररोहोऽसि** इति तृतीये । **अनुरोहोऽसि** इति चतुर्थे । स्तोत्रोपाकरणशस्त्रप्रतिगरचमसहोमभक्षणादि पूर्ववत् । तृतीयपर्यायस्य उत्तमगणस्य चमसेषु प्रक्षालितेषु ।

प्रतिप्रस्थाता आश्विनं द्विकपालं पुरोडाशं निर्वपति । द्वे कपाले शूर्पं च द्वन्द्वम् । कृष्णाजिना-द्युपलान्तान्यपरतः । पुरतः पात्रीं मेक्षणं मदन्त्युपवेषं च । पवित्रे कृत्वा संविशन्तामित्यादि । निर्वापकाले **देवस्यत्वा----हस्ताभ्यां अश्विभ्यां जुष्टं निर्वपामि । अदित्यास्त्वोपस्थे सादयाम्यश्विनौ हव्य७ रक्षेथां** । एवं प्रोक्षणादि । कपालोपधानकाले आदितो द्वाभ्यामुपधाय । **भृगूणां---- तप्येथाम्** । आप्यलेपं निनीय । प्रस्तरे पवित्रे अपिसृज्य । तूष्णिमभिघारणम् । **प्रियेण** इत्यासादनम् । **अयं यज्ञो, यो नः कनीयः --- अपतमश्विनौ भुवनान्नुदेतां --- । ममाग्ने** पञ्चहोता । ततोऽध्वर्युः होतृचमसमुख्यान् दश चमसानुन्नयति ~~उपयामगृहीतोऽसी~~न्द्राय त्वापिशर्वराय सन्धिचमसानुन्नयन् चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयति । स्तोत्रोपाकरणादि । **वसुकोऽसि** । ***ओ७ स्तुत*** । अध्वर्युः **इडा देवहूः** इत्यादि आश्विनशस्त्रं प्रतिगृणाति । प्राकृतः प्रतिगरः । आश्विनं परस्सहस्रं शस्त्रं भवति । तदुदित आदित्ये परिधीयते । **शस्त्रस्य शस्त्रम्** । यजमानः पञ्चहोतारं वदेत् । ततः प्रतिप्रस्थाता जुह्वामुपस्तीर्य । आश्विनं पुरोडाशं कृत्स्नं तूष्णीमवदाय द्विरभिघारयति । होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । पुरोडाशं प्रतिप्रस्थाता । अध्वर्युस्सम्प्रेष्यति । ***अश्विभ्यां तिरो अह्नियानां सोमानामनुब्रूहि । अश्विभ्यां तिरो अह्नियानां सोमानां प्रेष्य*** । सह सोमैः पुरोडाशं प्रतिप्रस्थाता सर्वहुतं जुहोति । मध्ये पुरोडाशहोमः । अभितः सोमाहुतयः । अश्विभ्यामिदम् । ***अश्विनोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्*** । अनुवषट्कृते अग्नये स्विष्टकृत इदम् । होत्रा भक्षितं चमसमध्वर्युः प्रतिभक्षयति । प्रक्षालितेषु चमसेषु ।

ततो आप्तोर्यामस्य चमसगणैः अतिरिक्तोक्थैः प्रचरति । ***अग्नये त्वा*** होतृचमसमुख्यांश्चमसानुन्नयति ।

**वेषश्रिरसि** । ***ओ३ स्तुत । शस्त्रस्य शस्त्रम्*** । होतृचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । ***उक्थशा यज सोमानाम्*** । अग्नय इदम् । अग्नये स्विष्टकृत इदम् । होतृचमसमध्वयुर्भक्षयति ।

***इन्द्राय त्वा*** मैत्रावरुणचमसमुख्यान् चमसानुन्नयति । **वस्यष्टिरसि** । मैत्रावरुणचमसमध्वर्युरादत्ते । चमसांश्चमसाध्वर्यवः । इन्द्रायेदम् । अग्नये स्विष्टकृत इदम् । मैत्रावरुणचमसमध्वर्युः प्रतिभक्षयति । प्रक्षालितेषु चमसेषु ।

एवं विहितावुत्तरौ पर्यायौ । ताभ्यां प्रतिप्रस्थाता चरति । ***विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि*** ब्राह्मणाच्छंसिचमसमुख्यांश्चमसानुन्नयति । **वस्यष्टिरसि** । ब्राह्मणाच्छंसिचमसं प्रतिप्रस्थातादत्ते । चमसांश्चमसाध्वर्यवः । विश्वेभ्यो देवेभ्य इदम् । अग्नये स्विष्टकृत इदम् । ब्राह्मणाच्छंसिचमसं प्रतिप्रस्थाता भक्षयति । प्रक्षालितेषु चमसेषु । पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य य आधवनीये राजा तं सर्वं पूतभृत्यवनीय ***उन्नेतः सर्वं राजानमुन्नय मातिरीरिचो दशाभिः कलशौ मृष्ट्वा न्युब्ज*** इति संप्रेष्यति ।

***विष्णवे त्वा*** अच्छावाकचमसमुख्यांश्चमसानुन्नयति । **वस्यष्टिरसि**[२१९] । शस्त्र प्रायश्चित्तान्ते अच्छावाकचमसं प्रतिप्रस्थातादत्ते इत्यादि । विष्णव इदम् । अग्नये स्विष्टकृत इदम् । अच्छावाक चमसं प्रतिप्रस्थाता भक्षयति । चमसिनः समाख्याभक्षणं भक्षयन्ति । प्रक्षालितेषु चमसेषु । अग्नीदौपयजानित्यादि । समिष्टयजुःपर्यन्तं समानम् ।

समिष्टयजुषां काले एकादश समिष्टयजूंषि जुहोति । सप्तकृत्व आप्याय्य चतुरनाप्याय्य तूष्णीं ध्रौवं समापयन् जुह्वामेकादशगृहीतं गृहीत्वा धातारातिरित्यादि वाते धास्स्वाहेत्यन्तं हुत्वा । **इष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्स्वाहा** । यज्ञायेदम् । **तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीय स्वाहा** । यज्ञायेदम् । नात्र बर्हिः प्रह्रियते । नाभिस्तृणीहि । **यौ देवा** इत्यादि ॥

## ॥ अथ अवभृथादिकर्म ॥

अवभृथकाले इष्टकासु प्रचरन्ति ।{**अवभृथकाले उपधानपक्षे अवभृथस्थानं गत्वा अष्टाभिश्शर्कराभिः परिश्रित्य । ममाग्ने वर्च इति पञ्च । अव ते हेडो वरुण**

---

२१९. एतस्मिन्नप्तोर्यामपर्यये मैत्रावरुणादिपर्यायेषु ब्रह्मा वस्यष्टिरसीति त्रिरभ्यसेत् इत्येकः पक्षः । किंतु रुद्रदत्तमतानुसारेण सांप्रदायिकानुष्ठानपक्षेण च एकत्रिंशस्य स्तोमभागस्यैव (वस्यष्टिरसीत्यस्य) आवृत्तिः करणीया ।

**नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेना꣡ꣳसि शिश्रथः कृतानि तया । उदुत्तमं वरुण --- स्याम तया । तत्त्वा यामि --- प्रमोषीस्तया । इत्यष्टौ पुरीषं च । तासु प्रचरन्ति ।**} न तृणप्रहारः । स्रौवमाघारयतीत्यादि ।

अनूबन्ध्यावपायां हुतायां वपनं कृत्वा स्नात्वा । यूपैकादशिनी पक्षे अग्रेण शालामुखीयमित्यादि पात्नीवतं च हुत्वा । औदुम्बरीं स्रुचं घृतस्य पूरयित्वा **इम स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये । उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳसदनमाविशस्व स्वाहा ॥** अग्नय इदम् । अग्नेर्विमोकं हुत्वा धात्रादीनां यागः । हुते सक्तुहोमे यदाकूतादिति तिसृभिर्धूममनुमन्त्रयते यजमानः ।

अथाध्वर्युः **यदाकूतात्समसुस्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषो वा । तमनु प्रेहि सुकृतस्य लोकँय्यत्र ऋषयः प्रथमजा ये पुराणास्स्वाहा ॥** सर्वत्र अग्नय इदम् । **एतꣳसधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः । अन्वागन्ता यज्ञपतिर्वो अत्र तꣳस्म जानीत परमे व्योमन्थ्स्वाहा ॥ जानीतादेनं परमे व्योमन् देवास्सधस्था विदरूप-मस्य । यदागच्छात् पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै स्वाहा ॥ सम्प्रच्यवध्वमनु सम्प्रयाताग्ने पथो देवयानान् कृणुध्वम् । अस्मिन्थ्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत स्वाहा ॥ प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमँय्यज्ञन्नो वह सुवर्देवेषु गन्तवे स्वाहा ॥ यदिष्टं यत्परादानं यद्दत्तं या च दक्षिणा । तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् स्वाहा ॥ येना सहस्रं वहसि येनाग्ने सर्ववेदसं । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे स्वाहा ॥ येनाग्ने दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः । तेनेमं यज्ञन्नो वह सुवर्देवेषु गन्तवे स्वाहा ॥ येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः । तेनेमं यज्ञन्नो वह सुवर्देवेषु गन्तवे स्वाहा ॥ यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् स्वाहा ॥** दशाकूतीर्हुत्वा प्रत्यवरोह्य ***पुनर्मनः पुनरायुरागात् पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानोऽन्तस्तिष्ठत्वमृतस्य गोपाः*** इत्युपतिष्ठते अध्वर्युः । अथ यजमानः **अयं नो नभसा पुरः** इत्यादि । ***यज्ञ शं च म*** इति जपित्वा **वृष्टिरसि** इत्यन्तं कृत्वा **ब्राह्मणाꣳस्तर्पयितवै** इति सम्प्रेष्यति ।

**येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु । तेषां त्वमस्युत्तमः प्रणो जीवातवे सुव । आपन्त्वाग्ने मनसापन्त्वाग्ने तपसापन्त्वाग्ने दीक्षयापन्त्वाग्न उपसद्भिरापन्त्वाग्ने सुत्ययापन्त्वाग्ने दक्षिणाभिरापन्त्वाग्नेऽवभृथेनापन्त्वाग्ने वशयापन्त्वाग्ने स्वगाकारेण** प्रयास्यन्नाप्तिभिरग्निं यजमान उपतिष्ठते ।

{समारोप्य प्राजहितं अन्येषां चितिदर्शने ।
उप त्वेति च तिसृभिरुपस्थानं भवेद्यदि ।
इदमू नु प्रवेशं च उपावरोहणं तथा ।
उदवसानीयास्थाने पूर्णाहुतिस्सनेयिनः ।
अध्वर्युवरणं चैवाहवनीयहृतिस्तथा ।
सुत्योत्कर्षेद्यदि सर्वप्रायश्चित्तं तु हूयते ।
ततो द्वादशगृहीतेन ऊर्ध्वस्तिष्ठंस्तु हूयते ।
इदं विष्णुर्मन्त्रेण वैष्णवीमाहुतिं शुभाम् । इति आन्ध्रप्रयोगपाठः ।}

**अयं ते योनिरिति** प्राजहितं अरण्योः समारोप्य प्रागुदग्वा उदवस्यति **उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳस्वे दमे । स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नस्स्वस्तये ॥** तिसृभिरन्येषां यजमानानां चित्यग्निं दृष्ट्वा उपतिष्ठते । **इदमू नु श्रेयो वसानमगन्म --- सञ्चरेम ॥** देवयजनमध्यवसाय मथित्वा उपावरोह्य आयतने निधाय उदवसानीयायाः तन्त्रं प्रक्रमयति । अपि वा आहवनीयं प्रणीय द्वादशग्रहीतेन स्रुचं पूरयित्वान्तर्वेद्यूर्ध्वस्तिष्ठन्निदं विष्णुर्विचक्रम इति वैष्णवीं पूर्णाहुतिं जुहोति । **इदं विष्णुः --- सुरे स्वाहा ॥** विष्णव इदम् । अथ सायमग्निहोत्रं जुहोति । काले प्रातर्होमः । सन्तिष्ठतेऽग्निः । सहस्रेणेजानस्याऽऽगामिपर्वणि त्रैधातवीया ॥

## अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या चामिक्षया[२२०] ।

---

**अथ कपर्दिभाष्यवाक्यानि :-**

२२०. " विनापि पर्वणीत्युपदेशः । आगामिपर्वणीति न्यायः यश्शक्यते कालं सम्पादयितुमिति " ।

अग्निं चित्वा अनन्तरे पर्वणि सौत्रामण्या यजेत अपरेद्युः मैत्रावरुण्यामिक्षया ।

सँव्वत्सरं न कञ्चन प्रत्यवरोहेत्[२२१] ।

न च रामामुपेयात्[२२२] ।

न पक्षिणोऽश्नीयत्[२२३] ।

यावज्जीवं च मस्तिष्कस्य नाश्नीयात्[२२४] ।

न च वर्षति धावेत् । यदि धावेदुपावर्तेत[२२५] ।

न द्वितीयं चित्वान्यस्य स्त्रियमुपेयात्[२२६] ।

न तृतीयं चित्वा काञ्चन । भार्यां वोपेयात्[२२७] ।

॥ इति अग्निचयनप्रयोगः ॥



---

२२१. प्रत्युत्थानं न कुर्यात् गुरूणामपि । यदा त्वभिषेकः कृतः तदा यावज्जीवम् संवत्सरं च नाभिषेकेऽपि ।

२२२. रामा यस्य शूद्रा क्रमेणानीता सोऽपि तां संवत्सरं नोपगच्छति ।

२२३. पक्षिमांसस्यापि संवत्सरमभक्षणम् ।

२२४. मस्तिष्कं मस्तकमांसम् । तस्य च यावज्जीवं नाश्नीयात् ।

२२५. अग्निचिद्वर्षति देवे न धावेद्यावज्जीवम् । यदि तु कथंचिद्विस्मृत्य धावेद्यस्मात् स्थानात् धावनं कृतं तदेव स्थानमुपावर्तेत ।

२२६. द्वितीयमग्निं चित्वान्यस्य वर्णस्य स्त्रियं भार्यामपि क्रमेणाहृतां नोपगच्छेत्संवत्सरम् । न यावज्जीवम् । रामातुल्यत्वात् ।

२२७. तृतीयं तु चित्वाग्निं काञ्चिदपि समानवर्णामपि संवत्सरं नोपगच्छेत् । भार्यां नोपगच्छेत्सर्ववर्णानाम् । सवर्णा त्ववश्यं भर्तव्या । द्वयोरधिकारश्रुतेः । कामतस्तु प्रवृत्तानामसवर्णापि भार्या । न सा अवश्यं भर्तव्या" इति ।

# ॥ त्रैधातवीयेष्टिः ॥

आचम्य प्राणानायम्य सहस्रदक्षिणेन क्रतुना यक्ष्यमाणः त्रैधातवीयया यक्ष्ये । **विद्युदसि** । ततो अध्वर्युवरणादि । **इमामूर्जं पञ्चदशीम्, त्रैधातवीय९ँ हविरिदमेषां मयि** । आमावास्यं तन्त्रम् । अन्वाधाय व्रतप्रवेशः। सप्तदश सामिधेन्यः । वेदं कृत्वा वेदिः । पात्रप्रयोगकाले द्वादशकपालानि स्फ्यश्च द्वन्द्वम् । शूर्पद्वयं चाग्निहोत्रहवण्या द्वंद्वम् । अन्वाहार्यस्थालीवर्जमितराणि प्रकृतिवत् । पवित्रकरणादि । **वानस्पत्यासि, वेषाय वाम्** । **प्रत्युष्टम्** इत्यादि । निर्वपणकाले पात्र्यां यवान् व्रीहींश्च स्थापयित्वा । धूरसीत्यादि । **देवस्य त्वा-- हस्ताभ्यामिन्द्राविष्णुभ्यां जुष्टं निर्वपामि** व्रीहीन्निर्वपति । पवित्रे प्रक्षाल्य अन्यस्मिन् शूर्पे पवित्रे निधाय **देवस्य त्वा-- हस्ताभ्यामिन्द्राविष्णुभ्यां जुष्टं निर्वपामि** यवान्निर्वपति । पुनः पवित्रे प्रक्षाल्य पूर्वस्मिन् शूर्पे पवित्रे निधाय । **देवस्य त्वा--- हस्ताभ्यामिन्द्राविष्णुभ्यां जुष्टं निर्वपामि** । पुनर्व्रीहीन् निर्वपति । **इदं देवानाम्** इत्यदि । **अदित्यास्त्वोपस्थे सादयामीन्द्राविष्णू हव्य९ँ रक्षेथाम्** तन्त्रेणोपसादनम् । **देवस्य त्वा--- हस्ताभ्यामिन्द्राविष्णुभ्यां वो जुष्टं प्रोक्षामि** तन्त्रेण प्रोक्षणम् । अवहननकाले व्रीहीनवहत्य यवानवहन्ति नानाबीजधर्मेण । तथैव त्रिष्फलीकरणम् । **इन्द्राविष्णुभ्यां जुष्टमधिवपामि** । व्रीहीन् पिष्ट्वा यवान् पिनष्टि । कपालोपधानकाले अष्टावुपधाय तूष्णीं चत्वारि । **इन्द्राविष्णुभ्यां जुष्ट९ँ सँव्वपामि** । व्रीहिमययोः समुप्य । पवित्रे प्रक्षाल्य अन्यस्यां पात्र्यां यवान् संवपति । विभाग काले **यथाभागं व्यावर्तेथाम्** इति प्रथमं व्रीहिपिण्डं यवमयादपि कनीयांसं विभज्य । द्वितीयं व्रीहिपिण्डं यवमयादपि ज्यायांसं विभज्य । प्रथमं पुरोडाशमधिश्रित्य **देवस्त्वा सविता श्रपयतु** इत्यन्तं कृत्वा । शृतस्य पुरोडाशस्य उपरि यवमयं महान्तमधिश्रयति । पुनः **देवस्त्वा सविता श्रपयतु** इत्यन्तं कृत्वा । एतस्योपरि पुनर्व्रीहिमयं पुरोडाशं ज्यायांसमधिश्रयति । **घर्मोऽसि** इति त्रयाणां मन्त्रावृत्तिः । **सं ब्रह्मणा पृच्यध्वम्** । आप्यलेपं निनीय ।

ब्रह्मन्नुत्तरमित्यादि । उद्वासनकाले **सूर्यज्योतिषो विभात महत इन्द्रियाय** । तूष्णीमभिघारणम् । **स्योनं वस्सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि वः** । **स्योनं त** इति अविकारेणेति केचित् । **आर्द्राः प्रथस्नवो भुवनस्य गोपाश्शृता उथ्स्नान्ति जनितारो**

**मतीनाम् । तस्मिन्त्सीदतममृते प्रतितिष्ठतं व्रीहीणां मेधौ सुमनस्यमानौ । देवो वस्सविता मध्वानक्तु** इत्यलंकरणम् । **तृप्तयस्स्थ** इत्यनुमन्त्रणम् । **प्रियेण नाम्ना** इत्यासादनम् । **अयं यज्ञः, यो नः कनीयः --- अपतमिन्द्राविष्णू भुवनान्नुदेताम् । ममाग्ने** पञ्चहोता । आज्यभागाभ्यां प्रचर्य । जुह्वामुपस्तीर्य[1] । **मा भैष्ट मा संविग्ध्वं मा वो हिꣳसिषं मा वस्तेजोऽपक्रमीत् । भरतमुद्धरतेमनुषिञ्चतावदानानि वः प्रत्यवदास्यामि नमो वोऽस्तु मां मा हिꣳसिष्ट** सर्वेषामभिगमयन् मध्यादवदाय[2] । **यदवदानानि वोऽवद्यन् --- तद्व आप्यायतां पुनः ।** ***इन्द्राविष्णुभ्यामनुब्रूहि । इन्द्राविष्णू यज*** इति प्रचारः । इन्द्राविष्णुभ्यामिदम् । इन्द्राविष्णवोरहं देवयज्ययेन्द्रियाव्यन्नादः । नारिष्ठादि । दक्षिणाकाले हि[illegible] तार्प्यं धेनुं च अन्तर्वेदि स्थापयित्वा । **ब्रह्मण्यो ब्रह्मण्यस्स्थ ब्रह्मणे वो हुताद्य मा म[illegible] हिꣳसिष्टाऽहुता मह्यꣳशिवा भवत ।** ब्रध्न पिन्वस्व इत्यादि । **सहस्रधारा उत्सा अक्षीयम[illegible] ता दध्रुः पृथिवीमन्तरिक्षं दिवं च ताभिर्हिरण्यतार्प्यधेनुभिरतितराणि मृत्युम्।** दक्षिणसद्भ्य उपहर्तवै । इमाः हिरण्यतार्प्यधेनवः अहिंसन्तः यथाभागं प्रतिगृह्णीध्वम् । **अग्नये हिरण्यम् । ग्नास्त्वा कृन्तन्नतपसस्त्वा तन्वत वरूत्रयस्त्वा वयन्त्सोमाय वासः** । घृताक्तं वस्त्रं तार्प्यमित्युच्यते । **रुद्राय गाम्** । हविश्शेषोद्वासनादि । **यज्ञो बभूव, यज्ञ शं च म वर्जम्** । ब्राह्मणतर्पणान्तं सन्तिष्ठते त्रैधातवीया ॥

## ॥ इति त्रैधातवीयेष्टिः ॥

---

१. जुह्वामुपस्तीर्य । मा भैष्ट मा संविग्ध्वं मा वो हिꣳसिषं मा वस्तेजोऽपक्रमीत् । भरतमुद्धरते मनुषिञ्चतावदानानि वः प्रत्यवदास्यामि नमो वोऽस्तु मा मा हिꣳसिष्ट दक्षिणार्धादवदाय । यदवदानानि वोऽवद्यन् --- तद्व आप्यायतां पुनः । *इन्द्राविष्णुभ्यामनुब्रूहि । इन्द्राविष्णू यज* इति प्रचारः । पुनः जुह्वामुपस्तीर्य मा भैष्ट इत्यादि मध्यादवदाय यदवदानानि व इत्यादि पूर्ववत् प्रचारः । पुनः जुह्वामुपस्तीर्य मा भैष्ट इत्यादि उत्तरार्धादवदाय यदवदानानि व इत्यादि पूर्ववत् प्रचारः । त्रयाणामपि इन्द्राविष्णुभ्यामिदम् । इन्द्राविष्णवोरहं देवयज्ययेन्द्रियाव्यन्नाद इति अनुमन्त्रणं च । इति मातृकाग्रन्थपाठः । अत्र प्रयोगे समानदेवताया अपि त्रिःकृत्वः प्रचारः कुत उक्त इति न ज्ञायते । यदा समाना देवता भवन्ति, यदि च समानप्रयोजना भवन्ति, अन्यया देवतया अव्यवहिताश्च भवन्ति तदा सहावदायैव प्रचारः इति विधिः । तद्यथा – समानदेवतां समवदाय प्रचरति हविर्गणेषु पशुगणेषु च इति (भा.परि.सू.२१), समानां देवतां समानार्थाम् ॥ अव्यवहितां सकृन्निगमेषु ॥ इति (आ. श्रौ. सू. १-३-२०,२१) ।

२. याज्ञिकाः सुषिरेण वेणुकाण्डेनावद्यन्ति ।

# ॥ सर्वपृष्ठेष्टिः ॥*

यूपसम्मार्जनादि । अग्नीषोमीयस्य वपाहोमान्ते सुब्रह्मण्याह्वानं वसतीवरीग्रहणं च । अग्नीषोमीयस्यपशुपुरोडाशमग्नये गायत्रायेति दशहविषं सर्वपृष्ठामनुनिर्वपति । उत्तरेण गार्हपत्यमित्यादि । सप्तषष्टिकपालानि तिस्रस्स्थाल्यः शूर्पं च द्वन्द्वम् । इतराणि प्रकृतिवत् । पुरतः पात्रीमित्यादि । प्रशित्रहरणं मदन्तीं मेक्षणमुपवेषमुत्पवनार्थपात्रं प्रातर्दोहपात्राणि च । पवित्रे कृत्वा । *यजमान वाचं यच्छ* । सविशन्तामित्यादि । निर्वपणकाले **देवस्य त्वा --- हस्ताभ्यामग्नीषोमाभ्यां जुष्टं निर्वपामि** । इत्यग्नीषोमीयपशुपुरोडाशार्थं निरुप्य सर्वपृष्ठहवींषि अनुनिर्वपति । **देवस्य त्वा---हस्ताभ्यामग्नये गायत्राय त्रिवृते राथन्तराय वासन्ताय जुष्टं निर्वपामि ॥ देवस्य त्वा---हस्ताभ्यामिन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्यां विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्यां बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्याꣳ सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्यामदित्यै विष्णुपत्न्यै जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्यामग्नये वैश्वानराय जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्यामनुमत्यै जुष्टं निर्वपामि । देवस्य त्वा---हस्ताभ्यां काय जुष्टं निर्वपामि**[१] । इदं देवानामित्यादि । **अदित्यास्त्वोपस्थे सादयाम्यग्नीषोमौ हव्यꣳ रक्षेथामग्ने गायत्र त्रिवृद्राथन्तर वासन्त हव्यꣳ रक्षस्वेन्द्र त्रैष्टुभ पञ्चदश बार्हत ग्रैष्म हव्यꣳ रक्षस्व विश्वे देवा जागताः सप्तदशा वैरूपा वार्षिका हव्यꣳ रक्षध्वं बृहस्पते पाङ्क्त त्रिणव शाक्वर हैमन्तिक हव्यꣳ रक्षस्व सवितरातिच्छन्दस त्रयस्त्रिꣳश रैवत शैशिर हव्यꣳ रक्षस्वादिते विष्णुपत्नि हव्यꣳ रक्षस्वाग्ने वैश्वानर हव्यꣳ रक्षस्वानुमते हव्यꣳ रक्षस्व क हव्यꣳ रक्षस्व** । सशूकायामित्यादि । **देवस्य त्वा --- हस्ताभ्यामग्नीषोमाभ्यां वो जुष्टं प्रोक्षाम्यग्नये गायत्राय त्रिवृते राथन्तराय**

---

* अत्र भूमिका द्रष्टव्या ।

१. यद्याश्वलायनो यजमानः स्यादनुमत्या अष्टमं निरुप्य वैश्वानराय नवमं निर्वपेत् ।

**वासन्ताय वो जुष्टं प्रोक्षामीन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय वो जुष्टं प्रोक्षामि विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो वो जुष्टं प्रोक्षामि बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय वो जुष्टं प्रोक्षामि सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय वो जुष्टं प्रोक्षाम्यदित्यै विष्णुपत्न्यै वो जुष्टं प्रोक्षाम्यग्नये वैश्वानराय वो जुष्टं प्रोक्षाम्यनुमत्यै वो जुष्टं प्रोक्षामि काय वो जुष्टं प्रोक्षामि ।** शुन्दध्वमित्यादि सर्वाभिरद्भिस्त्रिः प्रोक्षति । कृष्णाजिनादानादि हविष्कृता वाचं विसृज्य पशुं विशास्ति । **अव रक्षो दिव** इत्यवहननादि कर्म प्रतिपद्यते । उत्करे त्रिर्निनीय । **यथाभागं व्यावर्तध्वम् । इदमग्नीषोमयोरग्नेर्गायत्रस्य त्रिवृतो राथन्तरस्य वासन्तस्येन्द्रस्य त्रैष्टुभस्य पञ्चदशस्य बार्हतस्य ग्रैष्मस्य विश्वेषां देवानां जागतानाꣳ सप्तदशानां वैरूपानां वार्षिकाणाꣳ सवितुरातिच्छन्दसस्य त्रयस्त्रिꣳशस्य रैवतस्य शैशिरस्याग्नेर्वैश्वानरस्य कस्य ।** पुरोडाशार्थान् । **इदं बृहस्पतेः पाङ्क्तस्य त्रिणवस्य शाक्वरस्य हैमन्तिकस्यादित्या विष्णुपत्न्या अनुमत्याः** चर्वर्थान् । कृष्णाजिनादानादि । **देवस्य त्वा --- हस्ताभ्यामग्नीषोमाभ्यां जुष्टमधिवपाम्यग्नये गायत्राय त्रिवृते राथन्तराय वासन्ताय जुष्टमधिवपामीन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय जुष्टमधिवपामि विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो जुष्टमधिवपामि सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय जुष्टमधिवपाम्यग्नये वैश्वानराय जुष्टमधिवपामि काय जुष्टमधि वपामि धान्यमसि धिनुहि देवान् ।**

एवमधिवापस्सँवापः । **देवस्य त्वा --- हस्ताभ्यामग्नीषोमाभ्यां जुष्टꣳ सँव्वपाम्यग्नये गायत्राय त्रिवृते राथन्तराय वासन्ताय जुष्टꣳ सँव्वपामीन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय जुष्टꣳ सँव्वपामि विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो जुष्टꣳ सँव्वपामि सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय जुष्टꣳ सँव्वपाम्यग्नये वैश्वानराय जुष्टꣳ सँव्वपामि काय जुष्टꣳ सँव्वपामि ।**

कपालामुपधानकाले अग्नीषोमीयस्यैकादश । अग्नेर्गायत्रस्याष्टौ । इन्द्रस्य त्रैष्टुभस्यैकादश अष्टाभ्य ऊर्ध्वं तूष्णीम् । विश्वेषां देवानां जागतानां द्वादश अष्टाभ्य ऊर्ध्वं तूष्णीम् । बार्हस्पत्यस्य

ध्रुवोऽसीति चरुस्थालीम् । सवितुरातिच्छन्दसस्य द्वादशकपालानि युग्मानामावृत्तिः । ध्रुवोऽसीत्यदित्या विष्णुपत्न्याश्चरुस्थालीम् । वैश्वानरस्य द्वादशकपालानि युग्मानामावृत्तिः । ध्रुवोऽसीति अनुमत्याश्चरुस्थालीम् । कस्यैककपालमुपदधाति ।

उपधाय कपालानि सायन्दोहवत्प्रातर्दोहं दोहयति एता आचरन्तीत्यादि संक्षालन निनयनान्तम् । **कामधुक्षः प्रणो ब्रूहि मित्रावरुणाभ्यामानुष्टुबाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्याꣳ हविरिन्द्रियम् । बहुदुग्धि मित्रावरुणाभ्यामानुष्टुबाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां देवेभ्यो हव्यमाप्यायतां पुनः--- कल्पताम्** । एवं त्रिः । अनन्वारभ्येत्यादि संक्षालननिनयनान्तम् । भृगूणामङ्गिरसामित्यादि । तप्यस्वेत्येककपालस्य । अधिवापवत्सँवापः । पिष्टान्युत्पूय तण्डुलानुत्पुनाति । अपश्चोत्पूय स्थाल्यामासिञ्चति । अन्या वा आपो यजुषोत्पूय समापो अद्भिरित्यादि । **यथाभागं व्यावर्तध्वं** आग्नेयं गायत्रं विभज्य । **यथाभागं व्यावर्तध्वं** ऐन्द्रं त्रैष्टुभं विभज्य । **यथाभागं व्यावर्तध्वं** वैश्वदेवं जागतं विभज्य । **यथाभागं व्यावर्तध्वं** इति बार्हस्पत्यतण्डुलान् विभज्य । **यथाभागं व्यावर्तध्वं** सावित्रमातिच्छन्दसं पुरोडाशं विभज्य । **यथाभागं व्यावर्तेथाम्** इति तण्डुलान् विभज्य । **इदमदित्या विष्णुपत्न्याः, इदमनुमत्याः** चर्वर्थान् । **यथाभागं व्यावर्तेथां** इतरौ । **इदमग्नेर्वैश्वानरस्य, इदं कस्य** पुरोडाशार्थान् । अन्त्ययोरेव निर्देशः ।

**इदमहꣳ सेनाया** इत्यादि । अधिश्रयणकाले चतुरः पुरोडाशानधिश्रित्य । तप्ते प्रातर्दोहे लौकिकं दध्यानयति । एककपालमधिश्रित्य । प्रथनादि पुरोडाशानाम् । अन्तरितं सर्वेषाम् । आप्यलेपं बर्हिषि निनीय । घृतागेहीत्यादि पशुवत् । उद्वासनकाले तूष्णीं अग्नीषोमीयस्य अभिघार्य । **आप्यायतां तेजसाग्नये --- वासन्ताय जुष्टमभिघारयामि** । तूष्णीमैन्द्रवैश्वदेवौ अभिघार्य यस्त आत्मेत्यामिक्षाम् । **आप्यायतां --- तेजसा बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय जुष्टमभिघारयामि । आप्यायतां---तेजसा सवित्र---शैशिराय जुष्टमभिघारयामि । आप्यायतां--- तेजसादित्यै विष्णुपत्न्यै जुष्टमभिघारयामि । आप्यायतां---तेजसा अग्नये वैश्वानराय जुष्टमभिघारयामि । आप्यायतां---तेजसा अनुमत्यै जुष्टमभिघारयामि । आप्यायतां---तेजसा काय जुष्टमभिघारयामि** । स्योनं

त इत्यादि । दृ॒ँहेत्यादि आमिक्षाम् । संहत्येत्यादि वाजिना एकदेशेन उपसिञ्चतीत्यन्तम् । आर्द्रो भुवनस्येत्यादि चरोरुद्वासनम् । अलंकरणकाले आमिक्षावर्जं सर्वेषामलङ्करणम् । आज्येनैककपालमभिपूरयति । प्रियेणेत्यासादनम् । यज्ञोऽसीति षट् । **इदमिन्द्रियम्, अयं यज्ञः । यो नः कनीयः---अपतमिन्द्रस्त्रैष्टुभः पञ्चदशो बार्हतो ग्रैष्मो भुवनान्नुदतां । ममाग्ने** पञ्चहोता पुनः पञ्चहोता ।

अग्नीषोमीयेन प्रचर्य । अनुनिरुप्तानां हवीषां उपांशुप्रचारः । ***अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तय, अनुब्रूहि । अग्निं गायत्रं त्रिवृतं राथन्तरं वासन्तम्, यज ।*** अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायेदम् । **अग्नेर्गायत्रस्य त्रिवृतो राथन्तरस्य वासन्तस्याहं देवयज्ययान्नादो भूयासम् ।** ***इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय, अनुब्रूहि । इन्द्रं त्रैष्टुभं पञ्चदशं बार्हतं ग्रैष्मम्, यज ।*** इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायेदम् । **इन्द्रस्य त्रैष्टुभस्य पञ्चदशस्य बार्हतस्य ग्रैष्मस्याहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम् ।** ***विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यः, अनुब्रूहि । विश्वान् देवान् जागतान् सप्तदशान् वैरूपान् वार्षिकान्, यज ।*** विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्य इदम् । **विश्वेषां देवानां जागतानां सप्तदशानां वैरूपानां वार्षिकाणामहं प्राणैस्सायुज्यं गमेयम् ।** ***मित्रावरुणाभ्या-मानुष्टुभाभ्यामेकविँशाभ्यां वैराजाभ्याम् शारदाभ्याम् , अनुब्रूहि । मित्रावरुणावानुष्टुभा-वेकविँशौ वैराजौ शारदौ, यज ।*** मित्रावरुणाभ्यामानुष्टुभाभ्यां एकविँशाभ्यां वैराजाभ्यां शारदाभ्यामिदम् । **मित्रावरुणयोरानुष्टुभयोरेकविँशयोर्वैराजयोश्शारदयोरहं देवयज्यया जेमानं महिमानं गमेयम् ।** ***बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय, अनुब्रूहि । बृहस्पतिं पाङ्क्तं त्रिणवं शाक्वरं हैमन्तिकम्, यज ।*** बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकायेदम् । **बृहस्पतेः पाङ्क्तस्य त्रिणवस्य शाक्वरस्य हैमन्तिकस्याहं देवयज्ययान्नादो भुयासम् ।** ***सवित्र आतिच्छन्दसाय त्रयस्त्रिँशाय रैवताय शैशिराय, अनुब्रूहि । सवितारमातिच्छन्दसं त्रयस्त्रिँशं रैवतं शैशिरम्, यज ।*** सवित्र आतिच्छन्दसाय त्रयस्त्रिँशाय रैवताय शैशिरायेदम् । **सवितुरातिच्छन्दसस्य त्रयस्त्रिँशस्य रैवतस्य**

**शैशिरस्याहं देवयज्ययान्नादो भूयासम्** । *अदित्यै विष्णुपत्न्यै, अनुब्रूहि । अदितिं विष्णुपत्निम्, यज* । अदित्यै विष्णुपत्न्या इदं । **अदित्या विष्णुपत्न्या अहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय** । *अग्नये वैश्वानरय, अनुब्रहि । अग्निं वैश्वानरम्, यज* । अग्नये वैश्वानरायेदम् । **अग्नेर्वैश्वानरस्याहं देवयज्ययान्नादो भूयासम्** । *अनुमत्यै, अनुब्रूहि । अनुमतिम्, यज* । अनुमत्या इदम् । **अनुमत्या अहं देवयज्ययान्नादो भूयासम्** । *काय, अनुब्रूहि । कम्, यज* । कायेदम् । **कस्याहं देवयज्ययान्नादो भूयासम्** । प्रत्याक्रम्य । न पार्वणनारिष्ठाः । स्विष्टकृदादि समानं पशुपुरोडाशवत् । आग्नेयविकाराणां विरुज्य प्राशित्रम् । इडामार्जनान्ते । स्रुवेण सकृत्पृषदाज्यस्योपहत्येत्यादि समानमा समाप्तेः ।

वसतीवरीपरिहरणादि अग्निष्टोमवत् । रात्रौ परिस्तरणान्ते व्रतम् । प्राजहिते दीक्षितस्य व्रतमित्यादि । अपरेणोत्तरवेदिं व्रतं प्रयच्छति । **अन्नपते । देवस्य त्वा । रात्रिमिष्टका । या ते अग्ने । शिवाःपीता** । रात्रौ यजमानं जागरयन्ति । इत्यग्नीषोमीयम् ।

## ॥ इति सर्वपृष्ठेष्टिः ॥



# ॥ द्वित्रिषाहस्रचितिमन्त्राः ॥

अयं पुरो भुवस्तया ॥ तस्य प्राणो भौवायनस्तया ॥ वसन्तः प्राणायनस्तया ॥ गायत्री वासन्ती तया ॥ गायत्रियै गायत्रं तया ॥ गायत्रादुपाꣳशुस्तया ॥ उपाꣳशोस्त्रिवृ-त्तया ॥ त्रिवृतो रथन्तरं तया ॥ रथन्तराद्वसिष्ठ ऋषिस्तया ॥ प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यस्तया ॥

अयं दक्षिणा विश्वकर्मा तया ॥ तस्य मनो वैश्वकर्मणं तया ॥ ग्रीष्मो मानसस्तया ॥ त्रिष्टुग्ग्रैष्मी तया ॥ त्रिष्टुभ ऐडं तया ॥ ऐडादन्तर्यामस्तया ॥ अन्तर्यामात्पञ्चदशस्तया ॥ पञ्चदशाद्बृहत्तया ॥ बृहतो भरद्वाज ऋषिस्तया ॥ प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यस्तया ॥

अयं पश्चाद्विश्वव्यचास्तया ॥ तस्य चक्षुर्वैश्वव्यचसं तया ॥ वर्षाणि चाक्षुषाणि तया ॥ जगती वार्षी तया ॥ जगत्या ऋक्षमं तया ॥ ऋक्षमाच्छुक्रस्तया ॥ शुक्रात्सप्तदश-स्तया ॥ सप्तदशाद्वैरूपं तया ॥ वैरूपाद्विश्वामित्र ऋषिस्तया ॥ प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यस्तया ॥

इदमुत्तरात्सुवस्तया ॥ तस्य श्रोत्रꣳ सौवं तया ॥ शरच्छ्रौत्री तया ॥ अनुष्टुप्छारदी तया ॥ अनुष्टुभस्स्वारं तया ॥ स्वारान्मन्थी तया ॥ मन्थिन एकविꣳशस्तया ॥ एकविꣳशाद्वैराजं तया ॥ वैराजाज्जमदग्निर्ऋषिस्तया ॥ प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यस्तया ॥

इयमुपरि मतिस्तया ॥ तस्यै वाङ्माती तया ॥ हेमन्तो वाच्यायनस्तया ॥ पङ्क्तिर्हैमन्ती तया ॥ पङ्क्त्यै निधनवत्तया ॥ निधनवत आग्रयणस्तया ॥ आग्रयणात्त्रिणवत्रयस्त्रिꣳशौ तया ॥ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते तया ॥ शाक्वररैवताभ्यां विश्वकर्मर्षिस्तया ॥ प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यस्तया ॥ इति पञ्चाशतं प्राणभृतः । दशदश प्रतिदिशमक्ष्णया दश । मध्येऽन्तरामुपधाय बाह्यां बाह्याम् ॥

प्राची दिशां तया ॥ वसन्त ऋतूनां तया ॥ अग्निर्देवता तया ॥ ब्रह्म द्रविणं तया ॥

त्रिवृत्स्तोमस्तया ॥ स उ पञ्चदशवर्तनिस्तया ॥ त्र्यविर्वयस्तया ॥ कृतमयानां तया ॥ पुरोवातो वातस्तया ॥ सानग ऋषिस्तया ॥

दक्षिणा दिशां तया ॥ ग्रीष्म ऋतूनां तया ॥ इन्द्रो देवता तया ॥ क्षत्रं द्रविणं तया ॥ पञ्चदशस्तोमस्तया ॥ स उ सप्तदशवर्तनिस्तया ॥ दित्यवाड्वयस्तया ॥ त्रेताऽयानां तया ॥ दक्षिणाद्वातो वातस्तया ॥ सनातन ऋषिस्तया ॥

प्रतीची दिशां तया ॥ वर्षा ऋतूनां तया ॥ विश्वे देवा देवतास्तया ॥ विड्द्रविणं तया ॥ सप्तदशस्तोमस्तया ॥ स उ वेकवि৺शवर्तनिस्तया ॥ त्रिवत्सो वयस्तया ॥ द्वापरोऽयानां तया ॥ पश्चाद्वातो वातस्तया ॥ अहभून ऋषिस्तया ॥

उदीची दिशां तया ॥ शरदृतूनां तया ॥ मित्रावरुणौ देवता तया ॥ पुष्टं द्रविणं तया ॥ एकवि৺शस्तोमस्तया ॥ स उ त्रिणववर्तनिस्तया ॥ तुर्यवाड्वयस्तया ॥ आस्कन्दोऽयानां तया ॥ उत्तराद्वातो वातस्तया ॥ प्रत्न ऋषिस्तया ॥

ऊर्ध्वा दिशां तया ॥ हेमन्तशिशिरावृतूनां तया ॥ बृहस्पतिर्देवता तया ॥ वर्चो द्रविणं तया ॥ त्रिणवस्तोमस्तया ॥ स उ त्रयस्त्रि৺शवर्तनिस्तया ॥ पष्ठवाद्वयस्तया ॥ अभिभूरयानां तया ॥ विष्वग्वातो वातस्तया ॥ सुपर्ण ऋषिस्तया ॥ पञ्चाशतमपानभृतो यथा प्राणाभृतः । बाह्यामुपाधायान्तरामन्तराम् ।

*या देव्यसीष्टक आयुर्दा उपशीवरी । सामामुपशेष्व जायेव पतिमित्सदा तया ॥ या देव्यसीष्टके प्राणदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टकेऽपानदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके व्यानदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके चक्षुर्दा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके श्रोत्रदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके वाग्दा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके आत्मदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके पृथिविदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके अन्तरिक्षदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके द्यौर्दा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके स्वर्दा उपशीवरी ---*

*पतिमित्सदा तया ॥ या देव्यसीष्टके कुमारीदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके प्रफर्व्यदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके प्रथमौपशदा उपशीवरी --- पतिमित्सदा तया ॥ या देव्यसीष्टके युवतीदा उपशीवरी --- पतिमित्सदा तया* षोडशोपशीवरीः ॥

*अभिषाच्च तया ॥ अभिषवी च तया ॥ अभिवयाश्च तया ॥ ऊर्ध्ववयाश्च तया ॥ बृहद्वयाश्च तया ॥ सवयाश्च तया ॥ सह्वाऽ्श्च तया ॥ सहमानश्च तया ॥ सहस्वाऽ्श्च तया ॥ सहीयाऽ्श्च तया* दशेन्द्रनामानि ॥

अग्निना विश्वाषाट् तया ॥ सूर्येण स्वराट् तया ॥ क्रत्वा शचीपतिस्तया ॥ ऋषभेण त्वष्टा तया ॥ यज्ञेन मघवान्तया ॥ दक्षिणया सुवर्गस्तया ॥ मन्युना वृत्रहा तया ॥ सौहार्द्येन तनूधास्तया ॥ अन्नेन गयस्तया ॥ पृथिव्याऽसनोत्तया ॥ ऋग्भिरन्नादस्तया ॥ वषट्कारेणर्धस्तया ॥ साम्ना तनूपास्तया ॥ विराजा ज्योतिष्मान्तया ॥ ब्रह्मणा सोमपास्तया ॥ गोभिर्यज्ञं दाधार तया ॥ क्षत्रेण मनुष्यान्तया ॥ अश्वेन च रथेन च वज्री तया ॥ ऋतुभिः प्रभुस्तया ॥ संवथ्सरेण परिभूस्तया ॥ तपसाऽनाधृष्टस्तया ॥ सूर्यः सन्तनूभिस्तया द्वाविंशतिमिन्द्रतनवः ॥

प्रजापतिर्मनसाऽन्धोऽच्छेतस्तया ॥ धाता दीक्षायान्तया ॥ सविता भृत्यान्तया ॥ पूषा सोमक्रयण्यान्तया ॥ वरुण उपनद्धस्तया ॥ असुरः क्रीयमाणस्तया ॥ मित्रः क्रीतस्तया ॥ शिपिविष्ट आसादितस्तया ॥ नरन्धिषः प्रोह्यमाणस्तया ॥ अधिपतिरागत-स्तया ॥ प्रजापतिः प्रणीयमानस्तया ॥ अग्निराग्नीध्रे तया ॥ बृहस्पतिराग्नीध्रात् प्रणीयमानस्तया ॥ इन्द्रो हविर्धाने तया ॥ अदितिरासादितस्तया ॥ विष्णुरुपावह्रियमाण-स्तया ॥ अथर्वोपोत्तस्तया ॥ यमोऽभिषुतस्तया ॥ अपूतपा आधूयमानस्तया ॥ वायुः पूयमानस्तया ॥ मित्रः, क्षीरश्रीस्तया ॥ मन्थी सुक्रश्रीस्तया ॥ वैश्वदेव उन्नीतस्तया ॥ रुद्र आहुतस्तया ॥ वायुरावृत्तस्तया ॥ नृचक्षाः प्रतिख्यातस्तया ॥ भक्ष आगतस्तया ॥ पितृणां नाराशऽ्सस्तया ॥ असुरात्तस्तया ॥ सिन्धुरवभृथमवप्रयन्तया ॥ समुद्रोऽवगत-स्तया ॥ सलिलः प्रप्लुतस्तया ॥ सुवरुदृचं गतस्तया त्रयस्त्रिंशत् यज्ञतनवः ॥

**ज्योतिष्मतीं त्वा सादयामि तया ॥ ज्योतिष्कृतं त्वा सादयामि तया ॥ ज्योतिर्विदं त्वा सादयामि तया ॥ भास्वतीं त्वा सादयामि तया ॥ ज्वलन्तीं त्वा सादयामि तया ॥ मल्मला भवन्तीं त्वा सादयामि तया ॥ दीप्यमानां त्वा सादयामि तया ॥ रोचमानां त्वा सादयामि तया ॥ अजस्रां त्वा सादयामि तया ॥ बृहज्ज्योतिषं त्वा सादयामि तया ॥ बोधयन्तीं त्वा सादयामि तया ॥ जाग्रतीं त्वा सादयामि तया** द्वादश ज्योतिष्मतीः ॥

ता **पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्तां तया** पौर्णमासीं पुरस्तादुपधाय ॥

**कृतिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा तया ॥ रोहिणी नक्षत्रं प्रजापतिर्देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ मृगशीर्षं नक्षत्र॒ꣳ सोमो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ आर्द्रा नक्षत्र॒ꣳ रुद्रो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ पुनर्वसू नक्षत्रमदितिर्देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ तिष्यो नक्षत्रं बृहस्पतिर्देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ आश्रेषा नक्षत्र॒ꣳ सर्पा देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ मघा नक्षत्रं पितरो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ फल्गुनी नक्षत्रमर्यमा देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ फल्गुनी नक्षत्रं भगो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ हस्तो नक्षत्र॒ꣳ सविता देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ चित्रा नक्षत्रमिन्द्रो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ स्वाती नक्षत्रं वायुर्देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ विशाखे नक्षत्रमिन्द्राग्नी देवतर्चे त्वा --- ज्योतिषे त्वा तया** पुरस्तात्प्रतीचीमसंस्पृष्टाः । पूर्वामुपधाया परामपरामाविशाखाभ्यां दक्षिणेन स्वयमातृण्णां रीतिं प्रतिपादयति ।

**यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरं तया** अमावास्यां पश्चादुपधायावशिष्टानां पूर्वां पूर्वामापभरणीभ्यः ।

अनूराधा नक्षत्रं मित्रो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ रोहिणी नक्षत्रमिन्द्रो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ विचृतौ नक्षत्रं पितरो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ अषाढा नक्षत्रमापो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ अषाढा नक्षत्रं विश्वे देवा देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ श्रोणा नक्षत्रं विष्णुर्देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ श्रविष्ठा नक्षत्रं वसवो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ शतभिषङ्नक्षत्रमिन्द्रो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ प्रोष्ठपदा नक्षत्रमज एकपादेवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ रेवती नक्षत्रं पूषा देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ अश्वयुजौ नक्षत्रमश्विनौ देवतर्चे त्वा --- ज्योतिषे त्वा तया ॥ अपभरणीर्नक्षत्रं यमो देवतर्चे त्वा --- ज्योतिषे त्वा तया

उत्तरेण स्वयमातृण्णां रीतिं प्रतिपादयति ।

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्तां तया पौर्णमासीमन्ततः । ऋचे त्वा रुचे त्वेति सर्वासु नक्षत्रेष्टकास्वनुषजति ।

हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम तया ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम तया ॥ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम तया ॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम तया ॥ यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम तया ॥ येन द्यौरुग्रा पृथिवी च दृढे येन सुवस्तभितं येन नाकः । यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम तया ॥ आपो ह यन्महतीर्विश्वमायन्दक्षं दधाना जनयन्तीरग्निम् । ततो देवानां निरवर्ततासुरेकः कस्मै

देवाय हविषा विधेम तया ॥ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्ती-रग्निम् । यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम तया इत्यष्टौ सरितः ॥

अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि तया ॥ अग्निं दूतं वृणीमहे होतारं विश्वदेदसम् । अस्य यज्ञस्य सुक्रतुं तया ॥ अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यस्तया ॥ अग्निर्वृत्राणि जङ्घनदद्द्रविणस्युर्विपन्यया । समिद्धश्शुक्र आहुतस्तया ॥ *अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशम् । देवस्य द्रविणस्यवस्तया* इति पञ्चाह्नां रूपाणि ॥

अथ व्रतमुपदधाति देवस्य त्वा सवितुः प्रसवे --- गायत्रेण छन्दसा रात्रिमिष्टकामुपदधे तया ॥ देवस्य त्वा सवितुः प्रसवे --- त्रैष्टुभेन छन्दसाहरिष्टकामुपदधे तया इति ॥

प्राच्या त्वा दिशा सादयामि गायत्रेण छन्दसाऽग्निना देवतयाऽग्नेश्शीर्ष्णाऽग्नेश्शिर उप दधामि तया ॥ दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन छन्दसेन्द्रेण देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुप दधामि तया ॥ प्रतीच्या त्वा दिशा सादयामि जागतेन छन्दसा सवित्रा देव तयाऽग्नेः पुच्छेनाग्नेः पुच्छमुप दधामि तया ॥ उदीच्या त्वा दिशा सादयाम्यानुष्टुभेन छन्दसा मित्रावरुणाभ्यां देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुप दधामि तया ॥ ऊर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसा बृहस्पतिना देवतयाऽग्नेः पृष्ठेनाग्नेः पृष्ठमुप दधामि तया इति पञ्चात्मेष्टकाः प्रतिदिशमेकां मध्ये ॥

सँय्यच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्य ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ उग्रा च भीमा च पितृणां यमस्येन्द्रस्य ते तेऽधिपतयस्तेभ्यो --- जम्भे दधामि ॥ ध्रुवा च पृथिवी च देवस्य सवितुर्मरुतां वरुणस्य ते तेऽधिपतयस्तेभ्यो --- जम्भे दधामि ॥ धर्त्री च धरित्री च मित्रावरुणयोर्मित्रस्य धातुस्ते तेऽधिपतयस्तेभ्यो --- जम्भे दधामि ॥ प्राची च प्रतीची च वसूना९ रुद्राणामादित्यानां ते तेऽधिपतयस्तेभ्यो --- जम्भे

पाप्मानं तया

प्राणानं तया

**दधामि** इति पञ्च वैश्वदेवीः द्वेष्यं मनसा ध्यायन् ॥

**कया नश्चित्र आभुवदूती सदावृधस्सखा । कया शचिष्ठया वृता तया ॥ कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु तया ॥ अभी षु णस्सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिस्तया** इति वामदेव्यम् ॥

**इन्द्रो दधीचो अस्थभिः । वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव तया ॥ इच्छन्नश्वस्य यच्छिरः । पर्वतेष्वपश्रितम् । तद्विदच्छर्यणावति तया ॥ अत्रा ह गोरमन्वत । नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे तया ॥ इन्द्रमिद्गाथिनोबृहत् । इन्द्रमर्केभि-रर्किणः । इन्द्रं वाणीरनूषत तया ॥ इन्द्र इद्धर्योः सचा । संमिश्ल आवचो युजा । इन्द्रो वज्री हिरण्ययः तया ॥ इन्द्रो दीर्घाय चक्षसे । आसूर्यꣳ रोहयद्दिवि । विगोभिरद्रिमैरयत् तया ॥ इन्द्र वाजेषु नो अव । सहस्र प्रधनेषु च । उग्र उग्राभिरूतिभिः तया ॥ तमिन्द्रं वाजयामसि । महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् तया ॥ इन्द्रः स दामने कृतः । ओजिष्ठः स बले हितः । द्युम्नी श्लोकी स सौम्यस्तया ॥ गिरा वज्रो न संभृतः । सबलो अनपच्युतः । ववक्षुरुग्रो अस्तृतस्तया** इत्यथर्वशिरो दशातिषक्ताः ॥

**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतस्सुवर्दृशमीशानमिन्द्र तस्थुषस्तया ॥ ईशानमिन्द्र तस्थुषो न त्वावाँ अन्यो दिव्यो न पार्थिवः । न जातो न जनिष्यते तया ॥ न जातो न जनिष्यतेऽश्वायन्तो मघवन्निन्द्रवाजिनः । गव्यन्तस्त्वा हवामहे तया** इति रथन्तरं दक्षिणे पक्षेऽध्यात्मन्नपवर्गः प्रथमामुपधाय द्वितीयामथ विशयाम् ॥

**त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतस्तया ॥ त्वां काष्ठास्वर्वतः स त्वं नश्चित्र वज्रहस्त धृष्णुया । महस्तवानो अद्रिवस्तया ॥ महस्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र सं किर । सत्रा वाजं न जिग्युषे तया** इति बृहदुत्तरे पक्षे तस्य रथन्तरवत्कल्पः ॥

**यज्ञा यज्ञा वो अग्नये गिरागिरा च दक्षसे । प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषन्तया ॥ प्रियं मित्रं न शंसिषमूर्जो नपातं स हिनायमस्मयुः । दाशेम**

**हव्यदातये तया ॥ दाशेम हव्यदातये भुवद्वाजेष्वविता भुवद्वृधः । उत त्राता तनूनां तया** इति यज्ञायज्ञियं पुच्छे । तस्य रथन्तरवत्कल्पः ॥

**विश्वकर्मा दिशां --- पातु तस्मै नमस्तया । प्रजापतिर्दिशां --- पातु तस्मै नमस्तया । रुद्रो दिशां --- पातु तस्मै नमस्तया । वरुणो दिशां --- पातु तस्मै नमस्तया** पञ्च हिरण्येष्टकाः प्रतिदिशमेकां मध्ये ॥

**प्राणाय त्वा चक्षुषे त्वा तया । व्यानाय त्वा चक्षुषे त्वा तया । अपानाय त्वा चक्षुषे त्वा तया । वाचे त्वा चक्षुषे त्वा तया** चतस्रः स्वयमातृण्णाः प्रतिदिशम् ॥

**त्वामग्ने वृषभं --- शिशाधि तया** ऋषभेष्टकामुपदधाय ।

**संवथ्सरस्य प्रतिमां --- विश्वमायुर्व्यश्नवत्तया ॥**

**शतायुधाय शतवीर्याय --- दुरितानि विश्वा तया ॥ ये चत्वारः पथयो --- परि दत्तेह सर्वे तया । ग्रीष्मो हेमन्त --- एषामभये स्याम तया ॥ इदुवथ्सराय परिवथ्सराय --- अहतास्स्याम तया ॥ भद्रान्नश्श्रेयस्समनैष्ट --- तनुवे स्योनस्तया ।**

**पृथिव्यै त्वा तया ॥ अन्तरिक्षाय त्वा तया ॥ दिवे त्वा तया** इति तिस्रो लोकेष्टकाः ॥

**अग्नये त्वा पवमानाय तया ॥ अग्नये त्वा पावकाय तया ॥ अग्नये त्वा शुचये तया** इति तिस्रः पावमानीः ॥

***ऋचा त्वा छन्दसा सादयामि तया ॥ वषट्कारेण त्वा छन्दसा सादयामि तया ॥ हिङ्कारेण त्वा छन्दसा सादयामि तया ॥ प्रस्तावेन त्वा छन्दसा सादयामि तया ॥ प्रतिहारेण त्वा छन्दसा सादयामि तया ॥ उद्गीथेन त्वा छन्दसा सादयामि तया ॥ निधनेन त्वा छन्दसा सादयामि तया*** इति सप्त छन्दस्याः ॥

**इन्द्रस्य वज्रोऽसि --- सोऽश्मानमृच्छतु तया ॥ इन्द्रस्य वज्रोऽसि --- सोऽश्मानमृच्छतु तया ॥ इन्द्रस्य वज्रोऽसि --- सोऽश्मानमृच्छतु तया ॥ इन्द्रस्य वज्रोऽसि --- सोऽश्मानमृच्छतु तया** चतस्रो वज्रिणीः प्रतिदिशमश्मनः इषुहस्त उपदधाति ।

**इन्द्रस्य वज्रोऽसि --- सोऽश्मानमृच्छतु तया** मध्ये पञ्चमीमेके समामनन्ति ।

**अग्ने यशस्विन् --- अस्तु तया ॥ भद्रं पश्यन्तः --- नमन्तु तया ॥ धाता विधाता --- नमाम तया ॥ अभ्यावर्तध्वं --- सर्वे तया ॥**

**प्रोथदश्वो न --- कृष्णमस्ति तया ॥***

**आयोस्त्वा सदने सादयामि --- चक्षसे** स्वयमातृण्णामभिमृश्याश्वेनावघ्राप्य **परमेष्ठी त्वा सादयतु दिवः पृष्ठे --- छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद । सुवः** अविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति । सुवरिति चैतया व्याहृत्या ।

## ॥ इति द्वित्रिषाहस्रचितिमन्त्राः ॥



---

* अत्र सूत्रपाठानुसारेण या देव्यसीष्टके इत्यारभ्य द्वित्रिषाहस्रचितौ विनियोक्तव्या मन्त्राः प्रदर्शिताः । इत एवाकृष्य त्वामग्न इत्यारभ्य प्रतीकेणात्रोदाहृता मन्त्राः साहस्रचितावपि विनियुक्ताः । प्राणापानभृतस्तु साहस्रे विकल्पेन विनियुक्ताः ॥

# ॥ कुन्तापशस्त्रप्रतिगरः + ॥

ब्राह्मणच्छंसी - विहिसोतोरसृक्षत, नेन्द्रं देवममंसत ।

प्रतिप्रस्थाता- ओथामोदैव ।

ब्राह्मणच्छंसी- यत्रो३ओओओओओओ३ओओओओओओ३ओओओ मदद्वृषा कपो३ ओओओ३मर्यः पुष्टेषु मत्सखा* । विश्वस्मादिन्द्र उत्तरो३म्पराहीन्द्र धावसि, वृषाकपेरति व्यथिः ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव* । ऋगन्ते प्रणवे ओ३थामोदैव । अर्धर्चे विरामे ओथामोदैव । वृषाकपिसूक्ते एवं प्रतिगरः ।

ब्रा-नोओ३ओओओओओओ३ओओओओओओ३ओओओ ह प्र विन्दसो३ ओओओ३मन्यत्र सोमपीतये ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरों३ प्र-ओ३थामोदैव ।

ब्रा-किमयं त्वां वृषाकपिः,चकार हरितो मृगः । प्र-ओथामोदैव ।

ब्रा-यस्मो३ओओओओओओ३ओओओओओओ३ओओओ इरस्यसीदुनो३-ओओओ३मर्यो वा पुष्टिमद्वसु ।

---

+ अन्यान् प्रतिगरानपेक्ष्य एषां प्रतिगराणां क्लिष्टतरत्वाद्दीर्घतरत्वात् आधिक्याद्वैविध्याच्च ऋत्विक्सौकर्यार्थं सशस्त्रः पाठः अत्र दत्तः । एवं कैश्चित् प्रार्थितत्वात् विद्वद्भिश्च संसूचितत्वात् ।

* एष प्रथम पक्षः । द्वितीय पक्षे तु ब्राह्मणच्छंसी - यत्रो३ओओओओओओ३ओओओ ओओओ३ओओओ मदद्वृषा कपो३ ओओओ३मर्यः पुष्टेषु मत्सखा । विश्वस्मादिन्द्र उत्तरो३- म्पराहीन्द्र धावसि, वृषाकपेरति व्यथिः ।

* प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव । ऋगन्ते प्रणवे ओ३थामोदैव । अर्धर्चे विरामे ओथामोदैव ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म् प्र-ओ३थामोदैव ।

ब्रा-यमिमं त्वं वृषाकपिं, प्रियमिन्द्राभिरक्षसि । प्र-ओथामोदैव ।

ब्रा-श्वा न्वो३ओओओओओओ३ओओओओओओ३ओओओ स्य जम्भिषो३ ओओओ३मपि कर्णे वराहयुः ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिद्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-प्रिया तष्टानि मे कपिः,व्यक्ताव्यदूदुषत् ।

प्र-ओथामोदैव

ब्रा- शिरो३ओओओओओओ३ओओओओओओ३ओओओ न्वस्य राविषो३ ओओओ३म् न सुगं दुष्कृते भुवम् ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-न मत् स्त्री सुभसत्तरा, न सुयाशुतरा भुवत् ।

प्र-ओथामोदैव

ब्रा-न मो३ओओओओओओ३ओओओओओओ३ओओओ त्प्रतिच्यवीयसो३ ओओओ३म् न सक्थ्युद्यमीयसी ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-

ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-उवे अम्ब सुलाभिके, यथेवाङ्ग भविष्यति ।

प्र-ओथामोदैव

ब्रा-भसो३ओओओओओओ३ओओओओओओ३ओओओ न्मे अम्ब सक्थिमो३ ओओओ३म् शिरो मे वीव हृष्यति ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-किं सुबाहो स्वङ्गुरे, पृथुष्टो पृथुजाघने ।

प्र-ओथामोदैव

ब्रा-किं शो३ओओओओओओ३ओओओओओओ३ओओओ रपत्नि नस्त्वो३ ओओओ३मभ्यमीषि वृषाकपिम् ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-अवीरामिव मामयं, शरारुरभि मन्यते ।

प्र-ओथामोदैव

ब्रा-उतो३ओओओओओओ३ओओओओओओ३ओओओ हमस्मि वीरिणो३ ओओओ३मिन्द्रपत्नी मरुत्सखा ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३–ओओओ३मोथामोदैव ।

ब्रा–विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–संहोत्र स्म पुरा नारी, समनं वाव गच्छति ।

प्र–ओथामोदैव

ब्रा–वेधो३ओओओओओओ३ओओओओओओ३ओओओ ऋतस्य वीरिणो३ ओओओ३मिन्द्रपत्नी महीयते ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३–ओओओ३मोथामोदैव ।

ब्रा–विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–इन्द्राणीमासु नारिषु, सुभगामहमश्रवम् ।

प्र–ओथामोदैव

ब्रा–न ह्यो३ओओओओओओ३ओओओओओओ३ओओओ स्या अपरं च नो३ ओओओ३म् जरसा मरते पतिः ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३–ओओओ३मोथामोदैव ।

ब्रा–विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–नाहमिन्द्राणि रारण, सख्युर्वृषाकपेर्ऋते ।

प्र–ओथामोदैव

ब्रा–यस्यो३ओओओओओओ३ओओओओओओ३ओओओ दमप्यं हवो३

ओओओ३म् प्रियं देवेषु गच्छति ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव ।

ब्रा-वृषाकपायि रेवति, सुपुत्र आदु सुस्नुषे ।

प्र-ओथामोदैव ।

ब्रा- घसो३ओओओओओओ३ओओओओओओ३ओओओ त्त इन्द्र उक्षणो३ ओओओ३म् प्रियं काचित्करं हविः ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव ।

ब्रा-उक्ष्णो हि मे पञ्चदश, साकं पचन्ति विंशतिम् ।

प्र-ओथामोदैव

ब्रा-उतो३ओओओओओओ३ओओओओओओ३ओओओ हमद्मि पीव ओ३ ओओओ३मिदुभा कुक्षी पृणन्ति मे ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा-विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-वृषभो न तिग्मशृङ्गः, अन्तर्यूथेषु रोरुवत् ।

प्र-ओथामोदैव

ब्रा–मन्थो३ओओओओओओ३ओओओओओओ३ओओओ स्त इन्द्र शं हृदो३ ओओओ३म् यं ते सुनोति भावयुः ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा–विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–न सेशे यस्य रम्बते, अन्तरा सक्थ्या कपृत् ।

प्र–ओथामोदैव

ब्रा–सेदो३ओओओओओओ३ओओओओओओ३ओओओ शे यस्य रोमशो३ ओओओ३म् निषेदुषो विजृम्भते ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा–विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–न सेशे यस्य रोमशं, निषेदुषो विजृम्भते ।

प्र–ओथामोदैव

ब्रा–सेदो३ओओओओओओ३ओओओओओओ३ओओओ शे यस्य रम्बतो३ ओओओ३मन्तरा सक्थ्या कृपत् ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा– विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–अयमिन्द्र वृषाकपिः, परस्वन्तं हतं विदत् ।

प्र–ओथामोदैव

ब्रा–असो३ओओओओओओ३ओओओओओओ३ओओओ सूनां नवं चरो३ओओओ३मादेधस्यान आचितम् ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३–ओओओ३मोथामोदैव ।

ब्रा– विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–अयमेमि विचाकशद्, विचिन्वन् दासमार्यम् ।

प्र–ओथामोदैव

ब्रा–पिबो३ओओओओओओ३ओओओओओओ३ओओओ मिपाक सुत्वनो३ओओओ३मभि धीरमचाकशम् ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३–ओओओ३मोथामोदैव ।

ब्रा– विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा–धन्व च यत् कृन्तत्रं च, कति स्वित्ता वि योजना ।

प्र–ओथामोदैव

ब्रा–नेदो३ओओओओओओ३ओओओओओओ३ओओओ यसो वृषाकपो३ओओओ३मस्तमेहि गृहाँ उप ।

प्रस्थाता–ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३–ओओओ३मोथामोदैव ।

ब्रा– विश्वस्मादिन्द्र उत्तरो३म्

प्र– ओ३थामोदैव

ब्रा- पुनरेहि वृषाकपे सुविता कल्पयावहै ।

प्र- ओथामोदैव

ब्रा-य ओ३ओओओओओओ३ओओओओओओ३ओओओ ष स्वप्ननंशनो३ ओओओ३मस्तमेषि पथा पुनः ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा- विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-यदुदञ्चो वृषाकपे, गृहमिन्द्राजगन्तन ।

प्र-ओथामोदैव

ब्रा-क्व स्यो३ओओओओओओ३ओओओओओओ३ओओओ पुल्वघो मृगो३ओओओ३म् कमगञ्जनयोपनः ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा- विश्वस्मादिन्द्र उत्तरो३म्

प्र-ओ३थामोदैव

ब्रा-पर्शुर्ह नाम मानवी, साकं ससूव विंशतिम् ।

प्र-ओथामोदैव

ब्रा-भद्रो३ओओओओओओ३ओओओओओओ३ओओओ भल त्यस्या अभो३ ओओओ३म् यस्या उदरमामयत् ।

प्रस्थाता-ओ३ओओओओओओ३ओओओओओओ३ओओओ मदेथमदैवो३-ओओओ३मोथामोदैव ।

ब्रा- विश्वस्मादिन्द्र उत्तरो३म्

प्र–ओ३थामोदैव

ब्रा– इदं जना उपश्रुत, नराशंसस्तविष्यते ।

प्र– ओथामोदैव ।

ब्रा– षष्टिं सहस्रानवतिं च कौरम आरुशनेषु दद्महो३मुष्ट्रा

प्र– ओथामोदैवोम्

न्यूङ्खान्ते इदं जना उपश्रुतेत्यादि यस्सभेय इत्यन्तं प्रणवान्तः प्रतिगरः **ओथामोदैवोम्** इति । यस्सभेयो विदथ्येत्यादि विततौ किरणौ पर्यन्तं प्राकृतः प्रतिगरः ।

ब्राम्हणाच्छंसि– विततौ किरणौ द्वौ तावपिनष्टि पूरुषः ।

प्रतिप्रस्थाता–दुन्दुभिमाहननाभ्यां जरितरोथामोदैव

ब्रा–न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्

प्र–ओ३थामोदैव ।

ब्राम्हणाच्छंसि–मातुष्टे किरणौ द्वौ नीवीतः पुरुषादृते ।

प्रतिप्रस्थाता–कोशबिले जरितरोथामोदैव ।

ब्रा–न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्

प्र–ओ३थामोदैव ।

ब्राम्हणाच्छंसि–निगृह्य कर्तकौ द्वौ निरायच्छसिमध्य माम् ।

प्रतिप्रस्थाता–रजनि ग्रन्थैर्धानां जरितरोथामोदैव

ब्रा–न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्

प्र–ओ३थामोदैव ।

ब्राम्हणाच्छंसि–उत्तानायै शयानायै तिष्ठं नेवावगूहसि ।

प्रतिप्रस्थाता–उपानहि पादं जरितरोथामोदैव ।

ब्रा– न वै कुमारितत्तथा यथा कुमारि मन्यसो३म्

प्र–ओ३थामोदैव ।

ब्रा–श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवावगूहसि ।

प्र–उत्तरां जनीमां जन्यां जरितरोथामोदैव ।

ब्रा–न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्

प्र–ओ३थामोदैव ।

ब्रा– अवश्लक्ष्णमवभ्रशदन्तर्लोमवति ह्रदे ।

प– उत्तरां जनीं वर्त्मन्यां जरितरोथामोदैव

ब्रा– न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्

प्र– ओ३थामोदैव

ब्रा– इहेत्थ प्रागपागुदगधराक् ।

प्र– ओथामोदैव

ब्रा– अराला उदभन्थतो३म् ।

प्र– अलाबूनि जरितरोथामोदैवो३म् ।

ब्रा– इहेत्थ प्रागपागुदगधराक् ।

प्र– ओथामोदैव

ब्रा– वत्साः पुषन्त आसतो३म् ।

प्र– पृषातकानि जरितरोथामोदैवो३म् ।

ब्रा– इहेत्थ प्रागपागुदगधराक् ।

प्र– ओथामोदैव

ब्रा– स वीपुत्सी लिलीशयो३म् ।

प्र– अश्वत्थपलाशं जरितरोथामोदैवो३म् ।

ब्रा– इहेत्थ प्रागपागुदगधराक् ।

प्र- ओथामोदैव ।

ब्रा- स्थालीपाको विलीयसो३म् ।

प्र- पिपीलिकावटो जरितरोथामोदैवो३म् ।

ब्रा-श्रुगित्यभिगतः ।

प्र-श्वा जरितरोथामोदैव ।

ब्रा-शरित्यभिष्ठितः ।

प्र- पर्णशदो जरितरोथामोदैव ।

ब्रा- फलित्यप्रक्रान्तः ।

प्र- गोशफो जरितरोथामोदैव ।

ब्रा- वीमे देवा अक्रंसताध्वर्यो क्षिप्रं प्रचर ।

प्र- पत्नी यीयप्स्यते जरितरोथामोदैव ।

ब्रा- सुशस्तिरिद्गवामस्यति प्रक्खिदसोमहे ।

प्र- होता विष्टीमेनं जरितरोथामोदैव ।

ब्रा- आदित्याहजरितरङ्गिरोभ्यो दक्षिणामनयन् ।

प्र- ओथामोदैव ।

ब्रा- तां हजरितर्नप्रत्यायन् ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- तामु ह जरितः प्रत्यायन् ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- तां ह जरितर्नप्रत्यगृभ्णन् ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- तामुहजरितः प्रत्यगृभ्णन् ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- अहानेतसं न विचेतनानि ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- जज्ञानेतसं न पुरोगवासः ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- उतश्वेत आशुपत्वा ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- उतो पद्याभिर्जविष्ठः ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- उतेमाशुमानं पिपर्ति ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- आदित्या रुद्रा वसवस्त्वेळते ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- इदं राधः प्रतिगृभ्णीह्यङ्गिरः ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- इदं राधोबृहत्पृथु ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- देवा ददत्वावरम् ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- तद्वो अस्तु सुचेतनम् ।

प्र- तथा ह जरितरोथामोदैव ।

ब्रा- युष्मे अस्तु दिवेदिवे ।

प्र- ओं ह जरितरोथामोदैव ।

ब्रा- प्रत्येवगृभायत ।

प्र- ओम्

ब्रा- त्वमिन्द्रशर्मरिणा हव्यं पारावतेभ्यः ।

प्र- ओथामोदैव ।

ब्रा- विप्राय स्तुवते वसुनिजुरिश्रवसे महो३म् ।

प्र- ओ३थामोदैव ।

ब्रा- त्वमिन्द्र कपोतायच्छिन्नपक्षाय वञ्चते ।

प्र- ओथामोदैव ।

ब्रा- श्यामाकं पक्वं पीलु च वारस्मा अकृणोद्बहो३म् ।

प्र- ओ३थामोदैव ।

ब्रा- अरङ्गरो वावदीति त्रिधाबद्धो वरत्रया ।

प्र- ओथामोदैव ।

ब्रा- इरामुह प्रशंसत्यनिरामपबाधतो३म् ।

प्र- ओ३थामोदैव ।

ब्रा- यदस्या अंहुभेद्याः-पृथुस्थूरमुपातसत् ।

प्र- ओथामोदैव ।

ब्रा- मुष्को३ओओओओओओ३ओओओओओओ३ओओओ विदस्या एजतो३-ओओओ३म् गोशफे शकुलाविवो३म् ।

प्र-ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म् ।

ब्रा-यदा स्थूरेण पयसा, अनूमुष्का उपावधीत् ।

प्र-ओथामोदैव ।

ब्रा-विष्णो३ओओओओओओ३ओओओओओओ३ओओओ चावस्या अर्दतो३ओओओ३म् सिकतास्विवगर्दभो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म्।

ब्रा–यदल्पिका स्वल्पिकाकर्कन्धुकेव पच्यते ।

प्र–ओथामोदैव ।

ब्रा–वासो३ओओओओओओ३ओओओओओओ३ओओओ न्तिकमिव तेजनो३ ओओओ३म् यभ्यमाना वितन्वतो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म्।

ब्रा–यद्देवासो ललामगुम्, प्रपिष्टीपिनमापिषुः ।

प्र–ओथामोदैव ।

ब्रा–सक्थ्नो३ओओओओओओ३ओओओओओओ३ओओओ देदृश्यते नरो३ओओओ३म् सक्थः साक्षीवगोयथो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म्।

ब्रा–महाणग्न्युपब्रूते–अश्वस्यावेशितं पसः ।

प्र–ओथामोदैव ।

ब्रा–ईदो३ओओओओओओ३ओओओओओओ३ओओओ क्फलस्य वृक्षस्यो३ओओओ३म् शूर्पं शूर्पं भजेमहो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म्।

ब्रा–महाणग्न्यदृप्तंहि–सोक्रन्ददस्तमासरत् ।

प्र–ओथामोदैव ।

ब्रा–शक्नो३ओओओओओओ३ओओओओओओ३ओओओ काननाशको३ ओओओ३म् मशकं सक्थ्युद्यभो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म्।

ब्रा–महाणग्न्युलूखलं–अतिक्रामन्त्यब्रवीत् ।

प्र–ओथामोदैव ।

ब्रा–यथो३ओओओओओओ३ओओओओओओ३ओओओ व ते वनस्पतो३ ओओओ३म् पिघ्नन्ति तथैव मो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म् ।

ब्रा–महान्वै भद्रो बिल्वः–महान्पक्व उदुम्बरः ।

प्र–ओथामोदैव ।

ब्रा–महो३ओओओओओओ३ओओओओओओ३ओओओअभिज्ञु बाधतो३ ओओओ३म् महतः साधुखोदनो३म् ।

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म् ।

ब्रा–कपृन्नरः कपृथमुद्दधातन–चोदयत खुदत वाजसातये ।

प्र–ओथामोदैव ।

ब्रा– निष्टो३ओओओओओओ३ओओओओओओ३ओओओ ग्रयः पुत्रमा च्यावयोतयो३ओओओ३मिन्द्रं सबाध इह सोमपीतयो३म्

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म् ।

ब्रा–यद्ध प्राचीरजगन्त–उरो मण्डूरधाणिकीः ।

प्र–ओथामोदैव ।

ब्रा–हतो३ओओओओओओ३ओओओओओओ३ओओओ इन्द्रस्य शत्रवो३ ओओओ३म् सर्वे बुद्बुदयाशवो३म्*

प्र–ई३इइइइइई३इइइइइई३इइइ किमयमिदमाहो३ओओओ३मोथामोदैवो३म् ।

## ॥ इति कुन्तापशस्त्रप्रतिगरः ॥



---

* अस्य कुन्तापसूक्तस्य बहवः पाठभेदा विद्यन्ते । न तेऽत्र प्रदर्शिताः ।

# ॥ अङ्गसौत्रामणिप्रयोगः ॥

सौत्रामण्या यक्ष्यमाणः पर्वणि प्रातरग्निहोत्रं हुत्वा, अपरेण गार्हपत्यं दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः पत्न्या सह प्राणानायम्य संकल्प्य, श्री परमेश्वरप्रीत्यर्थं अग्निं चित्वा तदङ्गसौत्रामण्या यक्ष्ये[१] । समारोप्य देवयजनं गत्वा मथित्वा लौकिके वोपारोह्य आयतने निधाय । **विद्युदसि** । अस्यां सौत्रामण्यां अध्वर्युं त्वां वृणीमहे । एवं ब्रह्माणं होतारमाग्नीध्रं प्रतिप्रस्थातारं प्रशास्तारं च वृणीते । तस्याः निरूढपशुबन्धवत्कल्पः । पयोग्रहपक्षमाश्रित्य प्रयोगः । षड्ढोतारं हुत्वा पशुबन्धवत् आग्नावैष्णवेष्ट्या यजेत । इष्ट्यन्ते शाखाहरणादि चषालकरणान्तम् । एको यूपः त्रयस्स्वरवः । सौमिक्या वेदितृतीये यजेतेति विज्ञायते ।

सौमिकविहारप्रक्रमस्य त्रिकरणी प्रक्रमस्थानीया भवति । तेन मानदण्डेन दश पश्चात्तिर्यक् द्वादश प्राची अष्टौ पुरस्तात्तिर्यक्[२] । {३० अङ्गुलाः एकः **प्रक्रमश्चेत् त्रिकरणी** ५१अङ्गुलाः, **३३ तिलाः । २४ अङ्गुलाः एकः प्रक्रमश्चेत् त्रिकरणी ४१ अङ्गुलाः, १९ तिलाः । २० अङ्गुलाः एकः प्रक्रमश्चेत् त्रिकरणी ३४ अङ्गुलाः, २२ तिलाः ।**} पदमानेन सौमिकी वेदिः मीयते चेत् {१५ अङ्गुलाः **एकः पदश्चेत् त्रिकरणी** २५ अङ्गुलाः, ३३.५ **तिलाः । १२ अङ्गुलाः एकः पदश्चेत् त्रिकरणी २० अङ्गुलाः, २७ तिलाः । १० अङ्गुलाः एकः पदश्चेत् त्रिकरणी १७ अङ्गुलाः, ११ तिलाः ।**} एवं शौल्बमानेन मीत्वा । त्वया वेदिमिति वेदं कृत्वा मन्त्रेण वेदिकरणम् । प्रागुत्तरात्परिग्राहात्कृत्वा शम्यामात्रीमुत्तरवेदिं करोति । **वित्तायनी मेऽसि** इत्यादि **उरु प्रथस्व** इत्यन्तं करोति । उत्तरवेद्यां क्रियमाणायां प्रतिप्रस्थाता चात्वालात्पुरीषमाहृत्य दक्षिणेनोत्तवेदिमरत्निमात्रं चतरस्रं खरं करोति तूष्णीम् । अग्रेणान्वाहार्यपचनं अदूरे वेद्यामेव पयोग्रहार्थं द्वितीयं खरं करोति । अध्वर्युः **ध्रुवासि** इत्यादि दक्षिणतो निस्सारणान्तं कृत्वा । आहवनीये प्रणयनीयमिध्ममादीप्येत्यादि । ऊर्णावन्तमिति होतुरभिज्ञायाग्नीधेऽग्निं प्रदाय जुह्वां

---

१. अग्निं चित्वा सौत्रामण्या यक्ष्ये । श्रीपरमेश्वरप्रीत्यर्थं सौत्रामण्या यक्ष्ये इति पाठा० ।

२. सौमिकी वेदिः प्रक्रमेण वा पदेन वा मीयते । प्रक्रमेषु पदेषु च मानविकल्पाः प्रयोगेषु दृष्टाः । सौमिक्या वेदितृतीये यजेतेति सौत्रामण्या विज्ञायते इति सौत्रामण्याः वेदिमानं सूत्रकारेण विहितम् । एतेन येन यजमानेन यादृशेन मानेन सौमिकी वेदिः कृता तेन तादृशेन मानेनैव सौत्रामणीवेदिः कर्तव्या इति न्याय्यम् ।

पञ्चगृहीतं गृहीत्वेत्याद्यतिमुक्तिहोमान्तं पशुवत् । औत्तरवेदिके अग्नौ प्रणीयमाने प्रतिप्रस्थाता दक्षिणाग्नेरग्निमाहृत्य दक्षिणेनोत्तरवेदिं तूष्णीं खरे न्युप्य यथा व्यवायो अन्यैरग्न्योः न भवति तथा कृत्वोपसमादधाति ।

अध्वर्युरुत्तरेण गार्हपत्यमित्यादि । इध्माबर्हिराहरति । आश्ववालः प्रस्तरः । ऐक्षवी विधृती । कार्ष्मर्यमयाः परिधयः । त्रयोविंशतिदारुरिध्मः । नेध्मप्रव्रश्चनम् । न वेदकरणम् । अन्तर्वेदिशाखायामित्यादि । न तृतीयस्यै । न पर्णवल्कः । **पशून् हव्यं करोतु मे** । पशुकुम्भीनां लेपनान्तम् । **इमौ पर्णं च** । अत्र पशुशाखया प्रतिप्रस्थाता वत्सानपाकरोति । **परिस्तृणीत** । **देवा देवेषु** । **कर्मणे वाम्** इत्यादि । प्रात्रप्रयोगकाले द्वे यूपरशने तिस्रः पशुरशना कुम्भीत्रयं वपाश्रपणी युगलत्रयं त्रीन् हृदयशूलान्[३] इतराणि पशुवत्[४] तथा अपरस्मिन् खरे त्रीणि पलाशग्रहपात्राणि पयोग्रहार्थं प्रयुनक्ति । सतं वालस्रावं श्येनपत्रं श्रयणानि च[५] । सान्नाय्यार्थं प्रातर्दोहपात्राणि च शतातृण्णां[६] च ।

पवित्रकरणादि । ***यजमान वाचं यच्छ*** । पाशुकानि पात्राणि संमृश्य ऊर्ध्वपात्राणि संमृशति । प्रोक्षणकाले **शुन्धध्वं** इति ग्रहपात्रादीनामपि प्रोक्षणम् । पात्रसम्मार्जनकाले जुहूवत् ग्रहपात्राणि सम्मार्ष्टि । **अग्नेर्वस्तेजिष्ठेन** इत्यादि । यूपोच्छ्रयणान्तं कृत्वा । **देवस्य वां सवितुः प्रसवे** इति हस्तद्वयेन यूपरशनाद्वयमादाय । **परिवीरसि** इत्यनूहेनैव परिव्ययति । **दिवः सूनवस्स्थ** स्वरुत्रयमादाय स्वरूणां चिह्नं कृत्वा । **अन्तरिक्षस्य वः सानाववगूहामि** अवगूहनान्तं कृत्वा[७] । अत्र प्रातर्दोहं

---

३. एक एव हृदयशूलः प्रयोगग्रन्थेषु उक्तः । अवभृथगमनावसरे सूत्रे 'हृदयशूलैः .......... अवभृथमवयन्ति' इत्युक्तत्वात्, 'जातिभेदे तु भिद्येत । पक्तिवैषम्यात्' इति परिभाषासूत्रे तद्भाष्ये च पशुजातिभेदेन हृदयशूलभेदस्य उक्तत्वाद्बहुवचनत्वेन परिष्कृतम् ।

४. स्रुवस्स्वधित्यौ जुहूवसाहोमहवन्यौ च द्वन्द्वम् । उपभृत्पृषदाज्यधान्यौ ध्रुवया द्वन्द्वम् । स्थाल्यौ (दध्याज्य) वेदेन द्वन्द्वम् । उपवेषमिडापात्रेण द्वन्द्वम् । प्लक्षशाखां त्रीन् हृदयशूलान् वपाश्रपणियुगलत्रयं तिस्रः पशूखाः शाखापवित्रेण द्वन्द्वम् । औदुम्बरेण मैत्रावरुणदण्डेन आस्यदघ्नेन चुबुकदघ्नेन वा रशना (द्वे यूपरशने, तिस्रः पशुरशनाः) । योक्त्रेण सार्धं परिवासनानि दर्भास्स्वरुं च द्वन्द्वम् । यूपेन सार्धं यवा दर्भौ । शकलैस्सह यूषार्थपात्रं लौकिकमाज्यपात्रं च प्रयुज्य ।

५. सतं = परिमण्डलं पात्रम्, द्रोणकलशाकृतिः । वालस्रावः = वालमयं पवित्रं, शुचिभिः गोवालैः कृतं सुरागालनार्थं, केचिद्दशापवित्रवत् वस्त्रं वा । श्येनपत्रं = श्येनपुच्छः । श्रयणानि = क्वलबदरकर्कन्धुसक्तूनि ।

६. शतातृण्णां = शतछिद्रां मृन्मयीं स्थालीम् ।

७. अत्र पशुशाखोपवेषौ एव उपयुज्येते ।

दोहयति **एता आचरन्ति** इत्यादि **कामधुक्षः प्र णो ब्रूह्यश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे हविरिन्द्रियम् । बहु दुग्ध्यश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे देवेभ्यो हव्यमाप्यायतां पुनः** । सङ्क्षाळननिनयनान्तं कृत्वा । **अन्तरितम्** । **अविदहन्त** । **यस्य आत्मा** । **दृꣳह** इत्युद्वास्य । ब्राह्मणस्य मूर्धनि खरे वा तूष्णीं सादयति । श्रयणानि च । **इदमिन्द्रियं, अयं यज्ञो, ममाग्ने** पञ्चहोता इत्यासन्नाभिमर्शनम् ।

खरस्याधस्तात् सतं वालस्रावं दशापवित्रं वितत्य । **पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वतातना** इति तस्मिन् पयः पावयित्वा[८] । पुनः खरे सादयित्वा पशूनुपाकरोति । अथ पशुप्रायश्चित्तानि कृत्वा पशून् स्नपयन्ति । **इषे त्वा** इत्यादि । **अश्विभ्यां त्वा जुष्टमुपाकरोमि** धूम्रमजमुपाकरोति[९] । प्रज्ञाते बर्हिषी निधाय । पुनः **इषे त्वा** इत्यादि । अन्ये बर्हिषी आदाय । तयैव प्लक्षशाखया **सरस्वत्यै त्वा जुष्टमुपाकरोमि** मेषमुपाकरोति । प्रज्ञाते बर्हिषी निधाय । पुनः **इषे त्वा** इत्यादि । अन्ये बर्हिषी आदाय । तयैव प्लक्षशाखया **इन्द्राय त्वा जुष्टमुपाकरोमि** वृष्णि-मुपाकरोति[१०] । प्रज्ञाते बर्हिषी निधाय । उपाकृत्य पञ्चजुहोति । **प्रजानन्तः --- सुवर्गं यात पथिभिः ---प्रतितिष्ठत शरीरैस्स्वाहा** । पशुभ्य इदम् । **येषामीशे --- निष्क्रीता इमे यज्ञियं भागं यन्तु रायस्पोषा --- सन्तु स्वाहा ॥ ये बध्यमानाननुबध्यमाना अभ्यैक्षन्त --- संविदानस्स्वाहा ॥ य आरण्याः --- स्वाहा ॥ प्रमुञ्चमाना --- देवाः । उपाकृताञ्च्छशमानान् यदस्थाज्जीवं देवानामपि यन्तु पाथस्स्वाहा** ॥ एकयूपे पशूनुपाकरोति ।

देवस्य त्वा इत्यादि **अश्विभ्यां त्वा जुष्टं नियुनज्मि । सरस्वत्यै त्वा जुष्टं नियुनज्मि । इन्द्राय त्वा जुष्टं नियुनज्मि** । दक्षिणतो यूपस्य नियुनक्ति । एवं प्रोक्षणे वपाया उद्धरणे हृदयस्याभिघारणे च ।

**अश्विभ्यां त्वा जुष्टं प्रोक्षामि** । अपां पेरुरसीत्यादि सर्वतश्च प्रोक्ष्येत्यन्तं एकस्य कृत्वा पुनरन्यस्य करोति । **सरस्वत्यै त्वा जुष्टं प्रोक्षामि । इन्द्राय त्वा जुष्टं प्रोक्षामि** । स्रुच्यमाघार्य प्रत्याक्रम्य । जुह्वा पशून् समनक्ति । **सं ते प्राणो वायुना** इत्यादि । श्रोण्यां, इत्यन्तं

---

८. खरादधस्तात् हृत्वा वालमयेन पवित्रेण पयः पावयति इति पाठान्तरम् ।

९. धूम्रमजं = तिलकयुक्तं छागम् ।

१०. वृष्णिः = पुं मेषः ।

एकस्य कृत्वा इतरस्य करोति । ध्रुवा समञ्जनादि कर्म प्रतिपद्यते । दश प्रयाजानिष्ट्वा प्रत्याक्रम्य जुह्वा स्वरुत्रयं स्वधितिं च अनक्ति । स्वर्वञ्जनं तन्त्रेण करोति । सकृत् स्वधितेरन्यतरां धाराम् । स्वरुमन्तर्धाय स्वधितिना आश्विनं पशुं समनक्ति । **घृतेनाक्तौ पशुं त्रायेथां** । पुनः पुनः स्वधित्यञ्जनम् । अन्यमन्यं स्वरुमन्तर्धाय स्वधितिना एवमितरौ समनक्ति । **घृतेनाक्तौ---**। पर्यग्निकरणं तन्त्रेण । **पर्यग्नये क्रियमाणायानुब्रूहि** इत्यनूहेन सम्प्रेष्यति । **प्रजानन्तः --- सुवर्गं यात पथिभिः --- प्रतितिष्ठत शरीरैस्स्वाहा । पशुपतेः पशवो --- तेषां यान् वव्रिरे देवास्ताँ॒ स्वराडनुमन्यताँ॒ स्वाहा ॥** त्रयाणां तन्त्रेण प्रमोकः । **ये बध्यमानाननुबध्यमाना अभ्यैक्षन्त संविदानस्स्वाहा ॥** प्रमुच्यमाने । **प्रमुञ्चमाना --- देवाः । उपाकृताञ्च्छशमानान् यदस्थाज्जीवं देवानामपि यन्तु पाथस्स्वाहा ॥** प्रणीयमाने । **रेवतीर्यज्ञपतिं प्रियधाऽऽविशत** वपाश्रपणीभ्यां मुख्यं पशुमन्वारभेते अध्वर्युर्यजमानश्च । एक एव अध्रिगुसम्प्रैषः । तन्त्रेण अग्नेर्हरणम् । **नाना प्राणो यजमानस्य पशुभिर्यज्ञो देवेभिस्सह देवयानः । जीवं देवानामपि यन्तु पाथस्सत्यास्सन्तु यजमानस्य कामाः ॥** अध्वर्युर्जपति । **पृथिव्यास्सम्पृचः पाहि** इत्यावर्तते । तत्तद्बर्हिरुपास्यति । *अमायुं कृण्वतः संज्ञपयत* इति सम्प्रैषः । **स्वर्विदस्स्थ स्वर्वित्वा स्वरित स्वर्मह्यँ॒ स्वः पशुभ्यो लोकविदस्स्थ लोकं वित्वा लोकमित लोकं मह्यं लोकं पशुभ्यो गातुविदस्स्थ गातुं वित्वा गातुमित गातुं मह्यं गातुं पशुभ्यो नाथविदस्स्थ नाथं वित्वा नाथमित नाथं मह्यं नाथं पशुभ्यः ॥ न वा उ वेतन्म्रियध्वे न रिष्यथ देवाँ॒ इदिथ पथिभिस्सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र वो देवस्सविता दधातु ॥ आशानां व आशापालेभ्यः --- वयम् ॥ नाना प्राणो यजमानस्य पशुभिर्यज्ञो देवेभिस्सह देवयानः । जीवं देवानामपि यन्तु पाथस्सत्यास्सन्तु यजमानस्य कामाः ॥ इन्द्रस्य भागः सुविते --- यो नो द्वेष्ट्यनु तँ॒ रधध्वं --- वीराः । यदस्य पारे रजसः --- स्वाहा । यस्माद्भीषा वाशिढ्वं ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ य इदमकः --- स्वाहा ॥ यस्माद्भीषा न्यषदत ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ य इदमकः ---**

**स्वाहा ॥ यस्माद्भीषा वेपिढ्वं ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ य इदमकः --- स्वाहा ॥ यस्माद्भीषा पलायिढ्वं ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ य इदमकः --- स्वाहा ॥ यस्माद्भीषा समज्ञाध्वं ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ य इदमकः --- स्वाहा ॥ यस्माद्भीषा निमेहथ ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ यस्माद्भीषा शकृत्कुरुथ ततो नो अभयं कृत । प्रजाभ्यस्सर्वाभ्यो मृडत नमो रुद्राय मीढुषे स्वाहा ॥ यत्पशवो मायुमकृषतोरो वा पद्भिराघ्नते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसस्स्वाहा ॥**

वपाश्रपणीनां तन्त्रेण प्रतितपनम् । **शमितार उपेतन --- पाशेभ्यः पशून् प्रमुञ्चत ---परि ॥ अदितिः पाशं प्रमुमोक्त्वेतन्नमः --- करोमि** इति क्रमेण पाशान् प्रमुच्य **अरातीयन्तं** इति तन्त्रेण व्युदसनम् । **वाक्त आप्यायतां** इति क्रमेण आप्यायनम् । **शमोषधीभ्य** इति सर्वेषामन्ते निनीय । **ओषधे त्रायस्व** इत्यादि क्रमेण । **रक्षसां भागास्स्थ** इति निरसनम् । **अश्विभ्यां त्वा जुष्टामुत्कृन्तामि । सरस्वत्यै त्वा जुष्टामुत्कृन्तामि । इन्द्राय त्वा जुष्टामुत्कृन्तामि ।** शमिता तु वपोद्धरणापिधानं मुख्यस्यैव करोति । प्रत्युष्टमिति शामित्रे प्रतितपनं तन्त्रेण । मुख्यस्य वपाश्रपण्योः अन्वारम्भः । **निर्दग्धं** इति आहवनीयस्यान्तमे अङ्गारे वपानिकूडनं तन्त्रेण । **वायो वीहि स्तोकानां** इति भेदेन । **त्वामु ते दधिरे** इत्यभिहोमस्तन्त्रेण । **यस्त आत्मा** इति प्रत्येकमनूहेन अभिघारणम् । केचिदूहमिच्छन्ति । ***दृꣳहत गा दृꣳहत गोपतिं मा वो यज्ञपती रिषत्*** इति तन्त्रेणोद्वास्य । **सुपिप्पला ओषधीः कृत** इति दक्षिणस्यां वेदिश्रोण्यां बर्हिषि प्लक्षशाखायां तन्त्रेणासादनम् । ***प्रयुता द्वेषाꣳसि*** इत्यावृत्तिः । **इदमिन्द्रियं** इति पृथक्पृथगभिमर्शनम् । उत्तमप्रयाजादि । पूर्वं परिवप्यं हुत्वा क्रमेण वपा प्रचारः ।

***अश्विभ्यां छागस्य वपाया मेदसोऽनुब्रूहि । अश्विभ्यां छागस्य वपाया मेदसः प्रेष्य ।*** अश्विभ्यामिदम् । **अश्विनोरहं देवयज्यया जेमानं महिमानम्..** । ***सरस्वत्यै मेषस्य वपाया मेदसोऽनुब्रूहि । सरस्वत्यै मेषस्य वपाया मेदसः प्रेष्य ।*** सरस्वत्या इदम् ।

**सरस्वत्या अहं देवयज्ययावाचमन्नाद्यं पुषेयम्** । *इन्द्राय वृष्णोर्वपाया मेदसोऽनुब्रूहि । इन्द्राय वृष्णोर्वपाया मेदसः प्रेष्य* । इन्द्रायेदम् । **इन्द्रस्याहं देवयज्यया जेमानं महिमानम्–**
––। उत्तरं परिवप्यं हुत्वा । पृथग्वपोद्धरणाभिघारणं वपाश्रपणी प्रहरणं च[११] । सकृदेव संस्रावेणाभि–जुहोति ।

दक्षिणाकाले निष्कं,[१२] ऋषभं, सात्वरीं वडबां चान्तर्वेदि स्थापयित्वा । नष्टप्रत्यासृतां[१३] वडबां सात्वरीं इति ब्रुवते । अनुशिशुर्वडबा ***ब्रह्मण्यो ब्रह्मण्यस्स्थ ब्रह्मणे वो हुताद्य मा मा हिꣳसिष्टाहुता मह्यꣳशिवा भवत ।*** **ब्रध्न पिन्वस्व** इत्यादि । ***सहस्रधारा उत्सा अक्षीयमाणाः । ता दध्रुः पृथिवीमन्तरिक्षं दिवं च ताभिर्निष्कर्षभसात्वरीवडबाभि–रतितराणि मृत्युम् । ब्राह्मणा इमा वो निष्कर्षभसात्वरीवडबाः अहिंसन्तः यथाभागं प्रतिगृह्णीध्वम् ।*** **अग्नये हिरण्यं, रुद्राय गां, वरुणायाश्वं** इति क्रमेण प्रतिग्रहः ।

चात्वाले मार्जयित्वा द्वितीये खरे पयोग्रहान् गृह्णन्ति । अध्वर्युराश्विनपात्रमादाय **कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥** ***उपयामगृहीतोस्यच्छिद्रां त्वाच्छिद्रेणाश्विभ्यां त्वा[१४] जुष्टं गृह्णामि*** आश्विनमध्वर्युर्गृह्णाति । क्वलसक्तुभिः[१५] सिंहलोमभिश्च आश्विनं श्रीणाति । सिंहलोमाभावे ***सिंहलोमभिः श्रीणामि*** इति मनसा ध्यायेत् । श्येनपत्रेण परिमृज्य **एष ते योनिरश्विभ्यां त्वा** यथायतनं सादयति ।

प्रतिप्रस्थाता सारस्वतपात्रमादाय **कुविदङ्ग ––– न जग्मुः ॥** ***उपयामगृहीतोस्यच्छिद्रां त्वाच्छिद्रेण सरस्वत्यै त्वा जुष्टं गृह्णामि*** सारस्वतं गृह्णाति । बदरसक्तुभिः शार्दूललोमभिश्च सारस्वतं श्रीणाति । शार्दूललोमाभावे ***शार्दूललोमभिः श्रीणामि*** इति मनसा ध्यायेत् । श्येनपत्रेण

---

११. केचित् "स्वाहोर्ध्वनभसं मारुतं गच्छत" इत्यूहेन वपाश्रपणीयुग्मत्रयाणां प्रहरणम् ।

१२. अशीतिगुञ्जापरिमितं अष्टोत्तरशतगुञ्जापरिमितं वा सुवर्णं निष्कमित्युच्यते । चतुस्सुवर्णको निष्कं इति कपर्दिभाष्यम्, अशीतिगुञ्जा = एकः सुवर्णकः ।

१३. नष्टा सती पुनरागता गृहम् ।

१४. 'त्वा शब्दः तृतीये एव । अश्विभ्यां जुष्टं गृह्णामि इति मन्त्रपाठात् । उपदेशस्तु त्रिष्वपि त्वा शब्दः' इति कपर्दिभाष्यम् ।

१५. क्वलं बालखर्जूरफलं इति सायणभाष्यम् ।

परिमृज्य **एष ते योनिः सरस्वत्यै त्वा** सादयति ।

ब्रह्मा ऐन्द्रपात्रमादाय **कुविदङ्ग --- न जग्मुः ॥** ***उपयामगृहीतोस्यच्छिद्रां त्वाच्छिद्रेणेन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामि*** ऐन्द्रं गृह्णाति । कर्कन्धुसक्तुभिः[१६] वृकलोमभिश्च ऐन्द्रं श्रीणाति । वृकलोमाभावे ***वृकलोमभिः श्रीणामि*** इति मनसा ध्यायेत् । ब्रह्मा श्येनपत्रेण परिमृज्य **एष ते योनिरिन्द्राय त्वा सुत्राम्णे** सादयति ।

ततः पशुपुरोडाशान् निर्वपति । त्रयस्त्रिंशत्कपालानि शूर्पं च[१७] द्वन्द्वम् । कृष्णाजिनाद्युपलान्तम् । पुरतः पात्रीं प्राशित्रहरणं मदन्त्यर्थं मेक्षणमुपवेषमुत्पवनार्थपात्रं तृणं च । पवित्रे कृत्वा **यजमान वाचं यच्छ** । न यज्ञयोगः । निर्वपणकाले व्रीहिमयं पुरोडाशं निर्वपति । **इन्द्राय जुष्टं निर्वपामि । सवित्रे जुष्टं निर्वपामि । वरुणाय जुष्टं निर्वपामि** । उपसादनकाले **अदित्यास्त्वोपस्थे --- इन्द्र हव्य७ँरक्षस्व सवितर्हव्य७ँरक्षस्व वरुण हव्य७ँरक्षस्व** । निर्वापवत्प्रोक्षणम् । सर्वाभिरद्भिस्त्रिः प्रोक्षति । हविष्कृता वाचं विसृज्य पशून् विशास्ति । ***गुदानि मानिर्ल्लेषीः वनिष्ठून् मा निर्ल्लेषीः*** । हृदयशूलान् शाखापवित्रमुपवेषं कुम्भींश्चादाय निष्टपनादि शूले प्रणीक्ष्य हृदयं शामित्रे श्रपयतीत्यन्तम् एकस्य कृत्वा इतरयोः करोति ।

अवहननादि कर्म प्रतिपद्यते । अधिवपनकाले **देवस्य त्वा --- इन्द्राय जुष्टमधिवपामि सवित्रे जुष्टमधिवपामि वरुणाय जुष्टमधिवपामि धान्यमसि ---**। कपालोपधाकाले ऐन्द्रस्यैकादशकपालानि । सावित्रस्य द्वादशकपालानि, युग्माणमावृत्तिः । वारुणस्य दशकपालानि, चतुर्थाष्टमयोरावृत्तिः । अधिवापवत्संवापः । **इदमह७ँसेनाया** इत्यादि । आप्यलेपं बर्हिषि निनीय । ***घृतागेहि, प्रत्युष्टं, अनिषितमसि, रूपं वर्णम्*** इत्यन्यैर्दर्भैः । **अग्नेस्त्वा, दिवशिल्पम्** । **अयं प्राणश्च** प्रस्तरे पवित्रे अपिसृज्य । **इदमह७ँसेनाया** इत्यादि । तूष्णीमैन्द्रमभिघार्य । सावित्रवारुणयोः मन्त्रेणाभिघारणम् । अलङ्कृत्य ***प्रियेण*** इत्यासादनम् । **यज्ञोऽसि** इति सावित्रवारुणयोरभिमर्शनम् । **अयं यज्ञः, यो नः कनीयः --- अपतमिन्द्रो भुवनान्नुदतां --- विदेय ॥ ममाग्ने**

---

१६. कर्कन्धुः हरीतकीपरिमितं स्थूलं बदरीफलम् इति सायणभाष्यम् ।

१७. त्रयस्त्रिंशत्कपालानि स्फ्यश्च द्वन्द्वं इति मातृकापाठः । प्रयोगपाठस्तु भाष्यानुसारी । तथा हि पशुबन्धे धूर्तस्वामिभाष्यम्:–यान्यासादितानि पात्राणि तानि पुनर्न साद्यन्ते । पशुपुरोडाशस्यापि तान्युपकुर्वन्ति । अपरिसमाप्तत्वात् पशोस्तन्त्रस्य । कपालशूर्पादीन्याष्टावपरतः इति ।

पञ्चहोता इत्यासन्नाभिमर्शनम् ।

अथ ग्रहैः प्रचरन्ति । आश्विनमध्वर्युरादत्ते, सारस्वतं प्रतिप्रस्थाता, ऐन्द्रं ब्रह्मा । अध्वर्युरेव सम्प्रेष्यति ***अश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सोमानाꣳ सुराम्णामनुब्रू३हि*** । आश्राव्य प्रत्याश्राविते ***अश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सोमानाꣳ सुराम्णां प्रेष्य*** । अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्ण इदम्[१८] । अनुवषट्कारस्तु हुतानुमन्त्रणान्ते याजमानबाहुल्यात् । **अहाव्यग्ने हविरास्येते । स्रुचीव घृतं चमू इव सोमः । वाजसनिꣳ रयिमस्मे सुवीरम् । प्रशस्तं धेहि यशसं बृहन्तम् ॥ यस्मिन्नश्वास ऋषभास उक्षणः । वशा मेषा अवसृष्टास आहुताः । कीलालपे सोमपृष्ठाय वेधसे । हृदा मतिं जनय चारुमग्नये** इति हुतां हूयमानां वा यजमानोऽनुमन्त्रयते । प्राकृतहुतानुमन्त्रणस्य प्रत्याम्नायः । अनुवषट्कृते अग्नये स्विष्टकृत इदम् । **अग्नेरहं --- आयुष्मान् यज्ञेन --- गमेयम्**[१९] । ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्[२०] ।

**नाना हि वां देवहितꣳ सदो मितम् । मा सꣳसृक्षाथां परमे व्योमन् । सुरात्वमसि शुष्मिणी सोम ऐषः । मा मा हिꣳसीः स्वां योनिमाविशन् ॥ यदत्रशिष्टꣳ रशिनस्सुतस्य । यदिन्द्रो अपिबच्छचीभिः । अहं तदस्य मनसा शिवेन । सोमꣳ राजानमिह भक्षयामि** इति वा स्वयं पिबेत्[२१] ॥ **द्वे सुती अशृणवं पितृणाम् । अहं देवानामुतमर्त्यानाम् । ताभ्यामिदं विश्वं भुवनꣳ समेति । अन्तरा पूर्वमपरं च केतुम्** इति वा वल्मीकवपायामवनयेत् ।

दक्षिणेऽग्नौ शतातृण्णां स्थालीं प्रबद्धां धारयति[२२] । तस्या बिल उदीचीनदशं **(वालस्रावं)** पवित्रं वितत्य । **यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि** इति तस्मिन् शतमानं हिरण्यं निधाय । **सोमः प्रतीकाः पितरः स्तृप्णुत** इति

---

१८. अश्विभ्यामिदम् । सरस्वत्या इदम् । इन्द्राय सुत्राम्ण इदम् । इति पाठान्तरम् ।

१९. अग्नेः स्विष्टकृतोऽहं---आयुष्मान् यज्ञेन --- इति पाठा० ।

२०. ब्राह्मणस्य पातुः पापमस्त्येव ।

२१. क्षत्रियवैश्ययोरप्रतिषेधात् तयोरेव अयं विधिः ।

२२. कश्चित्पुरुषः स्थालीं रज्वादिभिः प्रबध्य उपरि धारयतीत्यर्थः ।

प्राचीनावीती तस्मिन् यत्सते सुराशेषं तदानयति ।

स्रवन्तीं सौमीभिः पितृमतीभिः तिसृभिस्तिसृभिः उत्तरोत्तराभिरुपतिष्ठन्ते अध्वर्युब्रह्महोतारः । **त्वꣳ सोम प्रचिकितो मनीषा** इत्येता आम्नाता भवन्ति । पुरस्तादध्वर्युः दक्षिणतो ब्रह्मा पश्चाद्धोता ॥ **त्वꣳ सोम प्रचिकितो मनिषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ त्वꣳ सोमः पितृभिः सँविदानोऽनु द्यावापृथिवी आततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥** पुरस्तात्प्रत्यङमुखस्तिष्ठन्नध्वर्युः ॥ **बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आ गताऽवसा शन्तमेनाथास्मभ्यꣳ शँय्योररपो दधात ॥ आहं पितृन्त्सुविदत्राꣳ अविथ्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधाया सुतस्य भजन्त पित्वस्त इहा गमिष्ठाः ॥ उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान् ॥** दक्षिणत उदङ्मुखो ब्रह्मा उपतिष्ठते ॥

**अग्निष्वात्ताः पितर एह गच्छत सदस्सदस्सदत सुप्रणीतयः । अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ॥ अग्निष्वात्तानृतुमतो हवामहे नराशꣳसे सोमपीथं य आशुः । ते नो अर्वन्तः सुहवा भवन्तु शं नो भवन्तु द्विपदे शं चतुष्पदे ॥ ये अग्निष्वात्ता येऽनग्निष्वात्ताः अꣳहोमुचः पितरस्सोम्यासः । परेऽवरेऽमृतासो भवन्त्वधि ब्रुवन्तु ते अवत्वस्मान्** इति होता पश्चात् प्राङमुख उपतिष्ठते ॥

**यदग्ने कव्यवाहन पितॄन् यक्ष्यृतावृधः । प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ ॥ त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यस्स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि ॥ मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः । याꣳश्च देवा वावृधुर्ये च देवान्थ्स्वाहान्ये स्वधयान्ये मदन्ति** इति तिसृभिः काव्यवाहनीभिर्दक्षिणेऽग्नौ शतातृण्णां प्रतिष्ठापयत्यध्वर्युः ।

अथ पशुभिः प्रचर्य पुरोडाशैः प्रचरति । ***शृतꣳहवीꣳशशमितः*** इत्यादि । **सं ते मनसा -- -- अश्विभ्यां त्वा जुष्टमभिघारयामि ।** अन्यः पृषदाज्यमानयति आज्यं च । **सरस्वत्यै त्वा**

**जुष्टमभिघारयामि । इन्द्राय त्वा जुष्टमभिघारयामि । यस्त आत्मा** इति क्रमेण आज्येन पशूनभिघारयति । ***स्वाहोष्मण*** इत्यूष्माभिमन्त्रणं तन्त्रेण । उद्वासनं क्रमेण स्वेन स्वेन हृदयशूलेन सह । पञ्चहोत्रासादनं क्रमेण । **इदमिन्द्रियं** इति त्रिः । **अयं यज्ञो, ममाग्ने** पञ्चहोतेत्यासन्नाभि-मर्शनम् । अभ्यावर्तते मनोता । चतसृषूपस्तृणीते इत्यादि । जुह्वां दैवतान्यवदाय उपभृति स्विष्टकृदर्थं त्र्यङ्गान्यवदाय नाभिघारयति । समवत्तधान्यां तूर्ष्णीं षडाद्यानीडामवद्यति वनिष्ठुं सप्तमम् । अनस्थिभिरिडां वर्धयति नाभिघारयति । वसाहोमं गृहीत्वा अनवदानीयैः संमृश्य । अथ हविषा प्रचरति । ***अश्विभ्यां छागस्य हविषोऽनुब्रू३हि । अश्विभ्यां छागस्य हविषः प्रेष्य ।*** अर्धर्चे वसाहोमं कृत्वा न दिग्यागः । वसाहोमशेषमन्यत्र निधाय । वषट्कृते जुहोति । अश्विभ्यामिदम् । **अश्विनोरहं --- जेमानं --- गमेयम् ।** पुनः जुहूं वसाहोमहवनीं चोपस्तीर्य दैवतान्यवदाय, उपभृति हविष्येव त्र्यङ्गान्यवदाय नाभिघारयति । जुहूमभिघार्य, पूर्ववत् समवत्तधान्यां इडामवदाय नाभिघारयति वसाहोमं गृहीत्वा **ऐन्द्रः प्राण** इत्यन्तं कृत्वा ***सरस्वत्यै मेषस्य हविषोऽनुब्रू३हि । सरस्वत्यै मेषस्य हविषः प्रेष्य ।*** अर्धर्चे वसाहोमं कृत्वा न दिग्यागः । पूर्वशेषे उद्रेकं समवनयति । वषट्कृते जुहोति । सरस्वत्या इदम् । **सरस्वत्या अहं --- वाचमन्नाद्यं पुषेयम् ।** पुनः जुहूं वसाहोमहवनीं चोपस्तीर्य दैवतान्यवदाय, उपभृति हविष्येव त्र्यङ्गान्यवदाय हिरण्यशकलमुपरिष्टात् कृत्वा नाभिघारयति । जुहूमभिघार्य, पूर्ववत् समवत्तधान्यां इडामवदाय यूष्णोपसिञ्चति । नाभिघारयति । वसाहोमं गृहीत्वा **ऐन्द्रः प्राण** इत्यन्तं कृत्वा । ***इन्द्राय वृष्णोर्हविषोऽनुब्रूहि । इन्द्राय वृष्णोर्हविषः प्रेष्य ।*** अर्धर्चे वसाहोमं कृत्वा उद्रेकान्त्समवनीय **दिशस्स्वाहा** इत्यादि दिग्यागः । वषट्कृते जुहोति । इन्द्रायेदम् । **इन्द्रस्याहं ---जेमानं ---गमेयम् ।** ततः पुरोडाशैः प्रचरति । जुह्वामुपस्तीर्येत्यादि । ***इन्द्रायानुब्रूहि । इन्द्रं यज ।*** इन्द्रायेदम् । **इन्द्रस्याहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम् ।** ***सवित्रेऽनुब्रूहि । सवितारं यज ।*** सवित्र इदम् । **सवितुरहं--- अन्नादः ।** ***वरुणायानुब्रूहि । वरुणं यज ।*** वरुणायेदम् । **वरुणस्याहं-- अन्नादः ।** नारिष्ठान् हुत्वा, वनस्पति यागं कृत्वा । अथ पुरोडाशेभ्यः स्विष्टकृतमवद्यति तस्मिन्नेवोपभृति पशुस्स्विष्टकृता सह । पुरोडाशेभ्यः अवदाय अभिघारयति । जुह्वामौपभृतानि विपर्यस्यन्नाह ॥ **अग्नये स्विष्टकृतेऽनुब्रूहि । अग्नये स्विष्टकृते प्रेष्य ॥** अग्नये स्विष्टकृत इदम् । **अग्नेस्स्विष्टकृतोऽहं --- गमेयम् ।** वैश्वानरे हविः ।

ततः प्राशित्रम् । पुरोडाशेडां च पश्चिडया सहावदाय अभिघारणम्, यजमानभागवर्जम् । मार्जनान्ते सावित्रवारुणयोश्चतुर्धाकरणम् । अग्नीदौपयजानित्यादि । सर्वेषां गुदकाण्डैरुपयजति **समुद्रं गच्छत स्वाहान्तरिक्षं गच्छत स्वाहा** इत्यादि सर्वत्र ऊहः । अनूयाजान् इष्ट्वा प्रत्याक्रम्य स्वरूणां होमः **द्यां वो धूमो --- पृणध्वॅं स्वाहा** । स्वरुभ्य इदम् । जाघनीभिः पत्नीस्संया-जयन्ति । न पल्यञ्जलौ निनयनम् । न योक्त्रविमोकः । उपवेषोद्वासने कृते अवभृथस्य तन्त्रं प्रक्रमयति ॥

वारुणमेककपालं निर्वपति । या जाता ओषधय इत्यादि । तूष्णीं परिभोजिनीमुलपराजीं च । नेध्माहरणम् । वेदं कृत्वोपवेषः । अलङ्कृत्य परिस्तीर्य कर्मणे वामित्यादि । पात्रप्रयोगकाले स्फ्यमग्निहोत्रहणीवर्जान्यपरतः । एककपालं शूर्पं च द्वन्द्वम् । कृष्णाजिनादि षट्कम् । पुरतः पात्रीं मेक्षणम् मदन्त्यर्थमुपवेषमुत्पवनार्थं च द्वंद्वं प्रयुज्य । पवित्रकरणादि । **वरुणाय जुष्टं निर्वपामि । वरुण हव्यॅं रक्षस्व । वरुणाय वो जुष्टं प्रोक्षामि । वरुणाय जुष्टमधिवपामि** । प्रथमेन कपालमन्त्रेणैककपालमुपधाय । **भृगूणामङ्गिरसां तपसा तप्यस्व** कपालेऽङ्गारानध्यूह्य । **वरुणाय जुष्टॅं संवपामि** । आप्यलेपं बर्हिषि निनीय । स्फ्यं तिर्यञ्चं स्तब्ध्वा सम्प्रेष्यति ***प्रोक्षणीरासादयाज्येनोदे३हि*** । न प्रोक्षणीनामभिपूरणम् । उदञ्चं स्फ्यमपोह्य दक्षिणेन स्फ्यं असंस्पृष्टास्सर्वान्निनीय । **शतभृष्टिरसि** । ***अग्ने गृहपते । पूषा ते बिलम्*** । न प्रोक्षण्युत्पवनम् । न चाद्भिराज्यमाज्येन । चतुर्गृहीतान्याज्यानि पञ्चावत्तिनामपि । अननूयाजपक्षे आद्यैः चतुर्भिरुपभृति । यद्यनूयाजौ **पञ्चानां त्वा दिशां, पञ्चानां त्वा पञ्चजनानां, चरोस्त्वा पञ्चबिलस्य, ब्रह्मणस्त्वा तेजसे** इत्येतैश्चतुर्भिर्गृह्णाति । सुप्रजास्त्वायेति चतुर्ध्रुवायाम् । **अयं प्राणश्च । इदमहॅं सेनाया** इत्यादि । **वरुणाय जुष्टमभिघारयामि । स्योनं ते । देवस्त्वा** इति वारुणमलङ्कृत्योत्तरवेद्यंसे आज्यैस्सह तूष्णीमासादयति । न च आसन्नाभिमर्शनम् ।

अवभृथमवैष्यन् जुहुयात् **आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमॅं स्वाहा** ॥ आयुर्देऽग्नय इदम् । **अवभृथ निचङ्कुण नि चेरुरसि निचङ्कुणावदेवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृत-मुरोरानो देव रिषस्पाहि स्वाहा** ॥ अवभृथायेदम् । **नमो रुद्राय वास्तोष्पतये । आयने विद्रवणे । उद्याने यत्परायणे । आवर्तने विवर्तने । यो गोपायति तॅं हुवे स्वाहा** ॥

रुद्राय वास्तोष्पतय इदम् । अप उपस्पृश्य । स्रुवेण होमः । यस्मिन्नग्नौ हविश्श्रपणं तस्मिन्नेव होमः ।

**उरु९ं हि राजा --- हृदयाविधश्चित्** सर्वे सहपत्नीकाः हविराज्यानि हृदयशूलान् मासरं ग्रहपात्राणि सतं वालस्रावं श्येनपत्रं दध्यौदुम्बरशाखां च गृहीत्वा वेद्या अभिप्रयान्तो वदन्ति । न सामगानम् । **शतं ते राजन् --- प्रमुमुग्ध्यस्मत्** अपो दृष्ट्वा यजमानो जपति । अध्वर्युः – **सूर्यो वः पुरस्तात् ---- शस्त्याः** अपोऽभिमन्त्रयते । यजमानः – **युनज्मि वो ब्रह्मणा दैव्येन हव्यायास्मै वोढव आपः । इन्धाना वस्सुप्रजसस्सुवीरा ज्योग्जीवेम बलिहृतो वयं वः । यन्म आपो अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णवः ॥ तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे ॥ तेजिष्ठा वस्तपना या च रोचना प्रत्योषन्तीस्तनुवो या व आपः । ताभिर्वर्माण्यभितो व्ययध्वं मा वो दभन्, यज्ञहनः पिशाचाः** अभिमन्त्रयते । **अभिष्ठितो वरुणस्य पाशः** उदकान्तमभितिष्ठन्ते । अपः प्रगाह्य तिष्ठन्तोऽवभृथेन चरन्ति । तृणं प्रहृत्य स्रौवमाघारयति । यदि वा पुरा तृणं स्यात्तस्मिन् जुहुयात् । **आ प्यायताम्** । *अग्नीदपस्त्रिस्सम्मृड्ढि* इति सम्प्रेष्यति । आग्नीध्रः – **आपो वाजजितो वाजं वस्सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै सम्माजर्म्यपो अन्नादा अन्नाद्याय** अपः प्राञ्चं त्रिस्सम्मार्ष्टि । **भुवनमसि विप्रथस्वापो यष्ट्र्य इदं नमः** । जुह्वेहीत्यादि । नाग्नाविष्णू । **अग्नेरनीकमप आविवेश । अपान्नपात् प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्ने । प्रति ते जिह्वामुच्चरण्येत् स्वाहा** स्रुच्यमाघारयति । यजमानः – **वागस्याग्नेयी सपत्नक्षयणी** इत्यनुमन्त्रयते । अग्नय इदम् । लुप्यते प्रवरः । घृतवति शब्द इत्यादि । त्रीन् प्रयाजानिष्ट्वा औपभृतं सर्वमानयति । अनूयाजपक्षे अर्धमानयति । पञ्चममेव इष्ट्वा शेषेण ध्रुवामभिघार्य वारुणमभिघारयति । नोपभृतं अननूयाजपक्षे । अनूयाजपक्षे उपभृतमन्ततः । आज्यभागाविष्ट्वा । ***वरुणायानुब्रू३हि*** । ***वरुणं यज*** । वरुणायेदम् । **वरुणस्याहं देवयज्ययान्नादो भूयासम्** । नारिष्ठान् हुत्वा । जुह्वामुपस्तीर्य कृत्स्नं पुरोडाशमवदाय द्विरभिघार्य स्विष्टकृतौ ध्रौव समाप्तिः ***अग्नीवरुणाभ्यामनुब्रू३हि । अग्नीवरुणौ यज*** । अग्नीवरुणाभ्यामिदम् । **अग्नीवरुणयोरहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयम्** । अग्नीवरुणौ स्विष्टकृदर्थे यजति । अननूयाजपक्षे नोत्तरं क्रियते । अत्रैवेष्टिसमाप्तिः । अनूयाजपक्षे ***अग्नीदपस्सकृत् सम्मृड्ढीति*** सम्प्रेष्यति । आग्नीध्रः **आपो वाजजितो वाजं वस्ससृषीर्वाजं जिग्युषीर्वाजिनीर्वाजजितो वाजजित्यायै**

**सं माज्र्म्यपो अन्नादा अन्नाद्याय** सकृदपस्स्फ्येनैव सम्मार्ष्टि । औपभृतं जुह्वामानीय । अपबर्हिषावनूयाजौ यजति । देवौ यजेति प्रथमं संप्रेष्यति । यजेत्युत्तरम् । अत्र इष्टिस्समाप्यते ।

मासरं[२३] दध्ना औदुम्बरशाखया तूष्णीं प्रोक्षति । मासरस्य स्रुचं पूरयित्वा **समुद्रे ते --- विधेम** इति अप्सूपमारयति । ततो यो भिन्दुः उत्प्लवते तं तूष्णीमुपस्पृशेत् । **यस्ते देववरुण गायत्रच्छन्दाः पाशः । तं त एतेनावयजे स्वाहा** आश्विनपात्रमवभृथे प्रविध्यति ॥ **यस्ते देववरुण त्रिष्टुप्छन्दाः पाशः । तं त एतेनावयजे स्वाहा** सारस्वतम् ॥ **यस्ते देववरुण जगती छन्दाः पाशः । तं त एतेनावयजे स्वाहा** ऐन्द्रम् ॥ ***यस्ते देववरुणानुष्टुप्छन्दाः पाशः । तं त एतेनावयजे स्वाहा*** सतं वालस्रावं श्येनपत्रं च ॥ ***यस्ते देववरुण पङ्क्तिश्छन्दाः पाशः । तं त एतेनावयजे स्वाहा*** हृदयशूलान् ॥ **इमं विष्यामि --- पत्या करोमि** पत्नी योक्त्रं वि सृजते । अन्ये वाससी परिधाय योक्त्रं वाससी चावभृथे प्रविध्य । **देवीराप एष --- सुकृतो ब्रूतात्** अवभृथं यजमानोऽभिमन्त्र्य । **सुमित्रा न आप --- वयं द्विष्मः** अपः प्रगाह्य सशिरस्कावनुपमक्षन्तौ स्नातः पत्नी यजमानश्च । अन्योन्यस्य पृष्ठे प्रधावतः । न यद्दिदीक्षे । अहते वसानौ तीरमागच्छतः । **उद्वयं तमसस्परि --- ज्योतिरुत्तमम्** इत्यादित्यमुपस्थाय । **प्रतियुतो --- वरुणस्य पाशः** उदकान्तं प्रत्यसित्वा । पुनरप्सु प्रविश्य । समित्पाणयः तूष्णीमप्रतीक्षमायन्ति । **एधोऽस्येधिषीमहि । समिदसि । तेजोऽसि तेजो मयि धेहि** आहवनीये तिस्रस्समिध आधाय । **अपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसा** इत्युपतिष्ठन्ते । ब्रह्मा ***अयाडग्निः*** इत्युपस्थाय यथेतं प्रति निष्क्रामति । यजमानः **अग्निना देवेन** इत्यादि गोमज्जपान्ते[२४]। **नमस्स्वरुभ्यः** इति यूपमुपस्थाय । **यज्ञ शं च म** इति जपति । ब्राह्मणतर्पणान्तम् । सन्तिष्ठते चरकसौत्रामणिः ॥

## ॥ इति अङ्गसौत्रामणिप्रयोगः ॥



---

२३. ईषत्तप्तानां यवानां सूक्ष्मं चूर्णं दध्ना तक्रेण वा मिश्रितं दर्भैः प्रच्छन्नं मासरमित्युच्यते इति सायणभाष्यम् ।
२४. तूष्णीं चतुरो विष्णुक्रमान् प्राचो क्रामति इति द्रा. प्र ।

# ॥ मैत्रावरुणी आमिक्षा ॥

अनन्तरे पर्वणि मैत्रावरुण्यामिक्षया यजेत । श्री परमेश्वरप्रीत्यर्थं अग्निचयनाङ्गमैत्रावरुण्यामिक्षया यक्ष्ये । **विद्युदसि** । अग्नीनन्वाधाय शाखामाहृत्य व्रतप्रवेशः । प्रकृतिवदिद्ध्माबर्हिराहरणम् । उत्तरेण गार्हपत्यमित्यादि । नेध्मप्रव्रश्चनम् । वेदं कृत्वा वेदिः । अन्तर्वेदिशाखाया इत्यादि । न पर्णवल्कः । कुम्भीलेपनान्तम् । **इमौ पर्णं च । वायवस्स्थः । परिस्तृणीत, देवा देवेषु, कर्मणे वाम्** । पात्रप्रयोगकाले स्फ्यमग्निहोत्रहवणी–मपरतः । स्रुवं जुहूं उपभृतं ध्रुवां वेदमाज्यस्थालीमिडापात्रं योक्त्रं वेदाग्राण्यन्वाहार्यस्थालीमुपवेषं प्रातर्दोहपात्राणि वाजिनपात्रं च प्रयुज्य । पवित्रे कृत्वा ब्रह्मवरणम् । **सं विशन्ताम्, अग्निꣳ होतारम्, कस्त्वा युनक्ति स त्वा युनक्तु** । प्रोक्षणीस्संस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्ष्य प्रोक्षणीशेषं निधाय । **एता आचरन्ति** इत्यादि । **कामधुक्षः प्र णो ब्रूहि मित्रावरुणाभ्यां हविरिन्द्रियम्** । *बहुदुग्धि मित्रावरुणाभ्यां देवेभ्यो हव्यम्* ॥ सङ्क्षालननिनयनान्तम् । तप्ते प्रातर्दोहे लौकिकं दध्यानयति । **अन्तरितम्, अविदहन्तः श्रपयत** । ***ब्रह्मन्नुत्तरं*** इत्यादि प्राशित्रवर्जं स्रुक् संमार्गः । विष्णूनि स्थेत्यन्तम् । **यस्त आत्मा** इत्यभिघार्य । **दृꣳह** इत्युद्वास्य । अभुक्तेन वाससा संशोध्य । यत्संवर्तते सामिश्खा यदन्यत्तद्वाजिनम् । आमिक्षां द्वयोः पात्रयोरुद्धृत्य वाजिना एकदेशेनोपसिञ्चति । **प्रियेण** इत्यासादनम् । उत्करे वाजिनम् । **इदमिन्द्रियम्, अयं यज्ञो, ममाग्ने** पञ्चहोता इत्यासन्नाभिमर्शनम् । अयं वेद इत्यादि । प्रचरणकाले ***मित्रावरुणभ्यामनुब्रूहि मित्रावरुणौ यज*** । मित्रावरुणाभ्यामिदम् । **मित्रावरुणयोरहं देवयज्यया जेमानं महिमानं** । नारिष्ठान् हुत्वा स्विष्टकृदादि । अन्वाहार्यो दक्षिणा । संस्रावान्ते वाजिनयागः । **यज्ञो बभूव । यज्ञ शं च म** वर्जम् । ब्राह्मणतर्पणान्तम् । इष्टिः सन्तिष्ठते ॥

**आमिक्षा सद्य एव स्याल्लौकिकेन हि तच्यते ।**
**प्रसूमयाद्यामिक्षायां नेष्यते केचिदत्र तु ।**
**ऋत्वन्ते पर्वणोर्वाऽङ्गसौत्रामण्याः क्रिया भवेत् ॥**

## ॥ इति मैत्रावरुणी आमिक्षा ॥



# ॥ प्रस्तोतुः चितेरुपस्थानस्य प्रयोगः ॥

मण्डूकविकर्षणान्ते अग्नेर्दक्षिणतो गत्वा शिरसि प्रत्यङ्मुखस्तिष्ठन् अग्न आयूंषीति त्रिवृद्रायत्रं निरुक्तं गायति[१]। प्रत्यागत्य दक्षिणपक्षे उदङ्मुखस्तिष्ठन् रथन्तरं तृचं गायेत् । ततः पुच्छस्य पश्चिमेन गत्वा उत्तरे पक्षे दक्षिणामुखः पश्चात्प्राङ्मुखो वा बृहत्तृचं गायेत् । प्रत्याव्रज्य पुच्छे यज्ञायज्ञियं तृचं गायेत् संवत्सरो दैक्षस्सौत्यो वा यथा तापश्चितगवामयनादिषु । अन्यत्र ज्योतिष्टोमादौ ऋतुस्थायज्ञायज्ञियं त्रिः । प्रजापतिर्बृहत्तवः । दक्षिणपक्षस्य पश्चाद्वामदेव्यं तृचं प्रजापतेर्हृदयमुत्तरस्याम्[२]। ऋषिदेवते प्रजापतिः । आक्रमणीष्टकासमीपे श्यैतं तृचं गायेत् । रथचक्रचितौ पक्षपुच्छाद्यभावे तत्प्रदेशे गानमिति विशेषः । समानमग्निष्टोमेन । सोऽयं रथन्तरपृष्ठो बृहद्वासन्त इति । बृहती छन्द ऋषिः प्रजापती रुद्रो देवता । वामदेव्यं दक्षिणेऽपि कक्षे । प्रजापतेर्हृदयमुत्तरेऽपि कक्षे । अस्य नास्ति छन्द इति केचित् । ऋक्षु गानाभावात् । ऋषिः प्रजापतिर्देवता च । एवं गौतममतमिति । अध्वर्युपथे श्यैतं गायेत्तृचम् । आक्रमणीष्टकासमीपमध्वर्युपथः । गौतमीयपक्षेऽपि श्यैतमिच्छन्ति केचन । नेच्छन्त्यनुक्तत्वात् । प्रातस्सवने हुतायां वपायां धिष्ण्योपस्थाने समुद्रोऽसि विश्वव्यचा इति ब्रह्मणस्सदनस्योपस्थानम् । ब्रह्मसदनमिति धिष्ण्यम् । साग्निचित्ये ऋतावेव प्रशास्तृधिष्ण्यस्य दक्षिणतः ब्रह्मसदनं धिष्णियं भवति । शेषमग्निष्टोमवत् ।

**तत्र श्लोकाः –**

ब्रहद्रथन्तरेऽभ्यासे व्यत्यासेन प्रयोजयेत् ।
रथन्तरं सदैव स्यात् ब्रह्मणश्चेति केचन ॥
राजन्यस्य बृहत्कार्यं षोडशी तस्य गृह्यते ।
विश्वज्योतिधुरां चैव निवृत्तिस्तत्र चैव हि ॥
श्यैतस्य प्रथमाहारे पावमानस्य विश्वजित् ।
प्रतिपच्च तथाज्येषु विश्वेमिन्द्र ताहुवे ॥

---

१. 'अनिरुक्तगानं नाम केवलं प्रणवेनैव गानम् । निरुक्तगानं तु प्रत्यक्षरमृगक्षरेणैव गानम्' इति द्राह्यायणसूत्रस्य धन्विभाष्यम् (द्रा.श्रौ.सू=१–२–१–१४) ।

२. उत्तरपक्षस्य पश्चादित्यर्थः ।

कण्वस्य च तरं पृष्ठमभि त्वा शूर नो नुमः ।
आनो विश्वाविशीयं च ब्रह्मसाम तथैव च ॥
शिष्टं प्रकृतिवत्कार्यं विकृतिष्वग्निरिष्यते ।
प्रकृतावपि केचित्तु बौधायनमताश्रयात् ॥
मीमांसका केचन तत्राप्यस्तीति द्राह्यायणसूत्रात् ॥

## ॥ इति प्रयोगस्समाप्तः ॥



## ॥ सस्वराः वसोर्धारानुमन्त्रणमन्त्राः ॥ (९३ पृष्ठे उक्ताः)

एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।

घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥

सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।

एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।

घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥

अभि प्रवन्त समनेव योषाः कल्याण्य१ः स्मयमानासो अग्निम् ।

घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।

यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।

इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥

धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्य१न्तरायुषि ।

अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ ऋ=४,५८,५-

# ॥ वासुदेवदीक्षितकृत–चयनकारिकाः ॥

द्वितीयस्य श्येनचितो वासुदेवाध्वरी सुधीः ।
तनोति भाष्यवृत्त्यादिरीत्या सङ्ग्रहकारिकाः ॥ १
पर्वण्येकाष्टकायां वा सङ्कल्पो विकृतेः क्रतोः ।
अमुना साग्निचित्येनेत्युक्त्वा पृष्ठाद्युदाहृतिः ॥ २
विद्युत्सोमप्रवाकस्य वरणादि तु सौमिकम् ।
सक्षेदान्ते विहृत्याग्निं बृहस्पत्यादिनाहुतिः ॥[१] ३
तूष्णीं स्रुक्स्रुवसम्मार्गश्चतुर्वाज्यस्य गृह्यते ।[२]
चतुर्गृहीतमपरमृचा स्तोमेति हूयते ॥[३] ४
देवस्याभ्रिर्बभ्रिरसि हस्त आधाय चेत्यपि ।
ददेऽङ्गिरस्वदित्यन्तैरभ्र्यादानं सकृन्मतम् ॥ ५
विपाजसान्तं धार्योऽग्निश्छागादिः[४] खरकार्यभाक् ।
गच्छन्त्यच्छेहि पर्यन्तैरग्निमादि पुनर्जपेत्[५] ॥ ६
यज्वा बहुत्वे ब्रह्मा चाच्छेमः पाप्मानमादिशेत् ।
वल्मीकोद्धननं तूष्णीं मन्त्रेण तदुपस्थितिः ॥ ७
पूर्वदक्षिणपादेन त्वश्वमाक्रमयेन्मृदम्[६] ।
अभिष्ठितोऽसि पाप्मानं इति ध्यानमथाहुतिः[७] ॥ ८

---

१. बृहस्पत्यादिशहुतिः इति पाठा० । २. चतुस्त्वाज्यस्य इति पाठा० । अष्टगृहीतं गृहीत्वा जुहोति इति सूत्रे उक्तम् । तैत्तिरीयश्रुतौ तु चतुर्गृहीतेन जुहोति इत्युक्तत्वात् सूत्रोक्तस्य अष्टगृहीतस्य सिद्धवत् कृत्वा कारिकायां चतुर्वाज्यस्य गृह्यते इति पक्षो दर्शितः । ३. चतुर्गृहीतमपरं तदग्नावेव हूयते इति पाठा० ।

४. धार्योऽग्निश्चोखादिः इति R.M पाठः । अस्मिन् पाठे खरकार्यं (गर्दभेन मृदाहरणं) कृत्वा उखानिर्माणं सूच्यते । आदिशब्देन अषाढा इष्टका गृह्यते । अस्माभिराधृतेषु पञ्चसु मातृकाग्रन्थेषु चतुर्षु छागादिरित्येव पाठोऽस्ति । छागादिपदेन प्राणिसामान्यं गृह्यते । क्वचित् पर्वतप्रदेशेषु छागेनापि भारान् वाहयन्ति । 'छागेऽपि सम्भवत्येतत् वहत्येव हिमाचले' इति त्रिकाण्डमण्डनवचनात् (त्रि.का १–१२१) ।

५. अभिप्रव्रजने विनियुक्तोऽप्ययं मन्त्रोऽत्रापि विनियुज्यते इति केचित् । सौत्रो मन्त्र इत्यपरे ।

६. आक्रामयेत् इति क्वचित् प्रामादिकः पाठः ।

७. इति ध्यानं तु मानसम्, इति ध्यात्वात्मानमथाहुतिः इति पाठा० ।

प्रत्यृचं परि वाजेति लेखैकैका भवेदिह ।
अजस्रमिदिति प्रोच्य सहपर्णाजिनास्तृतिः ॥ ९

त्वामग्नादिर्यदा तिस्रः पुरीष्योऽस्यादिरन्यथा ।
पुरीष्यादिजनिष्वान्तैः उभयीभिर्यदाष्टभिः ॥ १०

सन्ते मन्त्रे वषट्काम्ये नित्ये देवि वडस्त्विति ।
बौधायनमते वक्रपक्षश्येनचितौ भवेत्[८] ॥ ११

रुद्रास्सम्भृत्य संसृष्टामित्येतौ याजमानकौ ।
मखस्येत्यादिमित्रैतामित्यन्तं स्यादुखाकृतः[९] ॥ १२

वसवस्त्वादिमन्त्रेषु त्वसि शब्देभ्य उत्तरम् ।
यजमानाय शब्दान्तं ध्रुवास्याद्यनुषज्यते[१०] ॥ १३

अषाढा चतुरश्रा स्याद्यदि स्यादृजुपक्षकः ।
वक्रश्श्येने पादिका स्यात्[११] वक्ष्यमाणप्रमाणका ॥ १४

गार्हपत्यादपोह्याग्निं धूपोऽपोह्य पुनः पचेत् ।
वरूत्रयस्त्वा तृतीयो जनयस्त्वा चतुर्थकः ॥ १५

देवीरादिपचन्तूखे इत्यन्तमुभयत्र तु ।
दर्शेनेष्ट्वा तु तदहरुखायास्सम्भृतिर्भवेत् ॥ १६

देवर्क्षयुक्च्छुक्लपक्षे वेति बौधायनो जगौ ।[१२]
पुरुषस्य शिरो नास्ति वायव्यः क्रियते यदा ॥ १७

प्राजापत्यो यदा पञ्च पशुकल्पस्तदा भवेत् ।
कलौ शिष्टविगर्हत्वादेष पक्ष उपेक्षितः ॥[१३] १८

पशुबन्धः पर्वणि स्यान्न स्यातां वृष्टिविद्युतौ ।
बौधायनमतात्तस्मिन्[१४] पूर्वपक्षेऽथवा पशुः ॥ १९

षड्ढोत्रादिसमं वायुर्नियुत्वानत्र देवता ।

---

८. नास्ति B.M & K.M पाठे । बौधायनमताद्वक्रश्येनाग्नावपि वट्क्रिया इति M.M पाठः ।
९. स्यादुखाकृतिः इति पाठा० । १०. ध्रुवासीत्यनुषज्यते इति M.M पाठः । ११. श्येने तु पाद्या स्यात् इति पाठा०
१२. देवर्क्षयुक् --- बौधायनो जगौ । पशुबन्धः --- वृष्टिविद्युतौ ॥ इति B.M पाठक्रमः ।
१३. शिष्टविगीतत्वादेष इति पाठा० । १४. बौधायनमतादस्मिन् इति B.M पाठः ।

सप्तविंशतिधेत्यूहः त्रिंशद्धेत्यथवा भवेत् ॥ २०
हिरण्यगर्भ आघारे समारभ्येति नैव हि ।
वागसीत्यत्र कायेति प्राजापत्येति वा भवेत् ॥ २१
प्राकृत्य एकादश तु प्र वो वाजादिका ऋचः ।
नवाग्निक्यः समास्त्वाद्या अमुत्रेति विनैव तु ॥ २२
अमुत्रभूयादुद्धृत्य रायो अग्न इति क्षिपेत्[१५] ।
तत उद्वयमित्येका ता भवन्त्येकविंशतिः ॥ २३
चतुर्विंशति पक्षे तु पूर्ववद्विंशतिर्मता ।
ततश्चोपेम सृक्षीति[१६] तिस्रोऽथोद्वयमित्यपि ॥ २४
प्राजापत्यः पुरोडाशः स्याद्द्वादशकपालकः ।
कपालयुग्ममन्त्राणां द्विर्द्विरावृत्तिरिष्यते ॥ २५
धर्त्रं चिन्मरुतां शर्धः चितस्स्थेति तु युग्मकाः ।
आग्नेयस्य विकारस्स्यादुपांश्वेव प्रचर्यताम् ॥ २६
विहारभेदादेतस्मिन् पाशुकी दक्षिणा मता ।
सर्वेषां शिरसां स्थाने वायव्यः स्याद्यदा तदा ॥ २७
ऐन्द्रः प्राणे शिरश्छित्वा घृतादभ्यज्यमेव तत् ।
क्रिमयस्स्युर्नैव यथा तथा रक्षेत् प्रयत्नतः ॥ २८
वायव्यो वा पशुः प्राजापत्यो वा केवलः पशुः ।
पुरुषाश्वबलीवर्दमेषछागशिरांसि तु ॥[१७] २९
हैमानि वा मृन्मयानि कार्याण्युभयथापि तु ।
बौधायनादिसूत्रेषु[१८] स्पष्टमेतदुदीरितम् ॥ ३०
पशुं त्वन्यतरं शुक्लपक्षे बोधायनो जगौ ।
यदि हैमं मृन्मयं वा पुरुषस्य शिरो भवेत् ।[१९]
सप्तैकविंशतिं वेति संस्कारः स्यात् तदापि च ॥[१९] ३१

---

१५. रायो अग्नीति इति B.M पाठः । रायो अग्निरिति इति K.M पाठः ।
१६. उपेम सिक्षेति इति कक। सृक्षेति इति B.M पाठः ।
१७.नास्ति B.M & M.M पाठे ।
१८. कात्यायनादिसूत्रेषु इति M.M पाठः ।
१९.नास्ति B.M पाठे ।

सूत्रोक्तकाले पश्वन्ते कर्तव्या घर्मसम्भृतिः ।
घर्मेष्टका च विज्ञेया कुलायिन्यपि पादिका ।[२०]
कारयेदिष्टकाः पूर्वं तासां तु करणीं ब्रुवे ॥* ३२

***B.M पाठे एष क्रमः**

विहारभेदादेतस्मिन् पाशुकी दक्षिणा मता ।
प्राजापत्यो यदा पञ्च पशुकल्पस्तदा भवेत् ।
कलौ शिष्टविगीतत्वादेष पक्ष उपेक्षितः ॥
वायव्यो वा पशुः प्राजापत्यो वा केवलः पशुः ।
हैमानि वा मृन्मयानि शिरांस्युभयथापि तु ।
कात्यायनादिसूत्रेषु स्पष्टमेतदुदीरितम् ॥
पाशुत्वन्यतरं शुक्लपक्षे[२१] बोधायनो जगौ ।
सर्वेषां शिरसां स्थाने वायव्यं स्याद्यदा तदा ॥
ऐन्द्रः प्राणे शिरश्छित्वा घृताद्यभ्यज्यमेव तत्[२२] ।
क्रिमयस्स्युर्न च यथा तथा रक्षेत् प्रयत्नतः ।
सूत्रोक्तकाले पश्वन्ते कर्तव्या घर्मसम्भृतिः ॥[२३]
कारयेदिष्टकाः पूर्वं तासां तु करणीं ब्रुवे ॥

## ॥ इष्टकानां करण्यः ॥

समस्थितश्चोर्ध्वबाहुः यजमानस्तु पूरुषः ।
पुरुषस्य चतुर्थोऽशः प्रक्रमस्त्रिंशदङ्गुलः ॥ ३३
अष्टमोंऽशः पदं ज्ञेयं तच्च पञ्चदशाङ्गुलम् ।
तस्यैव षोडशांशस्तु सार्धसप्ताङ्गुलं स्मृतम् ॥[२४] ३४

---

२०. नास्ति B.M पाठे।
२१ पशुरन्यतरं शुक्त्वा(क्ल)पक्षे इति K.M पाठः ।
२२. घृताद्यभ्यक्तमेव तत् इति K.M पाठः ।
२३. K.M पाठे अत्र घर्मेष्टका च --- पादिका इति वाक्यं विद्यते ।
२४. सप्ताङ्गुलं विदुः इति B.M & M.M पाठः ।

पञ्चमः पुरुषांशस्तु चतुर्विंशतिकाङ्गुलः ।
स एवारत्निरित्युक्तः प्रादेशस्तु तदर्धकः । ३५
प्रादेशस्य द्वादशांशो भवेदङ्गुलिसंज्ञकः[२५] ।
पञ्चारत्निस्तु पुरुषः स्याद्विंशतिशताङ्गुलः ॥ ३६
षोडशी नाम करणी सा चतुष्फलका मता ।
तत्र पश्चिमपार्श्वं तु त्रिंशदङ्गुलमिष्यते ॥ ३७
अथ दक्षिणपार्श्वं तु भवेत्पञ्चदशाङ्गुलम् ।
उदक्पार्श्वं पञ्चचत्वारिंशदङ्गुलमिष्यते ॥ ३८
चतुर्थं फलकं ताभ्यां श्लिष्टमीशदिगायतम्[२६] ।
द्विचत्वारिंशदङ्गुल्यः तिलाः सार्धचतुर्दश ॥ ३९
अर्ध्या तु सा[२७] त्रिफलका तत्र द्वे त्रिंशदङ्गुले ।
तृतीयं फलकं तत्र द्विचत्वारिंशदङ्गुलम् ॥ ४०
तिला अप्यधिकास्तत्र मतास्सार्धचतुर्दश ।
पाद्या त्रिफलका ज्ञेया तत्रैकं त्रिंशदङ्गुलम् ॥ ४१
एकविंशतिरङ्गुल्यो द्वयोः फलकयोर्मितिः ।
तिला अप्यधिकास्तत्र सप्तपादतिलाधिकाः ॥ ४२
पक्षेष्टका तु फलकैः चतुर्भिः परिगृह्यते ।
तत्र द्वे पार्श्वफलके त्रिंशदङ्गुलके मते ॥ ४३
तिरश्ची द्वे पञ्चतिलाधिकसप्तदशाङ्गुले[२८] ।
तत्र द्वे अक्ष्णयारज्जू एकस्यास्तु मितिर्मता ॥ ४४
चत्वारिंशच्चाङ्गुलानि स्युर्द्वादश तिला अपि ।
अन्या पञ्च तिलोपेता सप्तविंशतिकाङ्गुला ॥ ४५
पार्श्वयोस्त्वन्तरालस्य पुनरेषा मितिर्मता ।
पञ्चापि दश चाङ्गुल्यः तिला अष्टादशापि च ॥ ४६

---

२५. अङ्गुलिसंज्ञिकः M.M इति पाठः।
२६. शिष्टमीशदुदीरितम् इति पाठ० ।
२७. अर्ध्या तु स्यात् इति B.M पाठः ।
२८. पञ्चतिलाधिके सप्तदशाङ्गुले इति K.M पाठः

पक्षाकृतिं यथासूत्रं समभूमौ विलिख्य तु ।
तदिष्टकानुसारेण फलकानि तु योजयेत् ॥ ४७

षट्कोणा पक्षमध्यीया सा तु षट्फलका मता ।
पक्षेष्टकाद्वयक्षेत्रग्राहिणी परिकीर्तिता ॥ ४८

ईशानकोणायतदीर्घकर्णा
तथाग्निकोणायतदीर्घकर्णा ।
पक्षेष्टके प्रक्रमपार्श्वगाभ्यां
श्लिष्टे भवेतां तु तथाविधैषा ॥ ४९

तिरश्ची पूर्वफलके पक्ष्या तिर्यक्[२९] प्रमाणके ।
दक्षिणं फलकं तत्र स्यादीशानदिगायतम् ॥ ५०

तथोत्तरं तु फलकमग्निकोणायतं मतम् ।
पार्श्वस्थे फलके द्वे तु पक्ष्या पार्श्ववदेव हि ॥* ५१

***B.M मध्ये एष पाठक्रमः**

ईशानकोणायतदीर्घकर्णा
तथाग्निकोणायतदीर्घकर्णा ।
पक्षेष्टका प्रक्रमपार्श्वगा स्यात्
शिष्टे भवेतां तु तथाविधैषा ॥
तथोत्तरं तु फलकमग्निकोणायतं मतम् ।
पार्श्वस्थे फलके द्वे तु पक्ष्या पार्श्ववदेव हि ॥
तिरश्ची पूर्वफलके पक्ष्या तिर्यक् प्रमाणके ।
दक्षिणं फलकं तत्र स्यादीशानदिगायतम् ॥

तथोत्तरं तु फलकमग्निकोणायतं मतम् ।
पार्श्वयोस्त्वन्तरालस्य[३०] पुनरेषा मितिर्मता ॥ ५२

---

२९. पक्षतिर्यक् इति M.M पाठः ।
३०. पार्श्वयोरन्तरालं स्यात् इति B.M पाठः ।

अप्येकत्रिंशदङ्गुल्यः तिलौ द्वौ चाधिकौ मतौ ।
पक्षाग्रीया पञ्चकोणा फलकैः पञ्चभिर्युता[३१] ।
अर्ध्या पक्षेष्टका चेति क्षेत्रद्वितयशालिनी ॥ ५३

पक्षेष्टका दक्षिणतो निवेश्या
सा चाग्निकोणायतदीर्घकर्णा ।
तस्या उदक्प्रक्रमपार्श्वगाभ्यां
श्लिष्टाग्रका[३२] नैर्ऋताग्रका सा ॥ ५४

आग्नेयकोणायतदीर्घकर्णा
पश्चाद्गतप्रक्रमपार्श्वगान्तरा[३३] ।
यथेष्टकाद्वन्द्वमिदं[३४] निविष्टं
तथाविधैका करणी विधेया ॥ ५५

तत्र दक्षिणपार्श्वं तु पक्ष्यापार्श्वप्रमाणकम् ।
पूर्वापरे तिरश्ची[३५] तु पार्श्वे पक्ष्यावदेव तु ॥* ५६
अर्ध्यांशं पश्चिमं[३६] पार्श्वं त्रिंशदङ्गुलमेव तु ।

***M.M मध्ये एष पाठक्रमः ।**

पार्श्वस्थे फलके द्वे तु पक्ष्या पार्श्ववदेव हि ॥
तिरश्ची फलके पश्चात् पक्ष्या तिर्यक् प्रमाणके ।
दक्षिणं फलकं तत्र स्यादीशानदिगायतम् ॥
तथोत्तरं तु फलकमग्निकोणायतं मतम् ।
दक्षिणं फलकं तत्र स्यादीशानदिगायतम् ॥

पञ्चमं फलकं त्वर्ध्यासविशेषप्रमाणकम् ॥ ५७

---

३१. पञ्चभिर्मता इति M.M पाठः ।
३२. शिष्टाग्रका इति R.M पाठः । शिष्टार्धका इति B.M पाठः ।
३३. पार्श्वकान्तरा इति B.M & M.M पाठः ।
३४. यथेष्टका च द्वयमिदं इति B.M पाठः ।
३५. तिरश्चीके इति M.M पाठः ।
३६. अर्ध्यांशः पश्चिमः इति M.M पाठः ।

इत्येवं पञ्च फलका पक्षाग्रीया प्रकीर्तिता ।
साहस्रे तत्र षोडश्यः शतं द्विनवतिर्मताः ॥ ५८
अर्ध्याश्चतुश्शतं पाद्याः त्वष्टषष्टिशतं[३७] मताः ।
पक्षेष्टकाश्चतुष्षष्टिस्तथा शतचतुष्टयम् ॥ ५९
विंशतिः पक्षमध्यीयाः चतस्रश्च प्रकीर्तिताः ।
चत्वारिंशत्तथा चाष्टौ पक्षाग्रीयाः प्रकीर्तिताः ॥ ६०
सहस्रमिष्टका एवं साहस्रेऽग्नौ प्रकीर्तिताः ।
षडङ्गुल्यः किञ्चिदूनं चतुर्दशतिला अपि ॥ ६१
ऊर्ध्वप्रमाणं सर्वासामिष्टकानां भवेदिह ।
दश चोडा नाकसदः ता अर्धोत्सेधका मताः ॥ ६२
पक्षेष्टकाश्चतस्रस्ताः षट् च पाद्याः प्रकीर्तिताः ।
विकर्णी लम्बकर्णी स्याच्छिद्रकर्णीति केचन ॥ ६३
भवेद्विकर्ण्यां पाद्यायां तदाकृति विलेखनम् ।
गार्हपत्यस्य तु चितेः करणी वक्ष्यतेऽधुना ॥ ६४
तत्र द्वात्रिंशदङ्गुल्यः तिर्यक् फलकयोर्मितिः ।
पार्श्वयोस्तु द्वयोर्मानमङ्गुलानि त्रयोदश ॥ ६५
तिलाश्चतुर्विंशतिश्च तथा पादतिलोऽपि च ।
एवं चतुर्भिः फलकैः तद्दीर्घचतुरश्रकम् ॥ ६६
करणेनेष्टकास्तेन कार्या अष्टोत्तरं शतम् ।
तत्र तिस्रो नैर्ऋत्यः तुषपक्वाश्च ता मताः ॥ ६७
धिष्ण्याः पिशीलमात्राः स्युः पिशीलं बहुधा स्थितम् ।
अरत्निमात्रमेके तु शम्यामात्रं विदुः परे ॥ ६८
अन्ये बाह्वोरन्तरालं केचित्प्रादेशसम्मितम् ।
इति विप्रतिपद्यन्ते व्याख्यातारः पिशीलके ॥ ६९
अरत्निमात्रतामेषां स्फुटं[३८] बौधायनो जगौ ।

---

३७. त्वष्टषष्टिश्शतं इति R.M पाठः । ३८. अरत्निमात्रमेतेषां इति R.M पाठः ।

आर्षप्रमाणसंवादात् युज्यतेऽरत्निमात्रता ॥ ७०
आग्नीध्रीयं प्रागुदक्च विभजेत्तु त्रिधा त्रिधा ।
सर्वतोऽष्टाङ्गुलमित एकैको भाग इष्यते ॥ ७१
परितोऽष्टाविष्टकास्स्युर्मध्यतोऽश्ममयी मता ।
उदक् त्रिधा प्राक्चतुर्धा होतृधिष्णिये[39] विभाजिते ॥ ७२
एकैकस्य त्रिभागस्य[40] तिर्यङ्मान्यौ षडङ्गुले ।
अष्टाङ्गुले पार्श्वमान्यौ तदत्र द्वादशेष्टकाः ॥ ७३
उदक् त्रिधा तु विभजेत् ब्राह्मणाच्छंसिधिष्णियम् ।
द्वौ तत्र पश्चिमौ भागौ विभजेद्धोतृधिष्ण्यवत् ॥ ७४
पूर्वभागं तु विभजेदाग्नीध्रीयवदेव च ।
इति रीत्योरपरयोरेकैकस्यां चतुष्टयम् ॥ ७५
पूर्वरीतौ त्रयमिति मता एकादशेष्टकाः ।
मार्जालीयं प्राक्त्रिधा तु विभजेत्तु ह्युदग्द्विधा ॥ ७६
एकैकांशस्य[41] तिर्यङ्मान्यावष्टाङ्गुले मते ।
तत्र द्वे पार्श्वमान्यौ तु द्वादशाङ्गुलसम्मिते ॥ ७७
तदेवमत्र विज्ञेया मार्जालीये षडिष्टकाः ।
शास्तृधिष्ण्यं प्राक्चतुर्धा विभजेदप्युदग्द्विधा ॥ ७८
एकैकस्यात्र[42] भागस्य तिर्यङ्मान्यौ षडङ्गुले ।
द्वे तत्र पार्श्वमान्यौ तु द्वादशाङ्गुलसम्मिते ॥ ७९
प्रशास्तृधिष्ण्यगता इत्यष्टाविष्टका मताः[43] ।
पोतुस्तु शास्तृवन्नेष्टुरच्छावाकस्य धिष्णियाः ॥ ८०
चात्वालब्रह्मसदनशामित्रावभृथा अपि ।
उपधानक्रमस्त्वेषामुत्तरत्रैव वक्ष्यते ॥ ८१

---

३९. होतृधिष्ण्ये इति B.M & M.M पाठः ।
४०. एकैकस्यात्र भागस्य इति B.M पाठः ।
४१. एकैकस्यांशस्य इति R.M & K.M पाठः ।
४२. एकैकस्यास्य इति B.M, R.M & M.M पाठः ।
४३. शास्तृधिष्ण्यगतानां स्यात् ता अष्टाविष्टका मताः इति R. M पाठः ।

आग्नीध्रीयकरण्याश्मवर्जमेकादशेष्टकाः ।
होतृधिष्ण्यकरण्या तु मता विंशतिरिष्टकाः ॥[४४] ८२
मार्जालीयकरण्या तु तथा ज्ञेयाष्षडिष्टकाः ।
शास्तृधिष्ण्यकरण्या तु चतुष्षष्टिरिहेष्टकाः ।
धिष्ण्यानामिति विज्ञेया इष्टका द्व्यधिकं शतम् ॥ ८३
समाप्ते तु पशावेवमिष्टकानां प्रकल्पनम् ।
ततः सुत्यानुसारेण[४५] दीक्षोपक्रम इष्यते ॥ ८४
नैवमन्त्रेदमन्यस्मात् गृह एव तु दीक्षते ।[४६]
नान्दी च द्रव्यनिर्देशः सम्भाराहुतयस्ततः ।
सोमाय परिविष्याथ सप्तहोता विहृत्य तु ॥ ८५
पुनर्विहृत्य ऋत्वर्थं दक्षिणं पूर्वमप्यथ ।
स्वे दक्षे दीक्षणीयाथ गृहेष्वेव[४७] भवेदिह ॥ ८६
बौधायनमतादत्र शालायां दीक्षतेऽथवा ।
अग्निर्वैश्वानरः पूर्वमग्नाविष्णू ततोऽदितिः ॥ ८७
असँव्वत्सरदीक्षायामेष एव क्रमो मतः ।
युग्ममन्त्रं द्विरावृत्या भवेद्वैश्वानरोपधिः ॥ ८८
पिष्टं तण्डुलमुत्पूय देवस्त्वेति घृतोत्पवः ।
अन्या वा यजुषोत्पूय समापो अद्भिरग्मत ॥ ८९
वैश्वानरादित्ययोः स्यात् मन्त्रेणैवाभिघारणम् ।
तयोरेव च यज्ञोऽसि त्रेधाकरणमेव च ॥ ९०
वैश्वानरस्यान्नादस्स्यादग्नाविष्ण्वोस्तु वृत्रहा ।
अदित्यास्तु प्र प्रजया चेति वैकृतमिष्यते ॥ ९१
आज्येडाभक्षणान्ते तु स्याद्गोदानोन्दनादिकम् ।

---

४४. नास्ति BM पाठे ।
४५. ततः ऋत्वनुसारेण इति R.M पाठः । ततः सूत्रानुसारेण इति B.M पाठः।
४६. इति M.M पाठे अधिकः ।
४७. गृहेष्वेषा इति B.M पाठः ।

ध्रौवाद्दीक्षाहुतीस्सर्वाः सौमिकीराग्निकीरपि ॥ ९२
षडाग्निक्यस्त्वाहुतयो हूयन्तेऽध्वर्युणैव तु[४८] ।
पूर्णाहुतेरन्त एव ध्रौवं[४९] परिसमाप्यते ॥ ९३
अत्र पूर्णाहुतौ वातं प्राणमित्यनुमन्त्रणम् ।
स्यात्कृष्णाजिनदीक्षादि कर्मासम्भारवाचनात् ॥ ९४
ततश्शणकुलायेनेत्याद्युखायाः प्रवृञ्जनम् ।
तद्द्रवन्नस्सर्पिरन्तन्तु काम्येऽग्नौ नैव विद्यते[५०] ॥ ९५
सम्भारान्वाचयित्वैव उखायामाहवनीयकम् ।
उद्धृत्य तूष्णीं प्रक्षिप्य परस्या अधि तन्यते ॥ ९६
ऋजुपक्षोऽग्निः प्रकृतिः वयसां वा इति श्रुतेः ।
श्येनादयस्तु काम्या इत्यापस्तम्बमते स्थितम् ॥ ९७
ऋजुपक्षो वक्रपक्ष इत्यग्निः श्येनचिद्द्विधा[५१] ।
स चोभयविधोऽप्यग्निः प्रकृतिर्नित्य एव च ॥ ९८
श्येनाकृतिश्च नित्यैव काम्यादिखदिरादिवत् ।
श्येनाद्याकृतयस्सर्वाः नित्याः काम्या भवन्त्यपि ॥[५२] ९९
वेदाकृत्यादिवदिति स्फुटं बौधायनीयके ।
अकाम्यत्वे भवेत्तासु[५३] स्यादुखायाः प्रवृञ्जनम् ॥ १००
याजमानं दृशानादि सादयत्यन्तमिष्यते ।
तूष्णीमादानमुख्यस्य सुपर्णोऽसीति तूत्थितिः[५४] ॥ १०१
मुक्त्वा रुक्माजिने तूष्णीं शिक्यपाशं तु मन्त्रतः ।
तूष्णीं समीपमासन्द्या आहृत्याथोपतिष्ठते[५५] ॥ १०२

---

४८. अध्वर्युणेह तु इति B.M पाठः ।
४९. तत्र पूर्णाहुतावेव ध्रौवं इति M.M पाठः ।
५०. मा सु भित्थादि तु द्रवन्नः सर्पिरन्तं प्रवृञ्जनम् ।
छन्दः श्येनचिताद्यग्नौ काम्ये तन्नेह विद्यते इति M.M पाठः ।
५१. इत्यग्निश्येनचित् इति B.M & M.M पाठः ।
५२. नास्ति MM पाठे ।
५३. भवेत्तत्र इति M.M पाठः ।
५४. सुपर्णोऽसीति चोत्थितः इति K.M पाठः ।
५५. आ त्वाग्न इति च द्वाभ्यामुख्योपस्थितिरिष्यते इति M.M पाठः ।

येन देवा अथ स्वाहा यज्ञम्मुष्ट्यादि तन्यते[५६] ।
गृहीत्वा व्रतमादध्यात् समिधौ नोत्तराज्यते ॥ १०३
अर्धरात्रे व्रते प्रत्ते सनीहारविधौ कृते ।
प्रथमो दैक्षदिवसः समाप्यत इति स्थितिः ॥ १०४
श्वो भूते वाग्विसर्गे तु कृते कुर्याद्दिवस्परि ।
येन देवा व्रतं प्राग्वत् रात्रावग्ने त्वमित्यपि ॥ १०५

द्वितीयो दैक्षदिवसो यथाविधि समाप्यते ।[५७]

तृतीयेऽहनि तु प्रातः वाग्विसर्गे कृते सति ।
दृशानो रुक्म इत्यादि भवेदासादानात्समम् ॥ १०६
व्रतादि पूर्ववत्सर्वं दैक्षेऽहनि तृतीयके ।
प्रयाणं देवयजनं प्रति दैक्षेऽहनि क्वचित् ॥ १०७
दीक्षितस्य प्रयाणं तु नित्यं स्यात् साग्निके क्रतौ ।
प्राग्वंशे वा गृहे वात्र दीक्षा बौधायनोदिता ॥ १०८
प्रत्यक्षं शकटेनैव प्रयाणेऽग्नित्रयं नयेत् ।
प्रेदग्ने तु प्रयाणे स्यात् भद्रादभि निवर्तते ॥ १०९
शालामेदमगन्मेति प्राप्य स्वायतनेष्वथ ।
अग्नीन्निदध्युः तत्रोख्यमासन्द्यामेव सादयेत् ॥ ११०
घृतानुषिक्तां समिधमुख्याग्नावेव तु क्षिपेत् ।

एतदन्तो याजमानः प्रयाणादिकृतो विधिः ।[५८]

अनिरूहन्नुखां शिक्यादयोदर्व्याग्निमुद्धरेत् ॥ १११
उखायां प्रक्षिपेद्भस्म प्रसद्येत्यग्निना सह ।
स्वस्थाने स्थापिते तूख्ये येन देवा हि यज्वनः ॥ ११२
ततोऽध्वर्युः पुनस्त्वेति समिन्धे पुनरेव तम् ।

५६. स्वाहा यज्ञमित्यादि इति M.M पाठः ।
५७. इति M.M पाठे अधिकः पाठः ।
५८. इति M.M पाठे अधिकः पाठः ।

अथ क्रयाहे प्रातस्तु वाग्विसर्गे कृते सति ॥ ११३
दृशानो रुक्म इत्यादि येन देवा दिवस्परि ।
सासन्दीशिक्यमुख्याग्निमन्यत्र विनिधाय तु ॥ ११४
षण्णवत्यङ्गुलसमं चतुरश्रं विहृत्य तु ।
अपेत वीतेत्यादि स्यात्तिस्रस्तिस्रस्तु शर्कराः ॥[५९] ११५
स्थाप्याश्चतुस्तिलन्यून–पञ्चपञ्चाशदङ्गुले ।
चितस्स्थ सप्तकृत्वस्स्यात् सकृदेवेति केचन ।
व्रजं कृणुध्वमित्यन्ते शुल्बोपहितिरिष्यते ॥ ११६

## ॥ गार्हपत्यचितिः ॥

प्रस्तारे प्रथमे तिस्र उदगायतरीतयः ।
एकैकस्यां रीतिकायां सप्त प्रागायतेष्टकाः ॥ ११७
अथ द्वितीये प्रस्तारे प्राच्यस्तिस्रस्तु रीतयः ।
एकैकस्यां तु सप्त स्युरिष्टका उदगायताः ॥[६०] ११८

## प्रथमः प्रस्तारः

प्रस्तारे प्रथमे तत्र मन्त्रोपहितिरुच्यते ।
मध्यरीत्यां द्वितीयाद्याश्चतस्रोऽयं स आदिकाः ॥ ११९
पूर्वस्यामपरस्याञ्च चतुर्थी पञ्चमी तथा ।
इडामयं ते चिदसि परि चत्वार ईरिताः ॥[६१] १२०
ततो लोकंपृणाशिष्टास्त्रयोदश च ता मताः ।

| |
|---|
| उपधानेषु सर्वत्र तयादेवतमिष्यते ।<br>तयादेवतशब्देनोपधानं सन्निपातयेत् ॥[६२] |

---

५९. अपेत वीतेत्याद्येव कर्म तु प्रतिपद्यते । पार्श्वमानीषु सर्वासु तिस्रस्तिस्रस्तु शर्कराः॥ इति M.M पाठः ।
६०. M.M पाठे अयं श्लोकः युक्तमत्र विमृश्यतां इति वाक्यात् परं वर्तते ।
६१. नास्ति B.M & K.M पाठे । ६२. इति M.M पाठे अधिकः ।

उभाभ्यामपि मन्त्राभ्यामेकैका तु पृणा मता ॥ १२१

तयादेवतमेकं स्यादुभयोरपि मन्त्रयोः ।

लोकंपृणेत्यृचैकैकां सतयादेवतं तदा[६३] ॥ १२२

उपधायोपधायैव ता अस्येत्यभिमर्शनम् ।

इति सङ्कर्षसूत्रोक्तं सत्याषाढमतानुगम् ॥ १२३

अनुष्टुभानुचरतीत्यादिब्राह्मणसंमतम् ।

पक्षद्वयमिदं भाष्ये युक्तमत्र विमृश्यताम् ॥ १२४

## द्वितीयः प्रस्तारः

प्रस्तारे तु द्वितीये स्युः चतस्रोऽयं स आदिकाः ।

मध्यरीत्यां द्वितीयाद्यास्ततो द्वे पूर्वगे मते ॥ १२५

मध्यरीत्यामेव चाद्या द्वितीया तु तदुत्तरा ।

पुरीषान्ताः पञ्च चित्यो वाङ्म आसन्न चैव हि ॥ १२६

प्रथमावत् तृतीया च पञ्चमी च चितिर्मता ।

द्वितीयावच्चतुर्थी स्यादिति पञ्च चितिर्मता[६४] ॥ १२७

अजीजनन्निति चितेर्हस्ताभ्यामभिमर्शनम् ।

साकं हि शुचिनेत्यन्ते स्यूता देवेति पूरणम् ॥ १२८

शर्करायां तु निहितश्चेदुख्यस्सैव नीयते ।

अध्वर्युब्रह्मयज्वानः गच्छन्त्यथ नमस्सु ते ॥ १२९

ऊर्जं बिभ्रदथाध्वर्युः सर्वे शन्नो निवेशनः ।

ततश्चाहं त्वदस्मीति प्रायणीया वितन्यते ॥ १३०

शँय्युसंस्रावहोमान्ते वेदिमानं विधीयते ।

सौमिके वेदिमानेऽस्मिन् प्रक्रमस्त्रिदशाङ्गुलः ॥ १३१

वेदिश्चतुश्शिखण्डान्ता वि मिमेत्वादिका मता ।

---

६३. सतयादेवतान्तया इति B.M & M.M पाठाः ।

६४. इति पञ्चशतं मता, इति पञ्च चितयो मताः इति M.M पाठः ।

ततश्च प्रायणीयाया ध्रौवादित्यादि तन्यते ।
आतिथ्येडामार्जनान्ते त्वग्निमानं प्रकीर्तितम् ॥ १३२

## ॥ अग्निमानम् ॥

यूपावटीयतः पश्चादवशिष्य तु सञ्चरम् ।
शङ्कुस्स तु शिरोग्रीयः तत्पश्चात् प्रक्रमद्वये ॥ १३३
शिरोमूलीयशङ्कुस्स्यादथ तावभितोऽपि च ।
प्रक्रमे प्रक्रमे शङ्कुश्चतुरश्रं विहृत्य तु ॥ १३४
मध्यतः शङ्कुरेकैको दक्षिणोत्तरपार्श्वयोः ।
शङ्क्वोस्तयोः शिरोग्रीये स्पन्द्यामेकां नियम्य तु ॥ १३५
बहिस्पन्द्यामपच्छिन्द्यात् परिशिष्टन्तु तच्छिरः ।
शिरोमूलीयशङ्कोस्तु पश्चाद्द्विपुरुषे गते ॥ १३६
शङ्कुस्स आत्ममूलीयस्तौ शङ्कू अभितस्ततः ।
एकैकं शङ्कुमाहन्यात् नवत्यङ्गुलके गते ॥[६५] १३७
तद्दीर्घचतुरश्रं स्यादथ तद्दक्षिणांसतः ।[६५]
पश्चादुत्तरतश्च द्विप्रक्रमे तु गते सति ॥ १३८
शङ्कू निहत्य तु तयोः स्पन्द्यामेकां नियम्य तु ।
बहिस्पन्द्यामपच्छिन्द्यात्[६६] स्रक्तिमाग्नेयदिग्गताम् ॥ १३९
इतरस्रक्तयोऽप्येवमपच्छेद्या विपश्चिता ।
परिशिष्टस्स आत्मा स्यादथ तन्मूलशङ्कुतः ॥ १४०
प्रक्रमत्रितये पश्चात् पुच्छाग्रे शङ्कुरिष्यते ।
अभितस्तौ शङ्कवस्स्युः प्रक्रमेषु चतुर्ष्वपि ॥ १४१
तद्दीर्घचतुरश्रं तु विहरेदुदगायतम् ।
दक्षिणांसस्योत्तरतः शङ्कुस्स्यात् प्रक्रमत्रये ॥ १४२
तस्मिंश्च दक्षिणश्रोण्यामपि[६७] स्पन्द्यां नियम्य तु ।

---

६५. नास्ति BM पाठे वाक्यद्वयम् ।
६६. बहिस्पन्द्यमव इति M.M पाठः ।
६७. दक्षिणाश्रोणावपि इति B.M & M.M पाठः । दक्षिणश्रोणावपि इति K.M पाठः ।

बहिस्पन्द्यामपच्छिन्द्यादेवमेवांसमुत्तरम्[६८] ॥ १४३
परिशिष्टं भवेत्पुच्छं विस्तृताग्रञ्च तद्भवेत् ।
अपच्छेदान्तरालं यत् आत्मदक्षिणपार्श्वकम्[६९] ॥ १४४
शिष्टं पुरुषमात्रं तत् तस्य पूर्वापरान्तयोः ।
स्याद्दक्षिणत एकैकः सार्धसप्ताङ्गुलाधिके[७०] ॥ १४५
सप्तप्रक्रमके शङ्कुः तद्विहृत्योदगायतम् ।
चतुरश्रमथैतस्य पूर्वपश्चिमपार्श्वयोः ॥ १४६
मध्यतश्चिह्नयेत्प्राचीं रज्जुमायम्य[७०(अ)] चिह्नयोः ।
पश्चिमायाः पार्श्वमान्या आरभ्याथोत्तरान्ततः ॥ १४७
पुरुषोऽन्मितमायच्छेत् दण्डमग्निदिशं प्रति ।
स दण्डो यत्र निपतेद्रज्जौ तत्रैव चिह्नयेत्[७१] ॥ १४८
तत्र शङ्कुर्विनिहतो नितोद इति गीयते ।
पश्चिमायाः पार्श्वमान्या दक्षिणान्तोत्तरान्तयोः ॥ १४९
नितोदनाम्नि शङ्कौ च[७२] स्पन्द्यामायम्य तद्बहिः ।
अपच्छिद्य त्रिकोणं तत् पुरस्तात्परिगृह्यताम् ॥ १५०
पूर्वपार्श्वस्य मध्यात्तु रज्जुं प्राचीन्नियम्य च ।
पूर्वपार्श्वोत्तरान्तात्तु नियच्छेत् पुरुषं तथा ॥ १५१
स यत्र निपतेद्रज्जौ स नितोदः प्रकीर्तितः ।
अथ पूर्वस्य पार्श्वस्य दक्षिणान्तोत्तरान्तयोः ॥ १५२
नितोदनाम्नि शङ्कौ च[७३] स्पन्द्यामेकान्नियम्य तु ।
अन्तस्स्पन्द्यं परिग्राह्यमधिकन्तत्त्रिकोणकम्[७४] ॥ १५३

---

६८. अंस उत्तरः इति M.M पाठः । ६९. पार्श्वगम् इति B.M पाठः ।
७०. सप्ताङ्गुलेऽधिके इति B.M & M.M पाठः । ७०(अ). शङ्कुमायम्य इति पाठा० ।
७१. निपतत्तद्रज्जौ इति M.M पाठः । निपतेत्तद्रज्जौ तत्र चिह्नयोः इति B.M पाठः ।
७२. नितोदनात्म शङ्कौ च इति R.M पाठः ।
७३. नितोदनात्मशङ्कौ च इति R.M पाठः । स्पन्द्यामेतान्नियम्य च इति B.M पाठः ।
७४. अधिकं त्रिकोणगणकम् इति B.M पाठः ।

तिर्यङ्मान्या दक्षिणस्याश्शङ्क्वोः पूर्वापरान्तयोः ।
त्रयश्च शङ्कवो मध्ये प्रक्रमे प्रक्रमे मताः ॥ १५४
तेषां दक्षिणतश्शङ्कुरेकैकप्रक्रमे मतः ।
तानि प्रक्रममात्राणि चतुरश्राणि तेष्वथ ॥ १५५
चतुर्षु नैर्ऋतेशानशङ्क्वोः स्पन्द्यां नियम्य च ।
बहिस्पन्द्यमपच्छिन्द्यादग्निदिश्यदलानि तु ॥ १५६
एवमुत्तरपक्षेऽपि[७५] तत्रेशानदलानि च ।
बहिस्पन्द्यमपच्छिन्द्यादित्यग्निमितिरीरिता ।
आदौ रज्ज्वा विमायैवं वेणुना विमिमीत च ॥ १५७

## ॥ इति अग्निमानम् ॥[७६]

सजूरब्दादिमन्त्रेषु घृतेनेत्यनुषज्यते ।
अध्वर्युब्रह्मयज्वानो विमिताग्न्याक्रमे मताः ॥ १५८
सँव्वरत्रेति सम्प्रेष्य अध्वर्युपुरुषास्त्रयः ।
एकस्मादवटात्ते तु प्रभूतोदकपूरितात् ॥ १५९
आहावेषु तु सिञ्चेयुर्निष्कृताऽऽहावमन्त्रतः ।
क्षुद्रावटास्स्युराहावास्ते बलीवर्दसंख्यकाः ॥ १६०
प्रत्याहावन्तु मन्त्रस्स्यात् सकृदेवेति केचन ।
अध्वर्यवः पाययन्ति कीनाशा इति केचन ॥ १६१
द्वयोर्द्वयोरनडुहोरेकैकन्तु युगम्मतम् ।
सीरा युनक्त सीरा च सकृदुष्टारयोरपि[७७] ॥ १६२
शालामुखीये वर्माणि ब्रह्मा दक्षिणतस्सदा ।
मलिम्लुचेत्याक्रमणं कीनाशैः पुङ्गवैरपि ॥ १६३
केचित्तु ब्रह्मयज्वभ्यां सहैवाक्रमणं विदुः ।

---

७५. उत्तरपक्षोऽपि इति M.M पाठः ।
७६. केषुचित् मातृकाग्रन्थेष्वेवं पुष्पिकावाक्यमस्ति । तानाधृत्यैवास्माभिरपि शिरोनामान्त्यनाम च दत्तम् ।
७७. सकृदाष्टारयोरपि इति K.M पाठः ।

त्रिर्लाङ्गलं द्विश्च कामं सीता त्रितयकर्षणे ॥ १६४
पुच्छादारभ्य तिस्रस्तु सीताः प्रागपवर्गकाः ।
पक्षादारभ्य सीता तु प्रथमोदक्समाप्तिका ॥ १६५
द्वितीया विपरीता स्यात् तृतीयोदक्समाप्तिगा[७८] ।
दक्षिणाश्रोणितस्सीता उत्तरांसापवर्गकाः ॥ १६६
उत्तरां श्रोणिमारभ्य दक्षिणांसापवर्गकाः ।[७९]
स्याद्विमुच्यध्वमध्वर्योर्मन्त्रस्तु सकृदेवहि ॥ १६७
यजमानस्तानुदीच उत्सृज्यैव प्रयच्छति ।
रुद्राय गामित्यध्वर्योः तूष्णीं वा स्यात् प्रतिग्रहः ॥ १६८
सीतासु च द्वादशस्वप्येकैकमुदपात्रकम्[८०] ।
क्रमेण निनयेदेवमकृष्टे त्रितयं तथा[८१] ॥ १६९
एकैका ऋगिहैकैकबीजावापे क्रमान्मता ।
ऋचश्शिष्टा याः फलिनीरित्याद्यास्तु विकल्पिताः ॥ १७०
सन्नह्येदोषधीरिध्मे वापकालोत्तराहृताः[८२] ।
तथौषधिवनस्पत्योः सामिधेन्यन्त आहितिः[८३] ॥ १७१
तत्रौपसत्क एवेध्मः प्रथमः परिकीर्तितः ।
पश्चिमान्दिशमारभ्य दिग्भ्यो लोष्टान्त्समस्यति ॥ १७२
घृतेन सीतेति सकृत् वित्तायन्यादि तन्यते ।
भूतेभ्यस्त्वेत्युदूहान्तं ततश्चाग्ने तव श्रवः ॥ १७३
तिस्रस्तिस्रोऽन्तरालं च गार्हपत्यचितेरिव ।

---

७८. उदक्समाप्तिका इति M.M पाठः ।
७९. दक्षिणश्रोणितस्सीता उत्तरांसापवर्गगा ।
उत्तरश्रोणिमारभ्य दक्षिणांसापवर्गगा ॥ इति M.M पाठः । उत्तरश्रोणिमारभ्य इति B.M पाठः ।
८०. द्वादशसु चैकैक इति B.M पाठः ।
८१. अतुन्ने त्रितयं तथा इति B.M पाठः । अकृष्टनिनयं तथा इति K.M पाठः ।
८२. ओषधीमिध्मे --- आहृताम् । इति B.M , M.M , K.M पाठः ।
८३. वनस्पत्योः --- आहुतिः इति B.M पाठः ।

व्रजं कृणुध्वमिति तु नाभिमन्त्रणमिष्यते ॥ १७४
कालश्चेद्व्रतमत्र स्यात् ये देवा इति मन्त्रतः ।
सन्न्युप्ते उख्ये समिधौ व्रतकाले तु नैव हि ॥ १७५
तानूनप्त्रग्रहादिस्स्यात् सुब्रह्मण्याह्वयावधि ।
यदि यज्वैवोपधाता चित्यग्निप्रणयादि सः ॥ १७६
अपि वा तिस्र इत्येव पक्षोऽयं सुकरो मतः[८४] ।
पाद्याभिधानास्तिस्रस्तु विश्वज्योतिष ईरिताः ॥ १७७
चित्यग्निभ्यस्त्वनुब्रूयात् यज्वैवासत्रके क्रतौ ।
आश्वलायनसूत्रे तु विस्पष्टमिदमीरितम् ॥ १७८
अश्वश्श्वेतः पुरस्तात्स्यात् कृष्णस्तमनुनीयते ।
तमन्वध्वर्युयज्वानौ ब्रह्मा दक्षिणतो व्रजेत् ॥ १७९
तिष्ठेतामभितोऽश्वौ तौ श्वेताश्वस्तत्र दक्षिणः ।
प्रजापतिस्त्वेत्यादिस्स्यात् पाद्यात्राक्रमणी मता ॥ १८०
सा च पुच्छोत्तरांसाग्रे ततस्तत्त्वेति हूयते ।
वाङ्मेऽभ्यस्थाद्यदक्रन्द इत्यन्ते तु कृते सति ।
क्षेत्रादश्वेऽपगमिते शुल्बोपहितिरिष्यते ॥ १८१

## ॥ अथ शुल्बोपधानम् ॥

अर्ध्यापाद्याषोडशीनां दीर्घपार्श्वं भसंज्ञकम् ।
ह्रस्वयोः पार्श्वयोस्सन्धिरग्रं पाद्यार्धयोर्मतम् ॥ १८२
तत्र पुच्छे चतस्रस्स्युरुदगायतरीतयः ।
तत्र पुच्छाग्ररीतौ स्युः पाद्या दश च पञ्च च ॥ १८३
तत्र पश्चादष्ट पाद्याः प्रत्यग्भाः प्रागगताग्रकाः ।
पुरस्तादन्तरालेषु[८५] विपरीतास्तु सप्त ताः ॥ १८४
तत्पूर्वस्यां दक्षिणतः षोडशीन्दक्षिणाग्रकाम्[८६] ।

---

८४. सुलभो मतः इति R.M पाठः ।
८५. अन्तराले तु इति M.M पाठः ।
८६. षोडशी दक्षिणाग्रका इति M.M पाठः ।

प्रत्यग्भामुपधायाथ तदुदक्षोडशीयुगम् ॥ १८५
दक्षिणा षोडशी तत्र प्राग्भा स्यादुदगग्रका ।[८७]
उत्तरा विपरीता स्यात् तदुदक्षोडशीयुगम् ॥[८७] १८६
दक्षिणा षोडशी तत्र प्रत्यग्भा चोदगग्रका ।
उत्तरा विपरीतान्या तदुदक्चान्यषोडशी ॥[८८] १८७
प्रत्यग्भा चोदगग्रा च रीतिष्षट्षोडशी त्वियम् ।
तत्पूर्वरीतावभितः षोडश्यौ पूर्ववन्मते ॥ १८८
षोडशीयुगलं मध्ये तच्छिलष्टसविशेषकम् ।

| |
|---|
| दक्षिणा षोडशी तत्र प्राग्भा स्यादुदगग्रका ।<br>उत्तरा विपरीतान्या तदुदक् षोडशीयुतम् ॥[८९] |

प्राग्भा दक्षिणतस्तत्र विपरीता तदुत्तरा ॥ १८९
तृतीया रीतिरित्येवं चतुश्षोडशिका मता ।
तत्पूर्वरीतौ पाद्यास्स्युः पञ्च तिस्रोऽत्र पश्चिमाः ॥ १९०
प्रत्यग्भा विपरीते द्वे पुरस्तादन्तरालयोः ।
इति पुच्छे चतसृषु रीतिषु त्रिंशदिष्टकाः ॥ १९१
अथात्ममूले तिस्रस्स्युरुदगायतरीतयः ।
मूलरीतौ पञ्च पाद्याः पश्चाद्द्वे प्राग्गताग्रके ॥ १९२
अन्तराले तयोरेका प्रत्यगग्रा च सा मता ।
दक्षिणान्ते तथैका स्यादुत्तरान्ते तथापरा ॥[९०] १९३
तत्पूर्वरीतिः तृतीयपुच्छरीतिवदीरिता ।
षोडश्यावन्तिमे तत्र प्राग्भे बाह्यविशेषके ॥ १९४
तत्पूर्वस्यां रीतिकायां पाद्या एकादशेरिताः ।
तत्र पश्चात् प्राग्गताग्राः प्रत्यग्भाः पञ्च कीर्तिताः ॥ १९५

---

८७. नास्ति M.M पाठे वाक्यद्वयम् । ८८. नास्ति M.M पाठे ।
८९. इति R.M & K.M पाठे अधिकं वाक्यम् ।
९०. १९३ प्रभृति २०१ पर्यन्तं कारिकाः BM पाठे न विद्यन्ते ।

पुरस्तादन्तरालेषु चतस्रः प्रत्यगग्रकाः ।
अभितो द्वे प्रत्यगग्रे इत्येकादशपादिकाः ॥ १९६
इति विंशतिरात्मीयमूलरीतित्रयाश्रिताः ।
आत्मपूर्वान्तरीतिश्च पुच्छपूर्वान्तरीतिवत् ॥ १९७
तत्पश्चिमा तु पुच्छस्थरीतिकेव तृतीयका ।
तत्पश्चिमायां रीतौ तु पाद्या एकादशेरिताः ॥ १९८
तत्र प्रागग्रकाष्टौ स्युः पञ्च च प्रत्यग्रकाः ।
तदेवमात्मपूर्वान्ते[९१] मता विंशतिरिष्टकाः ॥ १९९
आत्मान्तराले पृष्ठ्यायां पुरस्तात्षोडशीयुगम् ।
पूर्वा तु षोडशि तस्मिन् उदग्भा प्रत्यगग्रका ॥ २००
पश्चिमा विपरीता स्यात् तत्पश्चात्षोडशीयुगौ ।
तत्र पूर्वा दक्षिणाभा प्रत्यगग्रा च सा मता ॥ २०१
पश्चिमा विपरीता स्याच्चतस्र इति मध्यमाः ।
षोडशीभिः चतसृभिरेवं दक्षिणरीतिका ॥ २०२
तस्या दक्षिणतो[९२] रीतौ पूर्वाभा दक्षिणाग्रकाः ।
षोडश्यस्तु चतस्रस्स्युरग्रैः संस्पृष्टपक्षकाः[९३] ॥ २०३
पृष्ठ्यारीतेरुत्तरस्यां[९४] पुरस्तात्षोडशीयुगम् ।
प्रत्यगग्रा दक्षिणाभा पूर्वाऽन्या तद्विलक्षणा ॥ २०४
तत्पश्चात्षोडशी द्वन्द्वं पूर्वात्र प्रत्यगग्रका ।
उदग्भा च तथाऽन्या तु विपरीताग्रभा मता ॥ २०५
षोडशीभिश्चतसृभिर्विज्ञेयैषाऽपि रीतिका ।
तस्या उत्तरतो रीतौ पूर्वाभाश्चोदगग्रकाः ॥ २०६
षोडश्यस्तु चतस्रस्स्युरग्रैः संस्पृष्टपक्षकाः ।[९५]

---

९१. तदेवं पूर्वमात्मान्ते इति B.M पाठः । ९२. तदस्या दक्षिणतो इति M.M पाठः ।
९३. संश्लिष्ट पक्षकाः इति M.M पाठः । ९४. पृष्ठ्यरीतेरुत्तस्यां इति पाठः ।
९५. B.M पाठे पूर्वत्र त्यक्ताः ये श्लोकाः तेऽत्र पठिताः ।

तदेवमात्मान्तराले मता विंशतिरिष्टकाः ॥ २०७
तदेवमात्मन्याहत्य विज्ञेयाष्षष्टिरिष्टकाः ।
शिरोमूले तु षोडश्यौ संश्लिष्टसविशेषके ॥ २०८
प्राग्भा तु दक्षिणा तत्र विपरीता तदुत्तरा ।
तत्पूर्वरीतौ द्वे पाद्ये प्रत्यग्भे प्रागगताग्रके ॥ २०९
अन्तराले तयोरेका प्राग्भा प्रत्यग्गताग्रका ।
अन्त्या शिरोऽग्रे प्रागग्रा पाद्या मूर्ध्नि षडिष्टकाः ॥ २१०
पुच्छात्मशिरसीत्येवं षोडशोदीच्यरीतयः ।
प्राचीसन्धिगतारीतिरात्मदक्षिणपक्षयोः ॥ २११
पक्षाग्रीयाश्चतस्रोऽस्यां[९६] विज्ञेया उदगग्रकाः ।
षोडशी सविशेषैस्ताः संश्लिष्टसविशेषकाः ॥ २१२
तासां दक्षिणतः पक्षे प्राच्यस्स्युः पञ्च रीतयः ।
एकैकस्यां रीतिकायामग्निदिग्दीर्घकर्णिकाः ॥ २१३
पक्षेष्टकाश्चतस्रस्स्युः ताश्च प्रागायता मताः ।
तासां दक्षिणतः प्राचीरीतिका पक्षमध्यतः[९७] ॥ २१४
चतस्रः पक्षमध्यीयास्तत्र स्युः प्राग्गताग्रकाः ।
तासां दक्षिणतः पञ्च रीत्यः प्रागायता मताः ॥ २१५
एकैकस्यां रीतिकायामीशदिग्दीर्घकर्णिकाः ।
पक्षेष्टकाश्चतस्रस्युः ताश्च प्रागायता मताः ॥ २१६
तासां दक्षिणतो रीतिः दक्षिणाग्रा इहेष्टकाः ।
पक्षाग्रीयाश्चतस्रस्स्युः पत्रा ह्यर्धांशकैस्तु ताः ॥ २१७
व्याप्ताः पश्चाद्गतास्त्रिंशदङ्गुलं पार्श्वमाश्रितैः[९८] ।
किञ्च पक्षेष्टकांशैस्ता ईशदिग्दीर्घकर्णिकैः ॥ २१८
पक्षान्तभागव्याप्तास्स्युः[९९] दक्षिणः पक्ष ईरितः ।

---

९६. चतस्रः स्युः इति M.M पाठः ।
९७. पक्षमध्यगाः इति पाठः ।
९८. अङ्गुला पार्श्वमाश्रितैः इति M.M पाठः ।
९९. भागं व्याप्तास्स्युः इति पाठः ।

इत्येवं दक्षिणे पक्षे द्विपञ्चाशत्स्युरिष्टकाः ॥ २१९
एवमुत्तरपक्षेऽपि योजनीया[१००] यथायथम् ।
तत्र चेशानदिग्दीर्घकर्णाः पक्ष्यास्तु दक्षिणाः ॥ २२०
आग्नेयदिग्दीर्घकर्णाः पक्ष्या उत्तरपार्श्वगाः ।
पक्षाग्रीयास्सन्धिकास्तु[१०१] भवेयुर्दक्षिणाग्रकाः ॥ २२१
षोडशी सविशेषैस्ताः संश्लिष्टसविशेषकाः ।
पक्षाग्रीया अन्तगास्तु भवेयुरुदगग्रकाः ॥ २२२
पक्षेष्टकांशास्तत्र[१०२] स्युरग्निदिग्दीर्घकर्णिकाः ।
षष्टिरात्मनि षण्मूर्ध्नि पक्षयोश्च चतुश्शतम् ॥ २२३
पुच्छस्था इष्टकास्त्रिंशदिति द्विशतमिष्टकाः ।
चत्वारिंशत्तु षोडश्यः षट्पञ्चाशत्तु पादिकाः ॥ २२४
अष्टौ तु पक्षमध्यीयाः पक्षाग्रियास्तु षोडश ।
पक्षेष्टकास्त्वशीतिस्स्युरिति द्विशतमिष्टकाः ॥ २२५
अमृन्मयेष्टका देशबाधिनीरवटे क्षिपेत् ।

## ॥ इति शुल्बोपधानम् ॥

शुल्बोपधाने तु कृतेऽपां पृष्ठमिति तन्यते ॥ २२६
पद्मपत्रं त्वन्तरिक्षमिति ध्यात्वोपधीयते ।
इष्टाहोत्रीय सामैव स्यादपान्निधिनामकम् ॥ २२७
आदित्यमण्डलं रुक्मः तच्छिद्रं मुक्तिवर्त्म च ।
हिरण्मयस्तु परमः पुरुषो रविमध्यगः ॥ २२८
इति ध्यात्वोपधीयेत भाष्यादौ दर्शनात्तथा ।
व्याघारमन्त्राः स्वाहान्ता हिरण्योपासनं न हि ॥ २२९
स्रुचोरुपहितिस्तूष्णीमस्मद्ब्राह्मणरीतितः[१०३] ।
अग्नेस्त्वेन्द्रस्य मन्त्राभ्यामिति शाखान्तरीयकम् ॥ २३०

---

१००. योजनीयो इति B.M, M.M & K.M पाठः ।
१०१. सन्धिगास्तु इति K.M पाठः ।
१०२. अंश्यास्तत्र इति R.M पाठः ।
१०३. तूष्णीं स्यात्तद्ब्राह्मण इति B.M पाठः ।

अग्निर्भुव इति द्वाभ्यां तूष्णीं पक्षेऽप्युपस्थितिः ।
अविद्वाननधीयानस्तस्य मन्त्रस्तु वाच्यते ॥ २३१

तयादेवतमुक्त्वाथ भूरित्युक्त्वोपधीयते ।
अविद्वान्यजमानस्य ददात्यध्वर्यवे वरान् ॥ २३२

मधुश्चेत्यादिमन्त्रेषु ऋतुशब्दादनन्तरम् ।
अग्नेरन्तःप्रभृतिको[१०४] विशन्त्वन्तोऽनुषज्यते ॥ २३३

ध्रुवे सीदतं मन्त्रस्स्याच्छैशिरावुपलक्षणम् ।
शैशिराविति तूद्धृत्य क्षिपेद्वासन्तिकाविति ॥ २३४

अरातीयत इत्यन्ता त्वषाढासीत्यृगादिमा ।[१०५]
न चावसानमन्त्रस्स्यात् यथापाठं प्रयुज्यते ॥[१०५] २३५

मुसलञ्चौदुम्बरं स्यादुत स्मेत्यवहन्यते ।
उलूखलं पूर्णमेव तण्डुलैरुपधीयते ॥ २३६

आत्ममूलात्तु पुरत उखा पञ्चदशाङ्गुले ।
आदित्यमथ वातस्याऽजस्रमिन्दुं तृतीयकम् ॥ २३७

वरूत्रिमथ यो अग्निः पञ्चैता द्व्यवसानकाः ।
अन्ते तयादेवतयोपदध्यादश्वादिशीर्षेषु न चाक्षिहोमौ[१०६] ॥ २३८

संवात्रतोऽक्षिहोमाविह चित्रमाप्राः ।[१०७]

उत्सर्गमन्त्रैरुपतिष्ठते तदन्त्यास्त्रयस्तु त्र्यवसानकास्स्युः ।
वायव्यशिरसि त्वेतैरुपधाय तु पञ्चभिः ॥ २३९

ततोऽक्षिकटयोर्हुत्वा ह्युत्सर्गैरुपतिष्ठते ।
नमो अस्त्वित्येकयैव ऋचा सर्पशिरो मतम् ॥ २४०

काम्येऽग्नौ यजुरेव स्यात् प्रकृतावुपधीयते ।
प्रत्यक्शिरा ऊर्ध्वबाहुः प्राक्पादा पुरुषाकृतिः ॥ २४१

प्रत्यङ्मुखस्तु पुरुषाकृतिँय्यज्वोपतिष्ठते ।

---

१०४. प्रभृतितः इति B.M & K.M पाठः ।

१०५. नास्ति M.M पाठे वाक्यद्वयम् ।

१०६. न चाक्षिहोमौ इति M.M पाठः ।

१०७. केवलं B.M पाठे वर्तते ।

पृष्टो दिवीति मन्त्रे तु न तयादेवतं भवेत् ॥ २४२
चितौ पुरीषं व्यूह्यैव वाङ्म इत्यवरोहति ।
अभिहोमाश्चितावेव हिरण्यमभि केचन ॥ २४३
सायं प्रवर्ग्योपसदौ सुब्रह्मण्याह्वयस्ततः ।
श्वेतमश्वन्नयन्त्यग्निं ऋत्विजस्तु प्रदक्षिणम् ।
साग्निचित्यस्यैकाहस्य षडैवोपसदा(दो) मताः ॥ २४४

त्र्युपसत्कत्वपक्षोऽपि बौधायनमते स्थितः ॥[१०८]

## अथ प्रथमा चितिः

अथास्या आदिमचितेर्मन्त्रोपहितिरुच्यते ।
पञ्चम्यन्त्याक्रमण्याख्या तुर्योपाद्या तु मण्डला ॥ २४५
अन्वारोहाभिधाने द्वे तुर्यरीत्यन्तगे मते ।
वामभृत्यथ विज्ञेया एकादश्यन्त्यषोडशी ॥ २४६
द्वितीयान्त्या तृतीयान्त्या षोडश्यौ तु सिचौ मते ।
द्वादश्यामन्तिमा पाद्या विश्वज्योतिः प्रकीर्तिता ॥ २४७
त्रयोदशीचतुर्दश्योः सँय्यान्यौ द्वे उपान्तिमे ।
पञ्चदश्यां च षोडश्याम्[१०९] अन्तिमे द्वे ऋतव्यके ॥ २४८
अथ रीतौ तु पञ्चम्यामषाढा मध्यमा मता ।
तस्यामेवादिमा[११०] घर्मा द्वितीया तु कुलायिनी ॥ २४९
षष्ठीमध्यमुखास्थानं वक्ष्यते पुरुषाकृतिः ।
द्वादश्याः पूर्वयोराद्ये द्वादश्यां त्रिचतुर्थके ॥ २५०
प्रागायताश्च षोडश्य आत्मदक्षिणपार्श्वगाः ।
सप्तम्यामावलौ तिस्रो द्वितीयाद्यास्तु पादिकाः ॥ २५१
अपरस्यामादिमा च प्रथमः पौरुषो गणः ।

१०८. इति M.M पाठेऽधिकः । १०९. पञ्चदश्याश्च षोडश्याश्च इति M.M पाठः ।
११०. पञ्चम्यामादिमा इति M.M पाठः ।

पाद्याश्चतस्रो द्वादश्यां ताः पूर्वोपहितोत्तराः ॥ २५२
प्रागायताश्च षोडश्यः पृष्ठ्यारीतिगता अपि ।
पाद्याश्चतस्रः सप्तम्यां ताः पूर्वोपहितोत्तराः ॥ २५३
इति द्वादशभिर्ज्ञेयो मध्यमः पौरुषो गणः ।
चतुर्दशीत्रयोदश्योरन्त्ये पाद्ये च पश्चिमे ॥ २५४
प्रागायताश्च षोडश्यः सप्तम्यां पादिकात्रयम् ।
अपरस्यामन्तिमा च तृतीयः पौरुषो गणः ॥ २५५
षोडश्यां पञ्चदश्यां च रीतौ द्वे आदिमे मते ।
पाद्ये अथ चतुर्दश्यां द्वितीया च तृतीयका ॥ २५६
त्रयोदश्यामुपाद्या च पञ्चापस्यास्तु पूर्वगाः ।
पूर्वपत्रस्योत्तरतः पञ्चापस्यास्तु दक्षिणाः ॥ २५७
आद्यायामादिमे द्वे च पूर्वरीतिषु[१११] चादिमाः ।
अपस्याः पञ्च विज्ञेयाः पश्चिमां दिशमाश्रिताः ॥ २५८
सव्यपक्षे पूर्वपत्रात्पञ्चापस्यास्तु दक्षिणाः ।
उपधेयास्तु विज्ञेया उत्तरां दिशमाश्रिताः ॥[११२] २५९
आयवाद्या द्वादश तु गणाश्शतमृषीष्टकाः ।
ताश्चोत्तरापवर्गास्तु प्रागपवर्गा यथायथम् ॥ २६०
आद्यरीतौ तृतीयाद्यास्त्रयोदश तु पादिकाः ।
द्वितीयस्यान्तु षोडश्यः चतस्रो मध्यतस्स्थिताः ॥ २६१
तृतीयस्यामपि तथा षोडश्यौ मध्यतः स्थिते ।
इति त्रयो गणाः पुच्छे मता नवदशेष्टकाः ॥[११३] २६२
अथ पक्षे दक्षिणेऽस्मिन् पूर्वे पत्रे विहाय तु ।
त्यक्त्वा च पूर्वोपहिताः पञ्चसंख्या अपस्यकाः ॥ २६३
अवशिष्टाः पञ्चचत्वारिंशत्तत्र वसन्ति याः ।

---

१११. आद्यायामादिमे तिस्रः पूर्वरीतिषु इति M.M पाठः । ११२ नास्ति B.M पाठे ।
११३. इति त्रयो ऋषिगणाः पुच्छे नवदशेष्टकाः इति B.M पाठः ।

एताः पञ्च गणा ज्ञेयाः क्षत्राद्यास्तु ऋषीष्टकाः ॥ २६४
अथ वामभृतः पश्चात्तिस्रषोडशिकास्स्थिताः ।
सव्यपक्षे मूलतश्च रीत्यः[११४] प्रागायता नव ॥ २६५
अपस्यावर्जमेतासु स्युष्षट्त्रिंशदृषीष्टकाः ।
चत्वारस्तत्र विज्ञेया इषिसीदादयो गणाः ॥ २६६
इत्येवं शतसङ्ख्याका उपधेया ऋषीष्टकाः ।
साहस्रेऽग्नाविह त्वेकः प्रस्तारः प्रथमाचितिः ॥ २६७
ऋषीष्टकाश्शतमिह प्राणापानभृतश्शतम् ।
परस्परं विकल्पन्ते सन्निवेशविरोधतः ॥ २६८
इति केचित्तत्तु युक्तं[११५] गणभेदप्रसङ्गतः ।
पूर्वस्यां दिशि मध्ये च पुरुषाकृतिसङ्क्रमात् ॥ २६९
द्वित्रिषाहस्रयोराद्या द्वित्रिप्रस्तारका चितिः ।
प्राणापानभृतां तत्र सन्निवेशो भविष्यति ॥ २७०
विभज्य ताः प्रतिदिशं[११६] निवेश्या इति वक्ष्यते ।
सन्तत्याद्यास्तत्र शिष्टा निवेश्यास्सम्भवादिह[११७] ॥ २७१
उदक्शिष्टास्सन्ततयः पूर्वे पत्रे विहाय तु ।
आत्मदक्षिणपार्श्वीये षोडशीनां चतुष्टयम् ॥ २७२
द्वादश्यामादिमा पाद्या पञ्च ताः स्युर्वशेष्टकाः ।
अधस्तात्त्रिवृदादीनां कुम्भास्स्युरनुसीतकम् ॥ २७३
द्विरावृत्या वा युगपद्वा द्वयोः[११८] पूरणं मतम् ।
द्वे इष्टके युगपत् तयादेवतमन्त्रके ॥ २७४

| पूर्वस्यां दिशि कुम्भस्तु पुरस्तात् कुम्भिका मता ।[११९] |
|---|

---

११४. तत्र मूलरीत्यः इति K.M. पाठः ।
११५. इति केचित्तन्न युक्तं इति B.M, M.M &K.M. पाठः।
११६. प्रतिचिति इति पाठः ।
११७. सम्भवेदिह इति R.M पाठः ।
११८. युगपद्वन्द्वयोः पूरणं मतम् इति K.M पाठः ।
११९. इति M.M पाठे अधिकः ।

हिरण्यशल्कौ युगपत् कुम्भी पूर्वा तु कुम्भतः ।
कुम्भं दक्षिणहस्तेन सव्यहस्तेन कुम्भिकाम् ॥ २७५
सह सम्पूर्योपदध्यादाह बौधायनस्स्फुटम् ।
कुम्भादुत्तरतः कुम्भी दक्षिणे पक्ष इष्यते ॥ २७६
पश्चिमायां तु सीतायां कुम्भी पूर्वा तु कुम्भतः ।
उत्तरस्यां तु सीतायां कुम्भात्कुम्भी तथोत्तरा ॥ २७७
कुम्भादीशानदिश्यत्र मध्यतः कुम्भिका मता ।
मध्येऽनुसीतं सीतायां कुम्भात्पूर्वा तु कुम्भिका[१२०] ॥ २७८
ध्रुवास्सीदत सर्वत्र ध्रुवे सीदतमेव वा ।[१२१]
कुम्भेष्टकानां युगपदभिमन्त्रणमिष्यते ॥ २७९
बृहस्पतय इत्येवं ध्यात्वा श्रप्यस्तु लौकिके ।
अथवा गार्हपत्येऽग्नौ बार्हस्पत्यश्चरुर्मतः ॥ २८०
शिरोग्रीया पक्षयोस्तु पत्रे च द्वे उपान्तिमे ।
सप्तम्यां तु मता रीतौ पाद्यैका दक्षिणान्तगा ॥ २८१
तृतीया च मता षष्ठ्यां चतुर्थ्यामपि मध्यमा ।

त्रिवृदाद्याष्षडेतास्स्युरुपधेयाः क्रमेण तु ।
एताष्षट् प्रतिदिशमिति भाष्ये तु भाषितम् ॥
एवं सति षडेता अप्यृषभान्ते पृणा मताः ।
षष्ठ्यां द्वितीयेष्टकां तूत्तरे ऋषभसंज्ञिका ॥[१२२]

त्रिवृदाद्याषड्द्वितीया षष्ठ्यामृषभसंज्ञिका ॥[१२३] २८२
षोडश्यां मध्यमा पाद्या द्वादश्यामप्युपादिमा ।

---

१२०. मध्येऽनुसीतं सीतायाः इति M M⁻ पाठः । पूर्वं तु कुम्भिका इति B.M पाठः
१२१. नास्ति B.M & K.M पाठे । १२२. इति M.M पाठेऽधिकाः ।
१२३. नास्ति M.M पाठे ।

दक्षिणे पूर्वपत्रं च पञ्चम्यामप्युपान्तिमा ॥ २८३
सव्यपक्षे पूर्वपत्रं पञ्च लोकंपृणा मताः ।
षट् सप्त वा भवेयुस्ताः पृणा रेतस्सिचां वशात् ॥ २८४
प्रथमेऽग्नौ वस्तुतस्तु प्राणापानभृतो न हि ।
तदूर्ध्वपतितास्सन्तत्याद्या अपि भवन्ति न ॥ २८५
बद्धक्रमत्वादेतेषामपकर्षो न युज्यते ।
ऋषीष्टकान्त ऋषभशिष्टास्सर्वाः पृणा इति ॥ २८६
भाष्यप्रयोगवृत्यादिग्रन्थस्थं तु मतं परम्[१२४] ।
प्राचीनकारिकाभासा गणभेदादिदूषिताः ॥ २८७
प्राचीनकारिकारीत्या पुरुषाकृतिकल्पने ।
उपान्तिमान्त्ययोर्मध्ये प्रविष्टाऽऽक्रमणी मता ॥ २८८
गणभेदास्सर्वथैव नैव भाष्यादिसम्मताः[१२५] ।
यदेकधेति[१२६] श्रुत्या च बौधायनमतादपि ॥ २८९
किञ्च दक्षिणपक्षीयमूलादारभ्य वर्णिताः ।
ऋषीष्टका दक्षिणापवर्गाः[१२७] प्राचीनपुङ्गवैः ॥ २९०
तथा पण्डितगोपालं विरुद्धं खलु दृश्यते ।
त्रिवृदादीष्टकानां च षण्णामुपहितिक्रमः ॥ २९१
सूत्रभाष्यविरुद्धत्वात् सर्वथोपेक्ष्य एव हि ।
अतो भाष्याद्यनुसृता अस्मदीयास्तु कारिकाः ।
संगृह्या सूक्ष्मधीभिस्तु परीक्ष्या[१२८] अनसूयिभिः ॥ २९२

## ॥ इति प्रथमा चितिः ॥

---

१२४. मतं वरं इति K.M पाठः ।
१२५. गणभेदः --- सम्मतः इति B.M & M.M पाठः ।
१२६. यदेकयेति इति K.M पाठः ।
१२७. दक्षिणा च वर्गाः इति R.M पाठः ।
१२८. सूक्ष्मधीभिस्सुपरीक्ष्या इति M.M पाठः ।

# ॥ अथ द्वितीयप्रस्तारस्य शुल्बोपधानम् ॥

अथ द्वितीये प्रस्तारे शुल्बोपहितिरुच्यते ।
पुच्छाग्ररीत्यामर्ध्यैका दक्षिणान्तगता मता ॥ २९३
सा वायव्यदिगग्रा स्यादाग्नेयाश्रितभाऽपि च ।
तदुत्तरा षोडाशी[१२९] स्यात्प्रत्यग्भा चोदगग्रका ॥ २९४
ईशानदिग्गताग्रार्ध्या[१३०] अथान्या चाग्निदिगग्रका ।
अथोत्तरा षोडशी स्यात्प्रत्यग्भा दक्षिणाग्रका ॥ २९५
तदुत्तरा षोडशी स्यात्प्रत्यग्भा चोदगग्रका ।
अर्ध्याद्वयं पूर्ववत्स्यादीशानाग्निदिगग्रकम् ॥ २९६
तदुत्तरा षोडशी स्यात्प्रत्यग्भा दक्षिणाग्रका ।
ततोऽर्ध्या सा नैर्ऋताग्रा पश्चाच्च त्रिंशदङ्गुला ॥ २९७
इति पुच्छाग्ररीतिस्तु विज्ञेयैषा दशेष्टका ।
पूर्वरीतौ दक्षिणतो वायव्याग्रार्धिका मता ॥ २९८
तदुत्तरा षोडाशी स्यात्प्रत्यग्भा चोदगग्रका ।[१३१]
तदुत्तरे तु षोडश्यौ पूर्वदिग्गतभे मते ॥ २९९
दक्षिणाग्रा दक्षिणा स्यादुत्तरा तूदगग्रका ।
तदुत्तरा षोडशी स्यात्प्रत्यग्भा दक्षिणाग्रका ॥ ३००
ततोऽर्ध्या सा नैर्ऋताग्रा पश्चाच्च त्रिंशदङ्गुला ।
द्वितीया रीतिरित्येवं विज्ञेयैषा षडिष्टका ॥[१३२] ३०१
पूर्वरीतौ दक्षिणतो वायव्याग्रार्धिका मता ।
तदुत्तरा षोडशी स्यादुदग्भा प्राग्गताग्रका ॥ ३०२
उत्तरान्या दक्षिणाभा ततोऽर्ध्या नैर्ऋताग्रका ।

---

१२९. अथोत्तरा षोडशी इति पाठा० । १३०. ईशानदिग्गताध्र्याग्रा इति M.M पाठः ।
१३१. ईशानदिग्गता प्रभृति प्रत्यग्भा चोदगग्रका पर्यन्तं B.M पाठे नास्ति ।
१३२. उत्तरान्ते अर्धिकैका नैर्ऋताग्रा च सा मता ।
अस्यां रीतौ द्वितीयस्यां विज्ञेयास्तु षडिष्टकाः इति M.M पाठः ।

तृतीया रीतिरित्येवं विज्ञेया चतुरिष्टका[१३३] ॥ ३०३
इति रीतित्रयगताः[१३४] पुच्छे विंशतिरिष्टकाः ।
अथात्मनि तु विज्ञेयाः षट्प्रागायतरीतयः ॥ ३०४
दक्षिणस्यां रीतिकायां पश्चादेका तु षोडशी ।
सा विज्ञेया प्रत्यगग्रा स्यात्किञ्चोत्तरभा मता ॥ ३०५
ततो मिथश्शिलष्टभं स्यादर्ध्या युगळमत्र तु ।
वायव्याग्रा भवेदेका द्वितीयाग्निदिगग्रका ॥ ३०६
एवं पुरस्तादपि द्वे अर्ध्ये युगळके मते ।[१३५]
पुरस्ताच्छोडशी सा स्यादुदग्भा प्रागगताग्रका ॥ ३०७
इति तु प्रथमा प्राचीरीतिरष्टेष्टका मता ।
उत्तरस्यामादितोऽर्ध्या स्यादीशानदिगग्रका ॥ ३०८
षोडशी तु ततः पूर्वा प्रागग्रोत्तरभा च सा ।
ततोऽर्ध्याऽग्निदिगग्रैका ततोऽर्ध्याऽयुगलानि तु ॥ ३०९
मिथः संश्लिष्टभानि स्युः तानि प्रथमरीतिवत् ।
ततोऽर्ध्या नैर्ऋताग्रैका ततष्षोडाशिका मता ॥ ३१०
सा प्रत्यगग्रा चोदग्भा वायव्याग्रा ततोऽर्धिका ।
इति द्वितीयरीतौ तु विज्ञेया द्वादशेष्टकाः ॥ ३११
तत उत्तरयो रीत्योः षोडश्यावादितो मते[१३६] ।
प्रत्यगग्रे दक्षिणाभा तत्र दक्षिणतो मता ॥ ३१२
उत्तरा स्यादुत्तराभा पुच्छव्याप्ते च ते उभे ।
ततो मिथश्शिलष्टभे द्वे षोडश्यौ प्रागगताग्रके ॥ ३१३
ताभ्यां श्लिष्टविशेषे द्वे षोडश्यौ प्रत्यगग्रके ।
दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ॥ ३१४

---

१३३. विज्ञेयाश्चतुरिष्टका इति R.M पाठः । १३४. इति रीतित्रितयगाः इति B.M & M.M पाठः।
१३५. एवं पुरस्तादपि च द्वे अर्ध्यायुगळे मते । इति B.M , M.M & K.M पाठः ।
१३६. षोडश्यावादिमे मते इति K.M पाठः ।

ततः पुरस्ताच्छोडश्यौ ते च प्रागग्रके मते ।
ततो मिथश्शिलष्टभे द्वे षोडश्यौ प्रत्यगग्रके ॥* ३१५

***अथ M.M पाठक्रमः**

दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ।
ततो मिथश्शिलष्टभे द्वे षोडश्यौ प्रत्यगग्रके ।
ततः पुरस्ताच्छोडश्यौ ते च प्रागग्रके मते ॥

दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ।[१३७] *
ततः पुरस्ताच्छोडश्यौ ते च प्रागग्रके मते ॥[१३७] * ३१६
दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ।*
ततो मिथश्शिलष्टभे द्वे षोडश्यौ प्रत्यगग्रके ॥* ३१७
ततः पुरस्ताच्छोडश्यौ ते च प्रागग्रके मते ।*
दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ॥* ३१८
तदन्तराले द्वे अर्ध्ये तत्रैका दक्षिणा मता ।*
नैऋत्यकोणायतभा किञ्चेशानदिगग्रका ॥*[१३८] ३१९

***अथ B.M पाठक्रमः**

दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ॥
ततो मिथश्शिलष्टभे द्वे षोडश्यौ प्रत्यगग्रके ।
ततः पुरस्ताच्छोडश्यौ ते च प्रागग्रके मते ॥
दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ।
ततो मिथश्शिलष्टभे द्वे षोडश्यौ प्रत्यगग्रके ॥
ततः पुरस्ताच्छोडश्यौ ते च प्रागग्रके मते ।
दाक्षिणात्या दक्षिणाभा विपरीता तदुत्तरा ॥
तदन्तराले द्वे अर्ध्ये तत्रैका दक्षिणा मता ।
वाय्वग्निकोणायतभा किञ्चेशानदिगग्रका ॥

१३७. नास्ति M.M पाठे ।
१३८. वाय्वग्निकोणायतभा, वायव्यकोणायतभा इति मातृकापाठौ अर्थविरोधादेवं परिष्कृतौ ।

तथाग्नेयदिगग्रा च विपरीता तदुत्तरा ।
इति मध्यमयो रीत्योः[१३९] स्युः प्रत्येकं नवेष्टकाः ॥ ३२०
पञ्चमी तु द्वितीयावत् षष्ठी प्रथमरीतिवत् ।
किन्त्वेता अर्धिकास्सर्वाः विपरीताग्रभा मताः ॥ ३२१
इत्येवमात्मनि मता अष्टपञ्चाशदिष्टकाः ।
शिरोग्रे द्वे तु षोडश्यौ श्लिष्टभे प्रागगताग्रके ॥ ३२२
अथ पक्षे दक्षिणेऽस्मिन्नष्टौ प्राच्यस्तु रीतयः ।
पक्षेष्टकास्सप्त सप्त प्रतिरीत्युदगायताः ॥ ३२३
तत्र दक्षिणपार्श्वस्था ईशदिग्दीर्घकर्णकाः[१४०] ।
अग्निदिग्दीर्घकर्णास्स्युरुत्तरं पार्श्वमाश्रिताः ॥ ३२४
चत्वारि पक्षपत्राणि चतस्रोऽर्ध्याः प्रकीर्तिताः ।
तदेवं दक्षिणे पक्षे भवेयुः षष्टिरिष्टकाः ॥ ३२५
एवमुत्तरपक्षेऽपि भवेयुः षष्टिरिष्टकाः ।
द्वे मूर्ध्नि विंशतिः पुच्छेऽथाष्टपञ्चाशदात्मनि ॥[१४१] ३२६
पक्षयोर्विंशतिशमिति द्विशतमिष्टकाः ।[१४१]
पक्ष्याः स्युर्द्वादशशतं षट्त्रिंशत् षोडशीष्टकाः[१४२] ।
द्विपञ्चाशदिहाध्यास्स्युरिति द्विशतमिष्टकाः ॥ ३२७

## ॥ अथ द्वितीया चितिः ॥

प्रवर्ग्योपसदन्ते तु श्वो द्वितीया चितिर्मता ।[१४३]
या ते अग्नेऽयाशयेति भवेदुपसदाहुतिः ॥ ३२८
चितेरथ द्वितीयस्य मन्त्रोपहितिरुच्यते ।[१४४]
श्वेतमश्वं समालभ्य वाङ्म आसन्ध्रुवक्षितिः ॥ ३२९
आश्विन्य आत्मपूर्वान्ते पञ्चोदगपवर्गकाः ।

---

१३९. इति मध्यमया रीत्या इति M.M पाठः । १४०. कर्णिकाः इति R.M पाठः ।
१४१. नास्ति B.M पाठे ।
१४२. षोडश्यस्त्रिंशदीरिताः इति M.M पाठः प्रामादिकः । आहत्य शतद्वयस्यासम्प्राप्तत्वात् ।
१४३. नास्ति M.M पाठे । १४४. नास्ति M.M पाठे ।

तासां पश्चादृतव्यास्स्युः तथोदगपवर्गकाः ॥* ३३०

सजूरित्याद्यृतव्यास्स्युः त्ववकोपहितिर्न हि ।*

तासां पश्चादपि प्राणभृतश्चोदक्समाप्तिगाः ॥* ३३१

*** अथ M.M पाठक्रमः**

तासां पश्चादृतव्यास्स्युः तथोदगपवर्गकाः ।

विधाभिरन्तं पुरस्तादृतव्यास्वनुषज्यते ।

सजूर्वसुभिरित्याद्याः पञ्च मध्ये यथाक्रमम् ।

चत्वारो द्विपदा ज्ञेयाः चतुर्थस्त्रिपदो मतः ।

सजूरित्याद्यृतव्यास्स्युः त्ववकोपहितिर्न हि ।

तासां पश्चादपि प्राणभृतश्चोदक्समाप्तिगाः ।

अपस्यास्स्युः प्रतिदिशं यथेष्टं मध्यमात्मनि ।

सँय्यान्याद्याः स्फुटाश्शेषाः[१४५] षट्पञ्चाशच्छतं पृणाः ॥ ३३२

प्राचीनकारिका भाष्यविरुद्धत्वादुपेक्षिता ।

यजुष्मतीनामल्पत्वात् द्वितीयादिचितित्रये ॥ ३३३

बह्व्यो लोकम्पृणास्तत्र सूपधानचितित्रयम् ।

विधाभिरन्तं पुरस्तादृतव्यास्वनुषज्यते ॥ ३३४

सजूर्वसुभिरित्याद्याः पञ्च मध्ये यथाक्रमम् ।

चत्वारो द्विपदा ज्ञेयाश्चतुर्थस्त्रिपदो मतः ॥[१४६] । ३३५

सजूर्देवैर्वयोनाधैरित्याद्युपरि सर्वतः ।

यत्रोपधित्सता या तामिष्टकां तत उद्धृताम् ॥[१४७] ३३६

अग्निं प्रदक्षिणं नीत्वा तत्रैवोपदधाति ताम् ।

एषोऽनुपरिहारस्स्याद्भारद्वाजमुनेर्मतात् ॥ ३३७

---

१४५. सँय्यान्याद्यास्तु तास्वेव इति पाठः ।

१४६. तुरीयस्त्रिपदस्तत्र शिष्टास्तु द्विपदा मताः । इति M.M पाठः ।

१४७. यत्रोपधित्सिता या तामिष्टकां तत उद्धृताम् इति B.M पाठः ।
यत्रोपधित्सता यां तामिष्टकां तत उद्धृताम् इति R.M पाठः ।

शैशिराविति तूद्धृत्य ग्रैष्माविन्यत्र धीयते ।
ऋतव्ययोस्स्युरवका अगन्म त्रिष्टुबिष्यते ॥[१४८] ३३८

## ॥ इति द्वितीया चितिः ॥

## ॥ अथ तृतीया चितिः ॥

चितेरथ तृतीयस्य मन्त्रोपहितिरुच्यते ।
अश्वं च वाङ्म इन्द्राग्नी ऊर्ध्वज्ञुत्वमिह स्मृतम्[१४९] ॥ ३३९
धारणं तु विसृष्टस्य श्वासस्य व्याननं मतम्[१५०] ।
वरस्साम ज्योतिरसि अधि द्यौश्च विराट्त्रिकम् ॥* ३४०
सम्राट् प्रयोगो मनसा ऋतव्यान्तेऽवका मता ।*
शैशिराविति तूद्धृत्य वार्षिकाविति धीयते ॥ * ३४१
ऋतव्ययोरपरयोः शारदाविति धीयते ।[१५१] *
मण्डलाद्या ऋतव्यान्ता दक्षिणश्रोणिदेशगाः ॥ ३४२

***अथ M.M पाठः**

वरस्साम ज्योतिरसि अधि द्यौश्च विराट्त्रिकम् ।
मण्डलाद्या ऋतव्यान्ता दक्षिणश्रोणिदेशगाः ॥
सम्राड्ज्योतिस्तु मन्त्रोऽत्र मनसैव प्रयुज्यते ।
द्वे द्वे एवात्रोपधये त्ववकोपहितिर्मता ॥
चतस्र उपधायान्ते केचित्तत्रावकोपधिम् ।
शैशिराविति तूद्धृत्य वार्षिकाविति धीयते ।
ऋतव्ययोरपरयोः शारदाविति धीयते ॥

---

१४८. उपधाय ऋतव्ये द्वे अवकोपहितिर्मता । अभिमर्शेत् द्वितीयस्या अगन्म त्रिष्टुबिष्यते इति M. M पाठः ।
१४९. अश्वालम्भं वाङ्म आसन्निन्द्राग्नी इत्युपक्रमः । उपदध्यात्स्वयमातृण्णां द्वितीयामूर्ध्वजानुकः इति M. M पाठः ।
१५०. व्यननं स्मृतम् इति B. M पाठः । व्यनं मतम् इति M. M पाठः ।
१५१. नास्ति B. M & K.M पाठे ।

शिरोऽग्रे दक्षिणे पक्षे पुच्छे पक्षेऽपि चोत्तरे ।
मध्ये चात्मानि ताः पञ्च दिश्याः प्रतिदिशं मताः ॥ ३४३
तत्र स्यान्मध्यमा दिश्या पृष्ठ्याया दक्षिणैव तु ।
आयुराद्याः प्राणभृतो दश स्युर्दक्षिणांसगाः ॥ ३४४
मा छन्दाद्या द्वादश तु दक्षिणं पक्षमाश्रिताः ।
पृथिव्याद्या द्वादश तु पुच्छे स्युर्दक्षिणार्धगाः ॥ ३४५
द्वादशाग्निर्देवताद्या उत्तरं पक्षमाश्रिताः ।
संस्पृष्टाः पृष्ठ्यया स्थाप्या वालखिल्या द्विसप्तकाः ॥[१५२] ३४६
त्रिपदा स्युस्त्रयस्त्वाद्या नवमो दशमस्तथा ।
वालखिल्योपधाने स्युर्मूर्धाऽसीत्येवमादिषु ॥ ३४७
भूताख्या उत्तरे पार्श्वे आत्ममध्यात्परर्षभः ।
लोकम्पृणा अत्र चितौ शतमेकादशाधिकम् ॥ ३४८
मेधाकारं तु जगती स्यादग्नेरभिमर्शनम् ।
समानमन्यच्छ्वेताश्वपरिणीयान्तमिष्यते ।[१५३]
चतुर्थ्यामप्युपसदि या ते अग्ने रजाशया ॥ ३४९

## ॥ इति तृतीया चितिः ॥

## ॥ अथ चतुर्थी चितिः ॥

चितेरथ चतुर्थ्यास्तु मन्त्रोपहितिरुच्यते ।[१५४]
अश्वालम्भो वाङ्म आसन्नाशुरित्यादि तन्यते ॥ ३५०
अत्र तु ब्राह्मणात्क्लृप्ता अष्टाविंशतिरिष्टकाः ।
आशुरग्नेर्भाग इति मन्त्रक्रम उपेक्षितः ॥[१५४(अ)] ३५१
तत्रैकैका प्रतिदिशं अग्न्यन्तेषूपधीयते ।
चतस्र आत्ममध्यस्था ज्ञेया सँय्यान्यृतव्यकाः ॥ ३५२

---

१५२. पृष्ठ्यया तास्स्युः वालखिल्याः इति M.M पाठः । प्रवय स्थाप्या इति B.M पाठ०। द्विसप्तगाः इति K.M पाठः ।
१५३. नास्ति B.M & K.M पाठे ।
१५४. नास्ति M.M & K.M पाठे ।
१५४(अ). उपेत्य ईक्षेत, सम्यग्जानीयादित्यर्थः ।

ऋतव्ययोस्स्युरवका ऊहेद्धैमन्तिकाविति ।
सृष्टयो दक्षिणे पार्श्वे[१५५] क्वचिदेकत्र संहताः ॥ ३५३
आसीदन्तास्तासु मन्त्रा व्युष्टयः प्रत्यृचं मताः ।
व्युष्टीनामुपधाने स्यादीयुष्ट इति षोडशी ।[१५६]
भवेयुरुत्तरे पार्श्वे आत्ममध्यात्परर्षभः ॥[१५७] ३५४
लोकम्पृणा अत्र चितौ चतुस्त्रिंशच्छतं मताः ।
अनुष्टुभा मृशेदग्निं मनुष्वत्त्वा निधीमहि ॥ ३५५
समानमन्यच्छ्वेताश्वपरिणीयान्तमिष्यते ।[१५८]

## ॥ इति चतुर्थी चितिः ॥

## ॥ अथ पञ्चमी चितिः ॥

अथात्र पञ्चमचितेर्मन्त्रोपहितिरुच्यते ॥[१५९]
स्यात्पञ्चम्यामुपसदि या ते अग्ने हराशया ॥ ३५६
अश्वालम्भो वाङ्म आसन्नग्ने जातादि तन्यते ।
शिरोऽग्रीया पादिकाथ सप्तमी चाद्यरीतिगा ॥ ३५७
पक्षे च दक्षिणे सव्ये चापि पत्रे उपान्तिमे ।
दशम्यां मध्यमा चेति क्रमात्पञ्चासपत्नगाः[१६०] ॥ ३५८
चतस्र आद्या द्वादश्यां पूर्वस्यामादितो द्वयम् ।
चतस्र आद्याः पूर्वस्यां विराजो दश पूर्वगाः ॥ ३५९
आद्याग्रीयोत्तरा तस्याः तत्पूर्वा तत उत्तरे ।
पूर्वा तदुत्तरे पूर्वे विराजो दश दक्षिणाः ॥ ३६०

---

१५५. दक्षिणे पक्षे इति M.M पाठः ।
१५६. इति M.M पाठेऽधिकः ।
१५७. कृते व्युष्ट्युपधाने स्यादात्ममध्यात्परर्षभः इति M.M पाठः ।
१५८. इति M.M पाठेऽधिकः ।
१५९. नास्ति B.M & M.M पाठे ।
१६०. असपत्नकाः इति B.M & M.M पाठः ।

पाद्याश्चतस्र आद्यायां पूर्वस्यां तिस्र आदितः ।
पूर्वस्यामुत्तरास्तिस्र इत्येता दश पश्चिमाः ॥ ३६१
पक्षाग्र्यामुत्तरे पक्षे प्रथमामवशिष्य तु[१६१] ।
तद्दक्षिणा तत्पूर्वस्यां चतस्रोऽग्र्यादि दक्षिणाः ॥ ३६२
तत्पूर्वा दक्षिणा पूर्वे दक्षिणेति दशोत्तराः ।
चत्वारिंशद्विराजस्स्युरिति प्रतिदिशं दश ॥ ३६३
द्वादश्यामुत्तरास्सप्त पुरस्तात्स्तोमभागकाः ।
दक्षिणे पश्चिमात्पत्रादुदगेकान्तरास्तु याः ॥ ३६४
तास्सप्त स्तोमभागास्स्युर्दक्षिणां दिशमाश्रिताः ।
आद्यायामुत्तरास्सप्त पश्चिमास्स्तोमभागकाः[१६२] ॥ ३६५
सव्यपक्षे दक्षिणवत् सप्त स्युस्स्तोमभागकाः[१६३] ।
नवम्यां मध्यमास्तिस्रः षोडश्यस्स्तोमभागकाः ॥ ३६६
इत्येका च त्रिंशदपि स्तोमभागा उदीरिताः ।
षोडश्यां मध्यमा त्वेका पूर्वपत्रात्तथोत्तरा[१६४] ॥ ३६७
आद्यायां मध्यमा सव्ये पूर्वपत्रात्तु दक्षिणा ।
सप्तम्यां पञ्चमी चेति पञ्च नाकसदो मताः ॥ ३६८
तन्मन्त्रेषु प्रतिष्ठित्या इत्यनन्तरमेव तु ।
अन्तरिक्षायर्षयस्त्वेत्यादिश्शेषोऽनुषज्यते ॥ ३६९
अर्धोत्सेधा नाकसदस्तासु चोडास्तथाविधाः ।
पुरस्ताद्दक्षिणे सव्ये मध्ये पश्चादिति क्रमः ॥ ३७०
प्रहेतिरित्यतस्तेभ्यो नम आद्यनुषज्यते ।
तिष्ठतः परमेष्ठीस्याद्द्वायूत्कर्षस्त्वपाननम् ॥[१६५] ३७१

---

१६१. पश्चिमामवशिष्य तु इति B.M & M.M पाठः । १६२. पश्चिमां दिशमाश्रिताः इति B.M & M.M पाठः ।
१६३. दक्षिणवदेव स्युः स्तोमभागकाः इति B.M & M.M पाठः ।
१६४. पूर्वपत्रादथोत्तरा इति B.M पाठः ।
१६५. तिष्ठन्नेवोपदध्यात्तु स्वयमातृण्णां तृतीयकाम् इति M.M पाठः ।

चित्तिं हुत्वा वरस्साम विकर्णी स्पष्टदेशगा ।[१६५(अ)]
सप्तम्यां मण्डला तुर्या रेतस्सिग्दक्षिणा ततः ॥ ३७२
सप्तम्यामेव नवमी विश्वज्योतिः प्रकीर्तिता ।
अनूराधायावकां तु सँय्यान्युपहितिर्मता ।[१६६]
रीतौ दशम्यामप्येकादश्यां द्वे द्वितीयके ॥ ३७३
तयोरेव चतुर्थ्यौ च ऋतव्ये यानिके क्रमात् ।
अमन्त्रमेवावरुह्य प्रवर्ग्योपसदावथ ॥ ३७४
सुब्रह्मण्याह्वयान्ते तु श्वेतोऽश्वः परिणीयते ।
वासयित्वौदुम्बरीश्च रात्रिमेतां वसन्ति हि ॥ ३७५
समिधं विनियोगाग्निप्रणये तु भविष्यति ।[१६७]

## ॥ अथ पञ्चम्याश्चितेश्शेषभूता याज्ञसेनी चितिः॥

प्रातरौपसथ्येऽह्नि सुब्रह्मण्याह्वये कृते ।*
नाश्वालम्भो न वाङ्मे स्यात् तूष्णीमेवाधिरोहणम् ॥* ३७६

***अथ M.M पाठक्रमः**

प्रातरौपवसथ्येऽह्नि प्रवर्ग्योपसदौ चरेत् ।
षष्ठ्यामत्राप्युपसदि या ते अग्ने हराशया ।
तत्रोपसत्कर्मणान्ते सुब्रह्मण्याह्वये कृते ।
नाश्वालम्भं न वाङ्मे स्यात् तूष्णीमेवाधिरुह्य तु ।
याज्ञसेनीं चितिं त्वग्निर्मूर्धेति प्रतिपद्यते ।
शिरोमूलकषोडश्यौ षोडश्यामन्त्यपादिका ।

शिरोमूलक षोडश्यौ षोडश्यामन्त्यपादिका ।

---

१६५(अ) चित्तिं हुत्वापाननं स्याच्छ्वासोत्सर्गस्त्वपाननम् ।
हुत्वापान्य वरस्साम विकर्णी स्पष्टदेशिका इति M.M पाठा० ।

१६६. इति M.M पाठेऽधिकः ।

१६७. इति M.M पाठेऽधिकः ।

अग्निर्मूर्धेति गायत्र्यः तास्तिस्रः पूर्वगा मताः ॥ ३७७
असपत्नोत्तरे तु द्वे एका नाकसदुत्तरा ।
भुव आद्यास्त्रिष्टुभस्स्युः पक्षांसे[१६८] दक्षिणे स्थिताः ॥ ३७८
जगत्यश्च जनस्याद्या द्वितीयान्तगतं त्रिकम् ।
दक्षिणेऽसपत्नाया एका नाकसदोऽपि च ॥ ३७९
सव्यपक्षांसगास्तिस्रः त्वां चित्राद्या अनुष्टुभः ।
अथ तिस्रो दक्षिणाग्राः षोडश्यः पश्चिमादिकाः ॥ ३८०
एना वो अग्निमित्याद्या बृहत्यः परिकीर्तिताः ।
उदगग्रे तु पक्षाग्र्ये पूर्वे षोडशिगोत्तरा ॥[१६९] ३८१
अग्ने वाजादिकास्तिस्र उष्णिहः परिकीर्तिताः ।
अथोऽदगग्राष्षोडश्यस्तिस्रो याः पश्चिमादिकाः ॥ ३८२
आ ते अग्ने प्रभृतयस्तिस्रः पङ्क्तय ईरिताः ।
दक्षिणाग्रे तु पक्षाग्र्ये पूर्वे दक्षिणषोडशी ॥ ३८३
अग्ने तमद्यादयस्स्युस्तिस्रस्त्वक्षरपङ्क्तयः ।
एभिर्न इत्यृगेषात्र चतुर्थी तु विकल्प्यते ॥ ३८४
याष्टम्यां मध्यमा सातिच्छन्दा स्यादग्निमादिका ।
तस्यां यथामन्त्रपाठमवसानचतुष्टयम् ॥ ३८५
आद्याश्चतुर्थ्यां द्विपदास्तिस्रोऽग्ने त्वन्न आदिकाः ।
तासु मध्ये नावसानं छन्दोविचितिसूत्रतः ॥ ३८६
असव्यपत्राद्द्वितीयादुदक्त्र्यन्तरितं द्वयम् ।
पूर्वास्तिस्रः पक्षमध्या अथ तिस्रस्तदुत्तराः ॥ ३८७
इत्येवं दक्षिणे पक्षे सयुजोऽष्टौ प्रकीर्तिताः ।
तत्र त्वा सयुजेत्यादि सप्तस्वप्यनुषज्यते ॥ ३८८
अष्टमस्तु मतो रय्यै पोषादिर्मन्त्र उत्तमः ।

---

१६८. पक्षान्ते इति R.M पाठा० ।
१६९. उदगग्रे तु पक्षाग्रे पूर्वे षोडशिकोत्तरा इति M.M & K.M पाठा० ।

मध्यीययोर्मध्यमयोरुदगेकान्तरे द्विके ॥ ३८९
मध्यीयायाः पश्चिमाया एका द्व्यन्तरिता तथा ।
ततः पूर्वगते द्वे च पञ्च जीमूतका मताः ॥ ३९०
तासामुत्तरतः षट् तु रीतिद्वयगता अपि ।[१७०]
सन्धिगा पश्चिमाग्रीया कृत्तिकास्सप्त ता मताः ॥ ३९१
अम्बा दुलादि सप्तानां पदानामुपरि क्रमात् ।
अनुषज्येत नामासीत्यादि धाम्यन्तमेव तु ॥ ३९२
षोडश्यामादिमा पूर्वपत्रात् द्व्यन्तरितापि च ।
आद्यायां पञ्चमी पूर्वमध्यीयायाश्च दक्षिणा ॥ ३९३
उपादिमा चाप्यष्टम्यां ता वृष्टिसनयो मताः ।

| एकैका परिणीयाग्निं दिक्षु मध्ये च धीयते ।[१७१] |
|---|

चतुर्थ्यामुत्तरे द्वे च षष्ठ्यां रीत्यामथादिमा ॥[१७२] ३९४
कृत्स्ना च पञ्चमी रीतिरष्टादित्येष्टका मताः ।[१७३]
सर्वेऽत्र द्विपदा मन्त्राः सप्तमस्त्रिपदो मतः ॥ ३९५
ऋचे त्वेत्यादिभिर्मन्त्रैर्घृतपिण्डा घृतेष्टकाः ।

| एकैका परिणीयाग्निं दिक्षु मध्ये च धीयते ।[१७४] |
|---|

षष्ठ्यां मध्यमषोडश्यावथ सप्तमरीतिगाः ॥ ३९६
षष्ठी च सप्तमी पाद्या चाष्टम्यपि यशोदकाः ।
तन्मन्त्रेषु तु सर्वेषु सप्तम्यन्तेभ्य उत्तरम् ॥ ३९७
सादयामीत्यादि यजुः सीदान्तमनुषज्यते ।
षष्ठ्यामन्त्या च पूर्वान्त्ये सन्धिगाग्र्ये च पश्चिमे ॥ ३९८

---

१७०. जीमूतानामुत्तरतः षट् तु रीतिगता अपि इति M.M पाठः ।
१७१. इति M.M पाठेऽधिकः ।
१७२. चतुर्थ्यामुत्तरान्ते द्वे षष्ठ्यां रीतावथादिमा इति B.M & M.M पाठः । चतुर्थ्यामुत्तरांते द्वे सर्वाः पञ्चमरीतिगाः । षष्ठ्या रीतिर्यथाद्यैका अष्टादित्येष्टका मताः इति K.M पाठः ।
१७३. नास्ति K.M पाठे । १७४. इति M.M पाठेऽधिकः ।

पञ्च भूयस्कृतस्तत्र मन्त्राश्चत्वार आदिमाः ।
अस्यन्तास्स्युः पञ्चमस्तु सीदान्तो मन्त्र इष्यते ॥ ३९९
भूयस्कृतस्तुरीयायास्तिस्र उत्तरतस्तु याः ।
आद्ययोः पुरतो द्वे च रूपाख्या पञ्च ता मताः ॥ ४००
अन्त्ययो रूपयोरग्रे द्वे तयोरग्रतो द्वयम् ।
तदुत्तरत एका च द्रविणादास्तु पञ्च ताः ॥ ४०१
मध्यीयाया द्वितीयस्या द्वे एकान्तरदक्षिणे ।
तयोः पुरस्तादपि द्वे अथैका च तदुत्तरा ॥ ४०२
तत आग्नेयदिश्येका षडायुष्याः प्रकीर्तिताः ।
आत्ममध्ये पुरस्तात्तु षोडशी हृदयं मतम् ॥ ४०३
अग्ने यत्ते परमिति त्वेध्यग्नेऽन्तं प्रकीर्तितम् ।
द्वितीया पक्षमध्यीया ततः पक्ष्या च दक्षिणा ॥ ४०४
तन्मध्ययोरुत्तरे द्वे तृतीया पक्षमध्यगा ।
तदुत्तरत एका च पूर्वान्त्या पक्षमध्यगा ॥ ४०५
ऋतव्यास्सप्त विज्ञेया मन्त्रा एकपदात्मकाः ।
सुमेक इत्यृतव्यान्ते विश्वकर्मादि पञ्चकम् ॥ ४०६
दिशामादि नमोऽन्तस्तु विश्वकर्मादि पञ्चसु ।
चतस्रस्स्वयमातृण्णाः प्राणाय त्वादिकैर्दिशि ॥ ४०७
त्वा चक्षुषेत्यादि यजुः प्राणादिष्वनुषज्यते ।
सप्तम्याद्या च ऋषभः प्राजापत्या तदुत्तरा ॥ ४०८
उपान्तिमा त्रयोदश्यां दक्षिणे पूर्वपत्रकम् ।
आद्यरीतौ तथा षष्ठी पूर्वपत्रं च सव्यगम् ॥ ४०९
उपान्तिमा चाप्यष्टम्यामज्यान्यः पञ्च कीर्तिताः ।
अथाश्मनः प्रतिदिशं वज्रिण्यो नाम पञ्च तु ॥ ४१०
यो नः पुरस्तादित्यादि दिक्चतुष्टयमिष्यते ।
ततश्चाघायुरित्यादि चतुर्ष्वप्यनुषज्यते ॥ ४११

पञ्चमस्तु स्फुटो मन्त्रः सूत्रे पठित एव हि ।
इष्टकानामन्तरालेष्वश्मोपहितिरिष्यते[१७५] ॥ ४१२
दक्षिणे पूर्वगा यास्तु मध्यीयाया उदक्स्थिताः ।
एकान्तराश्चतस्रस्तु यास्ता राष्ट्रभृतो मताः ॥ ४१३
हिरण्मयानि पञ्च स्युरग्निर्भुव इति क्रमात् ।
अथान्तिमा त्रयोदश्यां दक्षिणोपाद्यपत्रकम् ॥ ४१४
उपाद्या सन्धिपक्षाग्र्या तृतीयस्यां तु दक्षिणा ।
सव्ये तु पश्चिमं पत्रमिति लोकम्पृणा मताः ॥ ४१५
इतोऽधिका इह द्वित्रिषाहस्राग्न्योस्तु योजयेत् ।[१७६]
इह भाष्ये पक्षभेदास्सन्ति तेऽपि च सम्मताः ॥ ४१६
अग्निर्हि वाजिनमिति पङ्क्त्याग्निमभिमृश्य तु ।
प्रचर्य चापराह्णिक्यौ प्रवर्ग्योपसदाविह ॥ ४१७
सुब्रह्मण्याह्वयान्ते तु श्वेताऽश्वं परिणीय च ।
अग्ने युक्ष्वेत्यादि कर्म शान्तये प्रतिपद्यते ।
अशान्तं सञ्चितं त्वग्निं नैव कोऽप्यधिरोहति ॥ ४१८

## ॥ इति पञ्चमी चितिः ॥

उपधेयस्य[१७७] यष्टुश्च संस्कार उपधिश्च यः ।[१७९]
स[१७८] याजमानोऽतोऽन्यत्स्यादाध्वर्यवमिति स्थितिः ॥[१७९] ४१९
इति स्वयञ्चितौ कैश्चिद्विभागोऽयं प्रदर्शितः ।[१७९]
स एष दुर्विधेयत्वात्परीक्ष्यस्सूक्ष्मबुद्धिभिः ॥[१७९] ४२०
सर्वदिक्ष्वग्न्यभिमुखं प्रोक्षेद्धृतहिरण्यकैः ।

---

१७५. रुच्यते इति R.M पाठः ।
१७६. इतो इह द्वित्रिषाहस्राग्न्योस्तु विनियोजयेत् । इति B.M पाठः ।
१७७. उपधेयश्च इति K.M पाठः, उपधेयुश्च इति R.M पाठः ।
१७८. सयाजमानतोऽन्यत् इति B.M पाठः ।
१७९ नास्ति M.M पाठे ।

**M. M पाठे उपधेयश्च यष्टुश्च --- घृतहिरण्यकैः ।**
**इति स्थाने एते श्लोकाः विद्यन्ते**

चित्यग्निप्रणयाद्यग्निहिन्वग्नेरभिमर्शनात् ।
आध्वर्यवं याजमानं वाग्निकं कर्म कृत्स्नशः।
युक्ष्वाहीत्यादिकीं शान्तिकर्म कृत्वाध्वर्यवं मतम् ।
सञ्चितग्रहणादत्रेत्येवं भाष्ये व्यवस्थितिः ।
सर्वदिक्ष्वग्न्यभिमुखः प्रोक्षद्घृतहिरण्यकैः ।

धेनुत्वेनापि सन्धानं धेनूकरणमिष्यते[१८०] ॥ ४२१
अग्निरस्यनुवाकस्य संज्ञा स्यादैडिकी चितिः ।
शतरुद्रीयदेशे तु वेदिमग्निसमोच्छ्रिताम्[१८१] ॥ ४२२
कृत्वा तत्र स्थितोऽध्वर्युर्हुत्वाऽथ शतरुद्रियम्[१८२] ।
अन्यस्त्वर्कपुटे कश्चिदजाक्षीरं प्रसिञ्चति ॥ ४२३
अपि वेत्येष पक्षस्तु स्फुटत्वात्परिगृह्यते ।
उपक्रमादा समाप्तेर्मता धारा च सन्तता ॥ ४२४
बोधायनमताच्चाऽपि तथा वाजसनेयकात् ।
नमस्तक्षभ्य इत्यन्ते स्वाहाकरणमिष्यते ॥ ४२५
स्यात् स्वायुधाय च स्वाहा तत ऊर्ध्वं सुधन्वने ।
केचिदाहुः स्वायुधाय स्वाहाथ च सुधन्वने ॥ ४२६
ततो मुखाकृधि स्वाहा सहस्राणीति तन्यते ।
तेषां सहस्रेत्येतत्तु दशस्वप्यनुषज्यते ॥ ४२७
अवतानेषु दशसु स्वाहाकृतय ईरिताः ।
नमो रुद्रेभ्य इत्युक्त्वा ये पृथिव्यामुदीरयेत्[१८३] ॥ ४२८
येषामन्नमिति ब्रूयादिषवस्तेभ्य आदिकम् ।
नमो रुद्रेभ्य इत्युक्त्वा येऽन्तरिक्ष इतीरयेत् ॥ ४२९

---

१८०. धेनूःकरणमिष्यते इति K.M पाठः ।
१८१. अग्निसमाश्रिताम् इति B.M पाठः ।
१८२. जुहोति शतरुद्रियं इति M.M पाठः ।
१८३. पृथिव्यामितीरयेत् इति B.M & R.M पाठः ।

येषां वात इति ब्रूयादिषवस्तेभ्य आदिकम् ।
नमो रुद्रेभ्य इत्युक्त्वा ये दिवीति ततो वदेत् ॥ ४३०
येषां वर्षमिति ब्रूयादिषवस्तेभ्य आदिकम् ।
जम्भे दधामीत्यन्तेषु स्वाहाकारः पुनःपुनः ॥ ४३१
गावीधुकश्चरुरिह लौकिकेऽग्नौ शृतो मतः[१८४] ।
तिसृधन्वं भवेच्चापमिषुभिस्तिसृभिर्युतम् ॥ ४३२
उपतिष्ठेत यज्वैव यत्ते रुद्र पुरादिभिः ।
पृष्ठोपस्थानमध्वर्योर्यष्टुर्वा स्तोतुरेव वा ॥ ४३३
घर्मोद्वासनमग्नौ चेदातृण्णाया उदग्भवेत् ।
यज्वाधिरोहेत्पृथिवीमन्तरिक्षं दिवं त्रिभिः ॥ ४३४
उपास्यन्हेम नृषदे स्वाहाकारस्तु नैव हि ।
अध्वर्योः प्राणदा यज्वा तूष्णीं प्रत्यवरोहति ॥ ४३५
उन्मुच्योपानहावग्निस्तिग्मेन प्रतिपद्यते ।

[१८५]
सकृत्सकृद्गृहीतेन घृतेनैकैकया ऋचा ।
एकैकाहुतिरित्येवमष्टावाहुतयो मताः ॥
अष्टर्चान्ते त्विहैतासां यौगपद्यं विधीयते ।
वैश्वकर्मबहुत्वं च तदेकत्वं तु साध्यताम् ॥
अंशेनाष्टगृहीतेन प्रथमाहुतिरिष्यते ।
द्वितीयाहुतिरित्येवं भवेदंशेन तावता ॥
इह द्वयोरप्याहुत्योर्योगा अष्टौ भवन्ति हि ।
तत्र त्वष्टगृहीतानां प्रोक्षे वस्तु सकृत्सकृत् ॥
तथेदं विश्वकर्मणे न ममेति सकृत्सकृत् ।
यथा दधिपयोयज्योरिन्द्रायेदं सकृत्तथा ।
मीमांसन्यायविदुषामेतत्सुगममेव हि ॥

---

१८४. श्रितः इति मूलपाठः । लेखकस्य प्रमादकृतमिति परिष्कृतम् ।
१८५. आवरणे विद्यमानाः केवलं M.M पाठे सन्ति । अत्रोक्तविषयाणामर्थो नावगतः ।

सूक्तं तु य इमेत्यादि पुरुत्वेत्यन्तमिष्यते ॥ ४३६
स्याच्चक्षुषः पितेत्यादि यथासदवधीरितम् ।
उदेनमिन्द्र यस्येति प्रत्यृचं समिदाहुतिः ॥ ४३७
क्षिप्त्वा प्रणयनीयेध्ममग्नये प्रैष इष्यते ।
उदु त्वेत्यग्निमुद्यम्य यत्ते पञ्च दिशस्ततः ॥ ४३८
विमान एष इत्यत्र न तयादैवतं[१८६] भवेत् ।

आग्नीध्रमण्टपस्त्वग्रे पर्वारत्निर्भविष्यति ।
मध्ये श्वेतः पृश्निरश्मा सर्वतोऽष्टाङ्गुलो मतः ।[१८७]

सुम्नहूर्यज्ञ ऋगेषा[१८८] तु भवेदेकावसानिका ॥ ४३९

द्रविणोदा अग्न इति सन्धानं स्यादृचोरिह ।[१८९]

कृष्णायास्तु पयः कृत्स्नं तृण्णायां प्राकृतस्रुचा ।
ऊर्णावन्तमिति श्रुत्वा विश्वायुरिति तन्यते ॥ ४४०
आरूढ एवाग्निचित्यां परिदध्यादिति स्थितिः ।
सुपर्णोऽसीति तिसृभिरग्ने बाधस्व नैव हि[१९०] ॥ ४४१

सुपर्णोऽसि च भासा चाजुह्वानश्चेत्यृचा त्रयम् ।[१९१]

अग्नेः पुरीषं मनुष्वत् प्रेद्ध इत्यादि तन्यते ।
हुत्वा पूर्णाहुतिमतिमुक्तयोऽथावरुह्य तु ॥ ४४२
ब्रह्मन्नुत्तरमित्यादि वेदिप्रोक्षान्तमिष्यते ।
अथ वैश्वानरीयस्यासिदादानादि तन्यते ॥ ४४३
बर्हिराहृत्य या जाता इध्मसन्नहनं ततः ।
आघारसमिदत्रैका न चानूयाजकी समित् ॥ ४४४

---

१८६. तयादेवतं इति B.M पाठः ।
१८७. इति M.M पाठेऽधिकः ।
१८८. सुम्नहूराद्यृगेषा इति B.M पाठः ।
१८९. इति M.M पाठेऽधिकः ।
१९०. बाधस्व बाध्यते इति M.M पाठः]
१९१. इति M.M पाठेऽधिकः ।

ततस्वां नवदशधेत्युक्त्वा एकां[१९२] समिधमित्यपि ।
व्रश्चनानि त्वया वेदिं उपवेषोऽस्यलङ्कृतिः ॥ ४४५
परिस्तरः कर्मणे वां यज्ञस्यासनकल्पनम् ।
देवा देवेषु च ब्रह्मा विशेद्यज्वा च पूर्ववत् ॥ ४४६
स्फ्येन द्वादशको योगः सप्तका[१९३] अपि सप्त तु ।
हवन्याद्यष्टकमथ स्रुवादीनां च सप्तकम् ॥ ४४७
प्रणीता च मदन्ती च मेक्षणाग्रकवेषकम् ।
पवित्रकरणादि स्यात् प्रणीताप्रणयो न वा[१९४] ॥ ४४८
शूर्पे प्रदेशभेदेन मारुतान् सह निर्वपेत् ।
वैश्वानरो मन्त्रवान् स्यात् मारुतास्स्युरमन्त्रकाः ॥ ४४९
अवघाताद्युभयेषां नानाबीजवदिष्यते ।
युग्ममन्त्रद्विरावृत्या भवेद्वैश्वानरोपधिः ॥ ४५०
आप्यान्ते कर्मणि कृते प्रैषः पत्नीविवर्जितः ।
प्रोक्षणीपूरणादि स्यात् न च प्राशित्रसंमृजिः ॥ ४५१
पत्न्या अग्ने गृहेत्यादि कर्म प्राजहिते भवेत् ।
स्यादिषे त्वा च तेजोऽसि द्वयं शालामुखीयके ॥ ४५२
चतुर्वा पञ्चकृत्वो वा ध्रुवायामेव गृह्यते ।
आपो देवीरादि कर्म सूर्यस्त्वेत्यन्तमिष्यते ॥ ४५३
वीतिहोत्रं विशो यन्त्रे विच्छिनद्मीति यज्वनः ।
स्याद्वसूनामयं तूर्ष्णीं जुहूं साद्य तथोपभृत् ॥ ४५४
ध्रुवासि यो मा ऋषभस्स्योनो म इयमित्यपि ।
तत एतावसदतां तौ विष्णो पाहि चोह्यते ॥ ४५५
ध्रुवां स्रुवं चाभिमन्त्र्य ध्रुवां विष्णवसि वैष्णवम् ।
अथ धामासि च प्राजापत्यमित्यपि चोह्यते ॥ ४५६

---

१९२. नवदशधा चैकां इति M.M पाठः ।
१९३. सप्तमा इति B.M पाठः ।
१९४. प्रणीताप्रणयेन्न वा इति M.M पाठः ।

समन्त्रमभिघार्योद्वास्यते वैश्वानरं हविः ।
अमन्त्रकं मारुतानि प्रियेणेति च सादनम् ॥ ४५७
यज्ञोऽस्ययं मम चतुर्होतायं वेद आदिकम् ।
स्रौवाघाराप्यायनान्ते भवेत्क इदमादिकम् ॥ ४५८
वेद्यान्तृणविसर्गान्ते प्रचारस्त्वाज्यभागयोः ।
पञ्चहोता प्रचरणं भवेद्वैश्वानरस्य तु ॥ ४५९
प्रचर्योदङ्ङतिक्रम्य स्रुचावन्यत्र सादयेत् ।
आदावीदृङ्ङनुद्रुत्य शुक्रज्योतिस्तु हूयते ॥ ४६०
शुक्रज्योतिरनुद्रुत्य ऋतजिच्चेति हूयते ।
ऋतजिच्चेत्यनुद्रुत्य धुनिश्चेति च हूयते ॥ ४६१
धुनिश्चेति त्वनुद्रुत्य ऋतश्चेति च हूयते ।
ऋतश्चेति त्वनुद्रुत्य स्वतवांश्चेति हूयते[१९५] ॥ ४६२
स्वतवांश्चेत्यनुद्रुत्येदृक्षास इति हूयते ।
ईदृक्षासस्त्वनुद्रुत्य ईदृङ्चेति तु हूयते[१९६] ॥ ४६३
मितासश्चेत्यादि भवन्त्वित्यन्तं यजुरेव तु ।
अनुद्रुत्योक्तमन्त्राणामन्तेषु त्वनुषज्यते ॥ ४६४
मारुतान्ते तु नारिष्ठाथ वैश्वानरे हविः ।
यो भूतानामिति कृते वाजस्येत्यादि तन्यते ॥ ४६५
यज्ञो बभूव यज्ञेति वृष्टिरस्यपि नेष्यते ।
अग्नाविष्णू इति चतुर्गृहीतं प्राकृतस्रुचा ॥ ४६६
हुत्वा वाजश्च म इति वसोर्धारा वितन्यते ।

[१९७]

| |
|---|
| रचयित्वा दक्षिणतः पश्चाद्वा भित्तिमुन्नताम् ।<br>तत्र स्रुचं स्थापयित्वा जुहोति तु तिरोहितः । |

---

१९५. स्वतवानिति हूयते इति B.M पाठः ।

१९६. ईदृङ्चान्यादृङ्च हूयते इति R.M & K.M पाठः ।

१९७. इति M.M पाठेऽधिकः ।

तत्र सन्ततधारायामादिसँय्योग इष्यते ॥ ४६७
एकादशानुवाकान्ते सकृत् स्वाहाकृतिर्भवेत् ।
अग्नाविष्णू देवतेति ब्राह्मणे स्पष्टमीरितम् ॥ ४६८
वाजाद्याशास्यमेवात्र देवतात्वं न तत्र तु ।

[१९८]
आज्यं कुम्भत्रयमितं कुम्भद्वयमितं तु वा ।
वासोर्धाराहुतेर्द्रव्यं इति बोधायनो मुनिः ।
पलद्वयं तु प्रभृतं द्विगुणं कुडपं मतम् ।
चतुर्भिः कुडपैः प्रस्थं प्रस्थाश्चत्वार आढकः ।
आढकैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयमिति धर्मशास्त्रविदो जगुः ।
अशीतिगुञ्जामानं तु स्वर्णः कर्षो ह इत्यपि ।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तिताः ।

ब्रह्मौदनस्त्वधर्मा स्याल्लौकिकेऽग्नौ शृतश्च सः[१९९] ॥ ४६९
तद्भोक्तारस्तु चत्वारो ब्राह्मणास्स्युर्महर्त्विजः ।
प्रतिब्राह्मणमेकैका धेनुर्दीयेत यज्वना ॥ ४७०
चतुर्दशौषधीनान्तु यवाग्वो लौकिके शृताः[२००] ।
एकैकयाप्यृचैकैकयवागूहोम इष्यते ॥ ४७१
अग्निरेव भवेद्वाजप्रसवीयेषु देवता ।
नक्तोषासादिहोमास्तु स्रुचा स्युर्नित्ययैव हि ॥ ४७२

[२०१]
आज्येनैव त्वाहुतयः कार्या राष्ट्रभृदादयः ।

प्रसिद्धा राष्ट्रभृद्धोमा भुवनस्य पतेऽवधि ।
पुनश्च भुवनस्याद्या होमा रथमुखे दश ॥ ४७३

---

१९८. आवरणे विद्यमानाः केवलं M.M पाठे एव सन्ति ।
१९९. ब्रह्मौदनोऽधर्मकस्स्यात् इति R.M पाठः । लौकिकेऽग्नौ श्रितश्च सः इति M.M पाठः ।
२००. श्रिताः इति R.M पाठः । २०१. इति M.M पाठेऽधिकः ।

धृत्वा त्वञ्जलिना वायुर्होतव्यो वातनामसु ।
आद्यमन्त्रोऽग्न उदधे भूयास्मेत्यन्त इष्यते ॥ ४७४
अग्ने दुध्र द्वितीयस्स्यात् अग्ने गह्य तृतीयकः ।
अग्ने किंशिल तुर्यस्स्यादग्ने वन्य तु पञ्चमः ॥ ४७५
दुध्रादिषु तु सर्वत्र या त आद्यनुषज्यते[२०२] ।
परिक्रम्य प्रतिदिशमथाग्न्यभिमुखो भवन् ॥ ४७६
सर्पाहुतीस्तु जुहुयात् प्राङ्मुखस्तूत्तमाहुतिम् ।
समीची नाममन्त्रस्तु दधामीत्यन्त इष्यते ॥ ४७७
ओजस्विनीति मन्त्रस्तु पृदाकुरवधिर्मतः ।
प्राची नामासि मन्त्रस्तु स्वजो इत्यन्त इष्यते ॥ ४७८
अवस्थावा नाम मन्त्रस्तु राजिरित्यन्त इष्यते ।
अधिपत्नी नाम मन्त्रस्तु श्वित्र इत्यन्त इष्यते ॥ ४७९
वशिनी नाम मन्त्रस्तु ग्रीव इत्यन्त इष्यते ।
पञ्चस्वपि च मन्त्रेषु रक्षिताद्यनुषज्यते ॥ ४८०
हेतयो नाम मन्त्रस्तु सलिलान्तः प्रकीर्तितः ।
निलिम्पा नाम मन्त्रस्तु सगरान्तो द्वितीयकः ॥ ४८१
वज्रिणो नाम मन्त्रस्तु गह्वरान्तस्तृतीयकः ।[२०३]
अवस्थावान इत्येष समुद्रान्तश्चतुर्थकः ॥ ४८२
मन्त्रोऽधिपतयो नामाऽवस्वानन्तस्तु पञ्चमः ।
क्रव्या नामस्थ मन्त्रोऽयं निमिषान्तस्तु षष्ठकः ॥ ४८३
एषामन्ते वातनामं इत्यादि त्वनुषज्यते ।
सकृद्गृहीतेन[२०४] सर्पमहाहुतय ईरिताः ॥ ४८४
रुग्घोमान्ते कृतेऽथैनां बर्हिषेत्यादि तन्यते[२०५] ।

---

२०२. इत्यनुषज्यते इति M.M पाठः । २०३. नास्ति B.M पाठे ।
२०४. चतुर्गृहीतेन इति K.M पाठः ।
२०५. ऋग्घोमान्ते इति R.M पाठः । हुत्वा तिस्रो रुचोऽथौनां इति M.M पाठः ।

धिष्णियोपधानन्तु धिष्ण्यनिवापस्थान इष्यते ॥[२०६] ४८५
ममाग्ने वर्च इत्याद्या विहव्याख्या ऋचो दश ।
ताभिः प्रत्यृचमाद्याभिराग्नीध्रीये नवेष्टकाः ॥ ४८६
अश्मा तु पूर्व निहितो येन इत्युपधीयते ।
तयादेवतमन्त्रेषु पुरीषं स्यादमन्त्रकम् ॥ ४८७
होतृधिष्ण्ये चतसृभिराद्याभिरुपधाय तु ।
देवीरिति द्विरावृत्योपदध्यादिष्टकाद्वयम् ॥ ४८८
अथाग्निर्मन्युमित्यादि चतस्र उपधाय तु ।
अर्वाञ्चमिन्द्रेत्यावृत्योपदध्यादिष्टकाद्वयम् ॥ ४८९
प्रशास्तृधिष्ण्ये आद्याभिरिष्टकास्त्वष्ट कीर्तिताः ।
शंसिधिष्ण्ये तु दशभिरुपधाय दशैव तु ॥ ४९०
अर्वाञ्चमित्येव पुनरेकादश्युपधीयते ।
शास्तृवत्पोतृनेष्ट्रीयाच्छावाकीयोपधिर्मतः ॥ ४९१
ततश्च ब्रह्मसदने प्रशास्तुर्दक्षिणेन तु ।
पञ्चाद्याभिर्विहव्याभिरुपधाय तव श्रिये ॥ ४९२
इत्यादिभिस्तु तिसृभिस्तिसृणामुपधिर्मतः ।
मार्जालीये तिस्र आद्या विहव्या उपधाय तु ॥ ४९३
यमो दाधार तिसृभिस्तिसृणामुपधिर्मतः ।
विहव्याः पञ्च चात्वाले मृडा न इति च त्रयम् ॥ ४९४
सौत्रैरेवाष्टभिर्मन्त्रैः शामित्रस्योपधिर्मतः ।
विहव्याः पञ्चावभृथेऽव ते हेड इति त्रयम् ॥[२०७] ४९५
ताश्चावभृथकाले वा उपधेया इति स्थितिः ।[२०७]
कृते शामित्रचयने खण्डकृष्णाद्युदस्य च ॥ ४९६
अथाध्वनामध्वपत इत्यादि प्रतिपद्यते ।

---

२०६. शुल्बोपहितिरेतासां वर्णिता पूर्वमेव हि इति M.M पाठः । २०७. नास्ति M.M पाठे ।

आग्निक्यामेव वेद्यान्तु यूपैकादशिनी मता ॥[२०८] ४९७
न वेदिवृद्धिस्स्याद्वेदिसंमितामिति हि श्रुतिः ।[२०८]
देवसूहविषामत्र प्रयोगो वक्ष्यतेऽधुना ॥ ४९८
पात्रसंसादनादि स्यात् तत्र चत्वार एव तु ।
एकादशाष्टावथ च द्वादशैकादशापि च ॥ ४९९
कपालयोगाश्चत्वारः चरुस्थाल्यस्तु पञ्च च ।
एकं महच्छूर्पमपि ततः[२०९] कृष्णाजिनादि षट् ॥ ५००
पात्री प्राशित्रहरणं मदन्त्यपि च मेक्षणम् ।
पवित्रे वाग्यमप्रैषः सँव्विशन्तामिति क्रमः ॥ ५०१
वानस्पत्यासि वेषाय त्वेत्यादि सकृदेव हि ।
प्रदेशभेदादेकस्मिन् शूर्पे सर्वाणि निर्वपेत् ॥ ५०२
अग्नीषोमीयस्य कृष्णा अग्नेर्गृहपतेरपि ।
इदं देवानामिदमु न इत्यावृत्तिरसम्भवे ॥ ५०३
अवघातादि चैषां स्यात् तन्नानाबीजवन्मतम्[२१०] ।
प्रस्कन्दनान्तमाद्यस्य बीजस्य विततं मतम्[२११] ॥ ५०४
द्वितीयादिषु बीजेषु नाह्वानं स्याद्धविष्कृतः ।
तथैवाग्नीध्रप्रैषश्च दृषत्प्रहरणं न हि ।[२१२]
अग्नेस्तनूरसीत्यादि कर्म प्रस्कन्दनावधि ॥ ५०५
काण्डमेकैकबीजस्य त्वावर्तत इति स्थितिः ।
अदब्धेन व इत्येषां युगपत्स्यादवेक्षणम् ॥ ५०६
प्रतिबीजन्तु देवेभ्यः शुन्धध्वं मन्त्र इष्यते ।
त्रिष्पलीकर्तवै प्रैषः सकृदादौ भवेदिह ॥ ५०७

---

२०८. नास्ति B.M पाठे । २०९. एकमेव महच्छूर्पं ततः इति M.M पाठः ।
२१०. अवघातादि चैतेषां स्यान्नाना इति B.M पाठः ।
२११. बीजस्यापि कृतं मतम् इति M.M पाठः । बीजस्य विकृतं मतम् इति K.M पाठः ।
२१२. इति K.M पाठेऽधिकः ।

प्रक्षालनानि संसृज्य युगपन्निनयेदथ।
असंसर्गात्तु बीजानां विभागो नैव विद्यते ॥ ५०८
देवस्य त्वाधिवपाम्यादि[२१३] स्यादणूकरणावधि।
अभ्यावर्तेत वा काण्डं प्रतिबीजमिति स्थितिः ॥ ५०९
युग्ममन्त्रद्विरावृत्या[२१४] सावित्रस्योपधिर्मतः।
पिष्टानान्तण्डुलानाञ्च क्रमेणोत्पवनं मतम् ॥ ५१०
अन्या वा यजुषोत्पूय समापो अद्भिरग्मत।
आद्ययोरेव हविषोर्विभागश्चाभिमर्शनम् ॥ ५११
चतुष्कृत्वस्त्विदमहं सेनाया मन्त्र इष्यते।
सर्वेषामेव घर्मोऽसि निर्वापानुक्रमेण तु[२१५] ॥ ५१२
उरु प्रथस्व त्वचं च पुरोडाशेषु विद्यते।
युगपत्स्यादन्तरितं सर्वेषां हविषामिह ॥[२१६] ५१३
देवस्त्वा सवितागिनस्ते पुरोडाशेषु विद्यते।[२१६]
सम्प्रैषोऽविदहन्तस्तु सकृदेव भवेदिह ॥ ५१४
सं ब्रह्मणा पुरोडाशेष्वेव स्यान्न चरुष्विह।
आप्यलेपन्निनीयायं प्राणः प्राशित्रसम्मृजिः[२१७] ॥ ५१५
तृतीयं सप्तमञ्चाद्यं तूष्णीमेवाभिघारणम्।
एतत्त्रितयवर्ज्यस्य यज्ञोऽसीत्यभिमर्शनम् ॥ ५१६
प्रियेण नाम्नेत्यावृत्तिर्यथासम्भवमिष्यते।
अयं यज्ञश्च सर्वेषां यो नस्स्यादैन्द्र एव तु ॥ ५१७
तमिन्द्रो ज्येष्ठो भुवनान्नुदतामिति चोह्यते[२१८]।
आद्यस्य च तृतीयस्य वृत्रहेत्यनुमन्त्रणम् ॥ ५१८

२१३. देवस्य त्वाधिवापादि इति M.M & K.M पाठः।
२१४. युग्ममन्त्रं द्विरावृत्य इति M.M पाठः। २१५. निर्वापादि क्रमेण तु इति R.M पाठः।
२१६. नास्ति K.M पाठे।
२१७. अत्र पवित्रापिसर्गानन्तरं प्राशित्रसम्मार्ग उक्तः। प्रयोगानुपूर्व्याः व्यत्यासस्य कारणं विमर्शनीयम्।
२१८. इह इष्यते इति M.M पाठः।

इन्द्रियाव्यन्नाद इति सप्तमस्यानुमन्त्रणम् ।[२१९]
इतरेषां भवेत्षण्णामन्नादस्त्वनुमन्त्रणम् ॥ ५१९
अनु ब्रूहि यजेत्येव देवसूहविषां मतम् ।
उपांश्वेव प्रचारश्च देवसूहविषामिह ॥ ५२०
सहावदाय सर्वेभ्यः स्विष्टकृत्तु प्रचर्यते ।
अग्निः केवल एव स्यात्स्विष्टकृत्प्रैषवानपि ॥ ५२१
रौद्रशेषं क्षिपेदप्सु प्राशित्रेडं न तस्य तु ।
आग्नेयग्रहणं तत्र क्रतुपश्वनुवादकम् ॥ ५२२
उक्थ्यादिष्वपि सर्वत्र पशुराग्नेय एव वा ।
पक्षद्वयमिदं भाष्ये युक्तमत्र विचार्यताम् ॥ ५२३
ऐकादशिनपक्षस्तु साग्नौ निस्संशयो मतः ।
एकादशानां पशूनामलाभे[२२०] त्वेकमेव वा ॥ ५२४
उपाकुर्यात्पशुमिति भारद्वाजमुनिर्जगौ ।
उक्थ्यादावप्यतस्साग्नावाग्नेयो न विरुध्यते ॥ ५२५
तत्रैकयूपपक्षे तु पश्वैकादशिनी यदि ।
तदा न स्यादुपशयो नापि पात्नीवतः पशुः ॥ ५२६
अन्ततः प्रतिहर्त्रे तु दक्षिणानयने कृते ।
हिरण्यपात्रमित्यादि त्वाग्निकं प्रतिपद्यते ॥ ५२७
बहुदोग्धृत्वादि[२२१] गुणयुक्ताः कल्याण्य ईरिताः ।
अध्वर्युभागप्राप्तास्तु यावत्यो दक्षिणा इह[२२२] ॥ ५२८
ताः कल्याणीरेव दद्यादिति केचित्प्रचक्षते ।
वस्तुतस्त्वधिका एवाध्वर्योराग्निकदक्षिणाः ॥ ५२९
अध्वर्युर्यावतीभिस्तु सन्तुष्येत्तावतीरिह ।

---

२१९. नास्ति R.M पाठे ।
२२०. पशूनामालभेत् इति R.M पाठः ।
२२१. बहुदोग्ध्रीत्वादि इति R.M पाठः ।
२२२. अध्वर्योर्भागप्राप्तस्तु --- इह इति पाठा० ।

आग्निकीर्दक्षिणा दद्याद्राधयेदिति हि श्रुतिः[२२३]॥ ५३०
समिष्टयजुरर्थे तु ध्रुवातो गृह्यते स्रुचि ।
एकादशगृहीतन्तु सप्तस्वाप्यायनं मतम् ॥ ५३१
इष्टो यज्ञस्तस्य ते च दशमैकादशे मते ।
एकमन्त्रं केचिदाहुर्द्विरावृत्तिस्तथा सति ॥ ५३२
तृतीयनिधनान्ते तु सूर्यो वश्च युनज्मि वः ।
तेजिष्ठा वश्च तपनाः ततोऽभिष्ठित इष्यते[२२४]॥ ५३३
प्रविश्यापस्तदन्ते तु शर्कराभिरिहाष्टभिः ।
परिश्रित्योपधेयास्स्युरिष्टकास्त्वष्टसंख्यकाः ॥ ५३४
विहव्याः पञ्चावभृथेऽव ते हेड इति त्रयम् ।
आप आहवनीयस्य स्थानेऽवभृथकर्मणि ॥ ५३५
इष्टकास्तु तृणस्थाने तृणप्रहरणन्न हि ।
स्रौवमाघार्याग्नीदपस्त्रिरिति प्रतिपद्यते ॥ ५३६
अनूबन्ध्यावपायान्तु हुतायां वपनं मतम् ।
स्नाने कृतेऽथौदुम्बरीं स्रुचमित्यादि तन्यते ॥ ५३७
यूपैकादिशिनी चेत्स्यात्साग्निके वपनोत्तरम् ।
पात्नीवतं समाप्याग्नेर्विमोकस्तत्र हूयते ॥ ५३८
हुत्वा विमोकन्तु पशुपुरोडाशादि तन्यते ।
आमिक्षा यदि तां हुत्वा स्नात्वा पात्नीवतं मतम् ॥ ५३९
अग्नेर्विमोकश्च ततो राकायागादि तन्यते ।
सक्तुहोमे कृते यज्वा यदाकूतादिभिस्त्रिभिः ॥ ५४०
अनुमन्त्रयते धूमं तत आकूतयो दश ।
पुनर्मन उपस्थानं[२२५] यथाब्राह्मणमिष्यते ॥ ५४१

---

२२३. इति हि श्रुतम् इति B.M & M.M पाठः ।
२२४. वश्च तथास्त्वथोऽभिष्ठित इष्यते इति B.M पाठः ।
२२५. पुनर्मनोऽथोपस्थानं इति B.M & K.M पाठः ।

अयन्नो नभसेत्यादि वृष्टिरस्यन्तमेव तु ।
कृत्वा येऽग्नय इत्यादि दशाप्तिभिरुपस्थितिः ॥ ५४२
उपस्थायाप्तिभिर्यज्वाऽऽरोप्य प्राजहितानलम् ।
प्रयात्युदवसानीयादेशं पत्न्या सहैव तु ॥ ५४३

कौकिलीवाथ चरकसौत्रामण्यपि वा मता ।
रामा क्रमोढशूद्रा स्यात्तां न सङ्गच्छतेऽग्निचित् ॥ [२२६]

अथ पुरुषदण्डप्रमाणं एकविधपुरुषदण्डं – ४३अङ्गुलाः, २८ तिलाः, द्विविधः – ६१ अं, ३३ ति ।[२२७]

## ॥ इति वासुदेवदीक्षितविरचिताः अग्निकारिकास्समाप्ताः ॥



२२६. इति M.M पाठेऽधिकः । द्वितीयादौ चिते सति अन्यस्य वर्णस्य स्त्रियं क्रमोढामपि नोपेयात् । एतदनन्तरं द्विपदाः प्राणभृन्मन्त्राः इत्यारभ्य श्लोकचतुष्टयं मातृकाग्रन्थेषु यत्पठितं तत् **अथ खिलानि** इत्यत्र (३४१ पृष्ठे) दत्तम् ।

२२७. R.M पाठेऽत्रेदं वाक्यं पठितम् । एतदनन्तरं कुतोऽन्येषां विधानां दण्डप्रमाणं नात्र पठितमिति न ज्ञायते । कारिकासु तु सार्धसप्तविधस्यैव प्रयोग उक्तः ।

# ॥ अथ प्राचीनकारिका: ॥

प्रकृतौ षोडशिन्यग्निरग्निष्टोमेऽपि नेष्यते ।
विकृत्योस्त्वनयोरिष्टः साद्यस्क्रादिनिषेधतः ॥ १
प्रकृत्योश्च विकृत्योश्च चीयेतोक्थ्यातिरात्रयोः ।
पर्वण्येकाष्टकायां वा सङ्कल्पो विकृतेः क्रतोः[1] ॥ २
अमुना साग्निचित्येनेत्युक्त्वा पृष्ठं तु निर्दिशेत् ।
दक्षिणाकामनं विद्युत् प्रवाकादि तु सौमिकम् ॥ ३
सक्षेदान्ते विहृत्याग्निं बृहस्पत्यादिनाहुतिः ।
तूष्णीं स्रुक्स्रुवसम्मार्गश्चतुर्वाज्यस्य गृह्यते ॥ ४
जुह्वामष्टगृहीतेन सावित्राहुतिरिष्यते ।[2]
मन्त्रो यावदृचा स्तोमं[3] सत्याषाढो यथाब्रवीत् ॥ ५
चतुर्गृहीतमपरमृचा[4] स्तोमेति हूयते ।
ददेऽङ्गिरस्वदन्तैस्तु मन्त्रैरादानमभ्रियाः[5] ॥ ६
विपाजसान्तं धार्योऽग्निः खरः स्नातस्ततः शुचिः ।
गच्छन्त्यच्छेहि पर्यन्तैरग्निमादि[6] पुनर्जपेत् ॥ ७
स्वामी ब्रह्मा च बह्वर्थेऽच्छेमः पाप्मानमादिशेत् ।
तूष्णीमुद्धत्य वल्मीकं स्पृष्ट्वाऽपोऽथ बिले जपेत् ॥ ८
पूर्वदक्षिणपादेन त्वश्वमाक्रमयेत्क्षितिम् ।
अभिष्ठितोऽसि पाप्मानमिति ध्यानमथाहुतिः ॥ ९
परिवाजेति तिसृभिः प्रत्यृचं परिलेखनम् ।
एका लेखैकयर्चा स्यात् सहपर्णाजिनास्तृतिः ॥ १०
त्वामग्नादिर्यदा[7] तिस्रः पुरीष्योऽस्यादिरन्यथा ।

---

१. सङ्कल्पस्तु कृते क्रतोः इति H.T.M पाठः ।
२. नास्ति C.H & B.M पाठे ।
३. सावित्राहुतिरिष्यत इति पूर्ववाक्येन क्लिष्टान्वयात् होममन्त्रमृचा स्तोमं इति पाठान्तरं प्रामादिकमिति भाति ।
४. चतुर्गृहीतमपरा इति पाठा० ।
५. अभ्रयाः इति पाठा० ।
६. अच्छेहि मन्त्रान्तैरग्निमादि इति पाठा० ।
७. त्वामग्नादिरिति छान्दसः ।

पुरीष्यादि जनिष्वान्तैरुभयीभिर्यदाष्टभिः ॥ ११
सन्ते मन्त्रे वषट्कार आचार्येणानिबन्धनात् ।
यथापाठस्तु काम्येऽग्नौ नित्ये देवि वडस्त्विति ॥ १२
यदा त्वध्वर्यवे कर्त्रे प्रयच्छेत्स्वयमेव वा ।
रुद्रास्सम्भृत्य संसृष्टामित्येतौ याजमनकौ ॥ १३
ध्रुवासि धारयेत्यादिरनुषङ्गश्चतुर्ष्वपि ।
गार्हपत्यादपोह्याग्निं धूपयित्वा पुनः पचेत् ॥ १४
एको वरूत्रयस्त्वादिर्जनयस्त्वादि चापरः[८] ।
वरूत्रमन्त्रे त्वादेवीः पचन्त्वित्यनुषज्यते ॥ १५
पुरुषस्य शिरो नास्ति वायव्यः क्रियते यदा ।
पर्वणोः पशुबन्धेन यक्ष्ये नो वृष्टिविद्युतौ ॥ १६
षड्ढोत्रादि समं वायुर्नियुत्वान्न च दक्षिणा[९] ।
हिरण्यगर्भ आघारे प्राजापत्यानुमन्त्रणम् ॥ १७
पुरोडाशकपालानि द्वादशैव प्रजापतेः[१०] ।
उपांश्वेव पुरोडाशः सोऽपि चाग्नेयवैकृतः[११] ॥ १८

| |
|---|
| यद्वा वैश्वानरोऽथाग्नीषोमीयादिपशुश्वपि[१२] । |
| प्राजापत्यः पशुर्वेति पक्षस्सिद्धस्तु बह्वृचाम् ।[१३] |

ऐन्द्रः प्राणे शिरश्छेदः पश्वन्ते घर्मसम्भृतिः ।
तन्नाशे पुनरालम्भं कुर्याद्वद्वा मृदादिभिः ।[१४]
घर्मेष्टका कुलायिन्यौ षोडशी पादसंज्ञिके[१५] ॥ १९

---

८. आदि तूत्तरः इति पाठा० ।
९. नियुत्वान्नात्र दक्षिणा इति पाठा० ।
१०. पुरोडाशकपालानां द्वादशैव प्रजापतिः इति पाठा० ।
११. आग्नेयवैकृतिः इति पाठा० ।
१२. एतद्वाक्यम् ऐन्द्रः प्राणे---घर्मसम्भृतिः इत्यतः परं N.M पाठे एव विद्यते । अर्थक्रमानुरोधेनात्रैव योजितम् ।
१३. इति H.T.M पाठेऽधिकम् ।
१४. एतत् केवलं N.M पाठे विद्यते । उत्तरार्धं H.T.M पाठेऽपि विद्यते ।
१५. पादसंज्ञिते इति पाठा० ।

## ॥ इष्टकाकरणिकारिकाः ॥*

अष्टेष्टकाः परे श्येने षोडश्याद्याश्च षट् स्फुटाः ।
अणूकसंज्ञिके च द्वे सूत्रकॢप्ताः षडेव वा ॥ २०
पार्श्वे चतुर्थ्यास्त्रिपदं त्रिपञ्चकं
एका तिरश्ची त्रिदशाङ्गुला मता ।
षट्सप्तकान्या[१६] च तिलद्विसप्त
दीर्घाक्ष्णया षोडशिसंज्ञिकात्र[१७] ॥ २१
पूर्वश्येने चतुर्थी या षोडशिसंज्ञिकात्र सा ।
नवमी च तथा पाद्या अर्ध्यायास्त्रिंशके उभे[१८] ।
द्विचत्वारिंशदपरं चतुर्दशतिलान्वितम् ॥ २२
त्रिसप्तके द्वे तिलसप्तयुक्ते
त्रिंशत्तिरश्ची नवमी मतेष्टका ॥ २३
पूर्वश्येने नवम्येषा पादसंज्ञात्र सा मता ।[१९]
त्रिंशके[२०] पार्श्वयोः काष्ठे तिर्यक् सप्तदशाङ्गुले ॥ २४
तिलपञ्चकसँय्युक्ते एषा पक्षेष्टका मता ।
चत्वारिंशत्कर्ण एकः तिलैर्द्वादशभिर्युतः ॥ २५
तिलविंशकसँय्युक्तः[२१] कर्णोऽन्यः सप्तविंशकः ।
तिलपञ्चकसँय्युक्तं सत्यं सप्तममित्यपि ॥[२२] २६
माया साष्टादशतिला तया पक्ष्यौ प्रजम्भयेत् ।[२३]
ते द्वे पार्श्वेन संश्लिष्टे पक्षमध्या षडश्रिका ॥ २७

---

१६. षट् सप्तिकान्या इति पाठा० । १७. संज्ञिका तु इति पाठा० ।
१८. नवम्यश्च --- त्रिंशके इति । नवम्याश्च --- त्रिंशके उभे इति द्विधा मातृकापाठः । शुल्बसूत्रतद्व्याख्यानुसारं 'नवमी च' इति परिष्कृतः ।
१९. नास्ति C.H पाठे । २०. त्रिंशिके इति पाठा० । २१. तिलपञ्चकसंयुक्तः इति अपपाठः ।
२२. नास्ति C.H पाठे । सप्ताङ्गुलं नवतिलं नमनी सप्तमं (भ)वेत् इति B.M पाठः ।
२३. पक्ष्यां प्रजम्भयेत् इति पाठा० । नास्ति C.H पाठे । * ३४२ तमे पृष्ठे इदं व्याख्यातम् ।

पक्षेष्टकां दक्षिणपूर्वदीर्घ–
कर्णां च तस्या उदगर्धसंज्ञाम् ।
प्रत्यक्तिरस्थद्विपदां समस्येत्
पक्षाग्रसंज्ञा भवतीष्टका सा ॥ २८
अर्ध्यातृतीयप्रमिते[२४] च पार्श्वे
षष्टिश्च सा त्र्यश्रिरणूकसंज्ञा ।
अर्ध्यातृतीयप्रमिते[२५] च पार्श्वे
त्रिंशत्तिरश्च्याविययमप्यणूका ॥ २९
अस्या एकाक्ष्णया[२६] रज्जुः त्रिंशदङ्गुलसंमिता ।
अपरा सप्तषष्टिः स्यात् तिलैर्युक्ता त्रिपञ्चकैः ॥ ३०
सार्धं शतं कारयेत् षोडशीना –
मर्ध्याश्शतं चापि चतस्र इष्टकाः ।
पाद्याश्शतं सप्ततिरेकयुक्ताः
पक्ष्यास्तु षट्षष्टिचतुश्शती स्यात् ॥ ३१
त्रिरष्टसंख्या अपि पक्षमध्याः
पक्षाग्रसंज्ञाश्च षडष्टसंख्याः ।
नव त्रयस्त्रिंशदणूकसंज्ञा –
श्चोडान्विताः पञ्चसहस्रमेताः ॥ ३२
षट् पादा नाकसच्चोडाश्चतस्रः पक्षसंज्ञिकाः ।
अर्ध्ये पादे षट्कर्णे[२७] चतस्रः पादसंज्ञिकाः ॥ ३३
द्वात्रिंशदायतास्तिर्यक् सत्रिपादास्त्रयोदश ।
गार्हपत्यचितेः पञ्चशतं तिस्रश्च नैर्ऋतीः ॥ ३४

---

२४. तृतीया प्रमिते इति पाठा० । २५. तृतीया प्रमिते इति पाठा० ।
२६. अस्या साक्ष्णा या इति पाठा० ।
२७. अध्येधो द्वि षट् करणे । अर्धे वा द्वे च करणे । अर्ध्य पाद षट्करणे इति पाठान्तराणि । अस्य वाक्यस्य पाठान्तराणां च अर्थो नावगतः ।

द्वाविंशतिश्च त्र्यंशौ च मण्डलायां चतुस्समाः ।[२८]
प्रध्यन्ते तावदेकैकं दश हीनमथापरम्[२९] ॥ ३५
तृतीयं वक्रमिष्टं स्यात्ततोन्यः सप्तविंशतिः[३०] ।
प्रध्यन्तवत्प्रधेर्मध्यं द्वितीये द्वे तु कल्पयेत् ॥ ३६
प्रादेशकरणं ध्रीये होतुः पादोनमेकतः ।
मार्जालीयेऽन्यतोऽध्यर्धाः शेषोऽध्यर्धोनपादकः[३१] ॥ ३७
ब्राह्मणाच्छंसिनो द्वेधा तिर्यङ्मानी दशाङ्गुला ।
अङ्गुल्यः पञ्चभागोनाः पार्श्वं प्रादेश[३२] एव तु ॥ ३८
तिर्यङ्नवाङ्गुलं पार्श्वं सदशांशास्त्रयोदश ।[३३]
एवं वा ब्रह्मशंसीये त्वष्टौ होत्रीय इष्टकाः ॥ ३९
प्रादेशत्रयमन्यत्र त्वेवमेकादश स्मृताः ।

[३४]
पचेदेता मथित्वाग्निं लौकिकादरणिद्वयात् ।
इक्षुपत्रादिपाकेन कर्तव्या लोहिताश्च ताः ॥

दीक्षणीया गृहेष्वेव द्रव्यनिर्देशनादिका ॥ ४०
अग्निर्वैश्वानरः पूर्व अग्नाविष्णू ततोऽदितिः ।[३५]
ध्रौवाद्दीक्षाहुतीस्सर्वा वातं प्राणमिहोत्तमे ॥ ४१
षडाग्निक्यः स्रुचैव स्युर्याजमानं न किञ्चन ।
ध्रौवाद्दीक्षाहुतीस्सर्वाः सौमिकीराग्निकीरपि ॥[३६] ४२
षडाग्निक्यस्त्वाहुतयो हूयन्तेऽध्वर्युणैव तु ।[३६]

---

२८. त्रिंशौ च मण्डलायाश्चतुस्समाः । द्वाविंशतिस्तृतीयांसौ मण्डलाय इति पाठा० ।
२९. दशाहीनमथापरम् इति पाठा० ।
३१. अर्धोनपादिकाः इति पाठा० ।
३०. षष्ठोऽंशः पञ्चविंशतिः, षष्ठांशां पञ्चविंशतिः, षष्ठांशात् पञ्चविंशतिः इति पाठा० ।
३२. पञ्चविंशोनाः पार्श्वः प्रादेशः इति पाठा० ।
३३. ब्राह्मणाच्छंसिधिष्णियस्य द्वेधा इष्टकाकरण्यो दर्शिताः । कारिकार्थः इष्टकाकरणीव्याख्यायां दर्शितः ।
३४. इति B.M पाठेऽधिकः ।
३५. षष्ठ्यां तिथौ गृहे चैव द्रव्यनिर्देशनादिकम् ॥
अग्निर्वैश्वानरः पूर्वमग्नाविष्णू ततोऽदितिः इति पाठा० ।
३६. क्वाचित्कः पाठः ।

कृष्णाजिनादि सम्भारयजुरन्ते प्रवृञ्जनम् ॥[३७] ४३
शणाद्याहवनीयानुगमनान्तं निवर्तते ।[३८]
गतश्रियादेस्तूखायां तूष्णीं निर्मथितं क्षिपेत् ॥ ४४
पृथगाहवनीयाग्निर्धार्यः सन्निवपेत्सह ।
क्षिपेदाहवनीयाग्निं काम्यं श्येनादिमाचरन् ॥[३९] ४५
उख्यनाशे प्रणीयाग्निं प्रवृञ्ज्याद्योनितोऽपि वा ।
संशितान्तं ततः कृष्णं वासो गौर्भुव आहुतिः ॥ ४६
याजमानं दृशानादि समिधाग्न्यन्तमिष्यते ।
तूष्णीमादानमुख्यस्य सुपर्णोऽसीति चोत्थितः[४०] ॥ ४७
रुक्मकृष्णाजिने तूष्णीमुन्मुच्यादाय चाजिनम् ।
तूष्णीं समीपमासन्द्या आहृत्याथोपतिष्ठते ॥ ४८
आ त्वा हाग्रे बृहन्द्वाभ्यां येन दीप्त्वाङ्गुलीर्न्यचेत्[४१] ।

[४२]
वायव्यः पशुरेकस्तु सर्वेषामेव रूपधृत् ।
स एवापस्तम्बमते बह्वृचां न स इष्यते ॥
प्राजापत्यस्तु विहित आश्वलायनशाखिनाम् ।
अथवा पूर्वयाहृत्य परयैवोपतिष्ठते ॥

गृहीत्वा व्रतमादध्यात् समिधौ नोत्तराज्यते ॥ ४९
दैवीं धियाद्यहश्शेषं श्वो वाक्सर्गो दिवस्परि ।
येन देवा व्रतं प्राग्वद्रात्रावग्ने त्वमेव च ॥ ५०
तृतीयेऽह्नि त्वमग्ने च विश्वे देवाः पुनर्मनः ।

---

३७. स्यात्कृष्णाजिनदीक्षादि कर्मा सम्भारवाचनात् इति पाठा० ।
३८. गमनान्ते निवर्तते, गमनान्ता निवर्तते इति पाठा० ।
३९. काम्यमग्निं कुर्वन् न कुर्यादाहवनीये प्रवृञ्जनम् । किन्त्वाहवनीयं क्षिपेदेवोखायाम् । "काम्याः गुणविकाराः इत्यारभ्य शुल्बे ये प्रउगादयो विहिताः ते काम्याग्नयः" ।
४०. चोत्थितिः इति पाठा० ।
४१. येन देवा अथ स्वाहा यज्ञं मुष्टीत्यादि तन्यते इति पाठा० ।
४२. H.T.M पाठेऽधिकः ।

वाचं यत्वोदिते सर्गो रुक्माद्यासादनात्समम् ॥ ५१
प्रत्यक्षं शकटेनैव प्रयाणेऽग्नित्रयं नयेत् ।
याने निवर्तते भद्रात् भस्माध्वर्युः प्रवेशयेत् ॥ ५२
मन्त्रेणोख्यं परौ तूर्ष्णीं प्रेदग्नेऽक्रन्ददेव च ।
अध्यवस्योख्यमासन्द्यामन्यावायतने स्वके ॥ ५३
घृतानुषिक्तामाधाय व्रतमग्ने त्वमेव च ।
इमं स्वित्युद्धरेदग्निमन्तश्शिक्यं न बाह्यतः ॥ ५४
उखायां प्रक्षिपेद्भस्म प्रसद्येत्यग्निना सह ।
स्थापिते यजमानेन्धे[४३] पुनस्त्वेति पुनस्समित् ।
क्रयस्याह्नि दृशानादि येन देवा दिवस्परि ॥ ५५
पृष्ठ्याष्टारत्निरर्धे च पाशयोश्चापि शङ्कवः ॥ ५६
त्र्यरत्नावन्छनं[४४] शङ्क्वोः पाशयोः प्रतिमोचनम् ।
तिर्यग्द्वाभ्यां चतुर्भिः प्राक् द्वाभ्यां चित्याः समद्वयम् ॥[४५] ५७
तदन्तेऽपेत वीतेति[४६] वाङ्म आसन्न विद्यते ।
चितस्स्थेति चितस्स्थेति मन्त्रावृत्तिस्त्रिके त्रिके ॥ ५८
शुल्बोपधानं शुल्बोक्तं मन्त्रक्लृप्तिरिहोच्यते ।
मध्यरीतौ द्वितीयाद्याश्चतस्रोऽयं स आदिभिः ॥ ५९
पूर्वस्यामपरस्यां च चतुर्थीं पञ्चमीं तथा ।
ततो लोकंपृणाशिष्टा व्यूहन्नेव मृदं क्षिपेत् ॥ ६०
चात्वालादाहृतान्पांसून् वैश्वानर्या चितौ क्षिपेत् ।[४७]
अपरस्मिन्द्वितीयाद्याषडाद्यापि तदुत्तरा[४८] ॥ ६१

---

४३. अध्वर्युणा स्थापितेऽग्नौ यजमानेनेन्धने कृतेऽध्वर्युः पुनस्त्वादित्या इति पुनरग्निमुपसमिन्धते इत्यर्थः । यजमानेऽर्थे इति पाठा० ।

४४. त्रिभिर्निरञ्छनं इति पाठा० ।

४५. शुल्बोक्तविधिना मानं व्यायामं चतुरस्रकम् इति B.M & H.T.M पाठः ।

४६. ततो अपेत वीतेति इति पाठा० ।

४७. नास्ति C.H & B.M & H.T.M पाठे ।

४८. षडाद्याथ तदुत्तरा इति पाठा० ।

अयं सादि पुरीषान्तं पञ्च व्यत्यासमावृता[४९]।

| | |
|---|---|
| अपरस्मिन् मध्यरीतौ द्वितायाद्याषडिष्टका।<br>मध्यरीतावेव चाद्या चोत्तरा त्वष्टका स्मृताः॥ | ४९(अ) |

प्रागन्ताः स्युर्द्वितीयाद्याश्चतस्रो मध्यमावलौ॥[५०] ६२

अयं स आदिकैर्मन्त्रैरिडामादिद्वयेन तु।[५०]

अन्तिमे चोत्तरावल्यामाद्ये द्वे दक्षिणावलौ॥[५०] ६३

अजीजनन् कराभ्यां स्यात् सन्युप्याथाभिमन्त्र्य च।

सन्युप्योख्यमथाज्याद्यैरुखां संसृज्य पूरयेत्॥[५१] ६४

स्यूतेत्युखायाः सम्पूर्तिर्निरूह्यादाय नैर्ऋतीः।

ऋचा शिक्यं ततस्सूत्रमासन्दीं शर्करान्तु वा॥ ६५

निदध्याद्दक्षिणं पाशं शिक्यमुत्तरतस्स्थितम्।

इष्टकास्वेव कर्तव्यमभिमन्त्रादिकं त्रिकम्[५२]॥ ६६

प्राग्वंशाद्वाह्यतस्सर्वे शन्नोऽध्वर्युः प्रवेशयेत्।

सर्वे निवेशनोऽहन्त्वदाजुह्वानादि सौमिकम्।

स्थाली निधाने वेदिस्स्यात् द्विपदप्रक्रमेण तु॥ ६७

## वेदिमानम्*

मीयते साग्निकी वेदिः प्रक्रमैस्त्रिंशदङ्गुलैः॥ ६८

तिथ्यर्धमासरसषण्णवदृग्दशाथ

त्रित्रिस्वरेन्द्रियमथैकमुनीन्दुषट्षट्।

द्विद्वीन्द्रियद्विदशकत्रिकवह्निसप्त

पञ्चैकमुन्यृषिवसुद्विशराः क्रमेण॥ ६९

प्रादेशार्धेन संख्याय पृष्ठ्यायामिह शङ्कवः।

---

४९. आवृताः, चित्यां समाव्रताः इति पाठा०। आवरणस्थः इति आन्ध्रकारिकापाठः।

४९(अ) आन्ध्रकारिकापाठः।

५०. नास्ति C.H & B.M & H.T.M पाठे।

५१. नास्ति C.H & B.M & H.T.M पाठे।

५२. अभिमन्त्र्यादिकं त्रिकम् इति पाठा०।

*. ३४८ तमे पृष्ठे इदं व्याख्यातम्।

अशीत्यामन्छनं कुर्यात् षष्टिर्मध्यं तु पाशयोः ॥ ७०
प्रक्रमेणादितश्श्रोण्यौ द्वितीये पञ्चमे सदः ।
अरत्निदशमास्तूदगरत्निद्वादशाः परे[५३] ॥ ७१
तृतीये च चतुर्थे च धिष्ण्या अङ्गुलिभिर्विमा[५४] ।
अष्टादशसु होत्रीयं षड्विंशत्या च सञ्चरः ॥ ७२
षट्त्रिंशतिः प्रशास्त्रीयं सञ्चरो ब्रह्मसीदनम्[५५] ।
एवमुत्तरतो धिष्ण्याश्चत्वारः सञ्चरा अपि ॥ ७३
षष्ठे द्वादश आग्नीध्रमष्टमे दशमेऽप्यथ ।
अष्टादाशाङ्गुलोनेषु द्वादशस्वधिकेषु च ॥ ७४
ध्रीयलीयौ हविर्धानं सप्तमेऽथ चतुर्दशे ।
प्रादेशोन चतुर्ष्विष्टं[५६] विंशे पूर्ववदुत्करः ॥ ७५
पञ्चविंशे तथा सप्तविंशे शामित्रधिष्णियम् ।
अष्टादशाङ्गुलोनेषु षोडशस्वधिकेषु च ।

[५७]
| |
|---|
| अष्टादशं तु द्वाविंशात् चतुर्थ्योने द्विपुच्छकम् ।<br>तदारभ्यात्मनो मानं त्रिंशात्पञ्चोनितेऽपि च ॥<br>तदारभ्य शिरः कार्यं पुरस्ताद्विविशिष्यते । |

द्वितीये श्येनचिन्माने अन्त्येऽसौ पूर्ववद्विमा ॥ ७६

## ॥ अथाग्निमानम् ॥*

शङ्कुः शिरोऽग्रे तत्पश्चात् प्रक्रमे प्रक्रमे दश ।
तत्पश्चात्त्रिषु पुच्छाग्रं प्रक्रमैरेव मीयते ॥ ७७
पञ्चविंशकसूत्रे तु चिह्नं द्वादशसु स्मृतम् ।
पञ्चकं पाशयोर्मध्ये[५८] पुच्छाद्यैरेव मीयते ॥। ७८

---

५३. द्वादशा परे इति पाठा० । ५४. विमाः इति पाठा० । ५५. ब्रह्मसादनम् इति पाठा० ।
५६. प्रादेशोन चतुष्षष्टिं इति प्रामादिकः पाठः । ५७. इति H.T.M पाठेऽधिकः ।
५८. मध्यं इति पाठा० । * ५१५ तमे पृष्ठे इदं व्याख्यातम् ।

आद्ये चतुर्षु पुच्छाग्रमेकस्मिन्पूर्वकेऽप्ययः ।
पक्षतिस्त्रिषु तुर्ये स्यात्तत्र पक्षाङ्गुलीयकौ ॥ ७९
सह पादेषु दशसु सपादैकादशस्वपि ।
पञ्चमादिचतुर्ष्वेवं द्वौ द्वौ पक्षाङ्गुलीयकौ ॥ ८०
पक्षतिश्चाष्टमे व्यत्यस्यैकस्मिन् दशमेऽप्ययः ।
एकादशे च मूर्ध्नोऽंसः[५९] पक्षयोर्नमनं स्फुटम् ॥ ८१
पक्षाग्रचतुरस्राणामग्नीशानदलांस्त्यजेत् ।

[६०]
अथ पक्षाग्रमुत्सृज्य मध्ये पक्षस्य लेखयेत् ।
प्राची लेखां तु तस्यां च पक्षमूलां निपातयेत् ।
पुरुषं तत्र चिह्नं च त्वग्रे लेखा समा भवेत् ।
चिह्नाच्च पुरुषे प्राप्तपुरुषान्ते च लक्षणम् ।
नाना वाभिलिखेच्चिह्नद्वयात्पक्षद्वयेऽपि च ।

वेदिश्चतुश्शिखण्डान्ता वि मिमे त्वादिका मता ॥ ८२
न यूपो वि मिमे त्वादि यत्प्राग्वित्तायनीत्यतः[६१] ।
ततश्च प्रायणीयायाः ध्रौवाद्यातिथ्यमार्जनात्[६२] ॥ ८३
दर्भं तु रज्ज्वा विमितस्य मध्ये
खन्याद्घृतेनेत्यनुषज्य होमः ॥ ८४

[६३]
सजूरब्दादिमन्त्रेषु घृतेनेत्यनुषज्यते ॥

तद्वेणुमानं प्रकृताः क्रमन्ते
प्रेष्याबलीवर्दजलप्रदाश्च ।
अध्वर्युभृत्याः पृथगेवमन्त्र–
माहावसेके द्विगवं च सीरम् ॥ ८५

---

५९. मूर्धानं इति पाठा० । ६०. U.M पाठेऽधिकः ।
६१. यत्प्राग्वित्तायनीयतः इति पाठा० । ६२. ध्रौवादातिथ्यमार्जनात् इति पाठा० ।
६३. इति क्वचिदधिकपाठः ।

युञ्ज्यात्सकृद्योजनमन्त्रमुक्त्वा

गवां बहुत्वे बहवो युगाः स्युः ।

युक्ताभिमन्त्रस्तत उच्छ्रयस्स्या-

द्वध्वा युगैस्तज्जुहुयात्परेत्य[६४] ॥ ८६

शालामुखीये वर्माणि ब्रह्मा दक्षिणतस्स्थितः[६५] ॥ ८७

हुत्वा चतुर्भिस्सगवं च सीरं

संगृह्य कीनाशमुखाः[६६] क्रमन्ते[६७] ॥ ८८

अग्न्याक्रमे बहुत्वं स्यात् कीनाशपरिकर्मिभिः ॥ ८९

द्वाभ्यां तु कृष्ट्वा परिवर्तमानः

कामं जपेद्द्वादशकृत्व एव[६८] ॥ ९०

त्रिर्लाङ्गलं द्विश्च काममेकैकत्र विकर्षणे ॥ ९१

पुच्छप्रभृत्येव कृषित्रयं स्यात्

श्रोणीप्रभृत्यप्युभयात्तु पक्षात्[६९] ।

सकृद्विमोकः प्रतिगृह्य गास्तु[७०]

ऋचैकयैकौषधिरुप्यतेऽग्नौ ॥ ९२

व्रीहीन्यवान् माषतिलान् प्रियङ्गू-

नणूंश्च गोधूममथापि वेणून् ।

श्यामाकनीवारकजर्तिलांश्च

गवीधुकान्मर्कटगार्मुतांश्च ॥ ९३

ग्राम्यारण्यविभागेन सङ्ख्यामात्रमिहेरितम् ।

यथासूत्रक्रमेणैव तिलमाषादिरुप्यते ॥ ९४

या जातादिषु शिष्टानां पूर्वाभिः स्याद्विकल्पनम् ॥ ९५

---

६४. परे तु इति पाठा० ।

६५. शालामुखीये ब्रह्मवर्माणि --- दक्षिणतस्सदा इति पाठा० ।

६६. कीनाशसखाः इति पाठा० ।

६७. क्रमेत इति पाठा० ।

६८. एवं इति पाठा० ।

६९. उभयात्तु पक्षात्- पक्षयोः कर्षणे प्रत्यागमनेऽपि च कर्षणमित्यर्थः।

७०. प्रतिगृह्य गावः इति पाठा० ।

तत्स्थान उप्ते यदि लब्धिरिध्मे-
नाद्यौपसत्केन सह क्षिपेत्ताम्[७१]।
फलग्रहिस्त्विध्मसमानधर्मः
पृथक्च सम्भृत्य सहैव बन्धः[७२]॥ ९६
सन्नह्येदोषधीरिध्मे वापकालोत्तराहृताः[७३]।
तदौषधिवनस्पत्योः सामिधेन्यन्त आहितिः[७४]॥ ९७
पश्चादुदक् प्रागथ दक्षिणेति
मन्त्रैश्चतुर्भिः कृषिलोष्टसर्गः।
घृतेन सीतेत्यथ यावदग्नि
वित्तायनादि[७५] स्रुच उद्ग्रहान्तम्॥ ९८
वेदिर्वित्तायनीत्यादि व्याघारान्ते घृतेन वा।
चित्यग्निनयनात् पूर्वं व्रतं नात्र समिद्द्वयम्॥ ९९
अग्ने तवादिर्बहुलं चितस्स्था-
प्यायस्व सन्तेऽप्यभिमर्शनान्तम्[७६]।
ध्रौवात्स्रुचीत्यादि तु सौमिकं स्यात्
सुब्रह्मपर्यन्तमथाग्निकं स्यात्॥ १००
योऽग्निं चिनोतीह स एव कुर्यात्
द्वयोः प्रवर्ग्योपसदोस्तु मध्ये।
तिस्रश्च पाद्याः सह शर्कराभि-
रादाय सम्प्रेष्य हिरण्यगर्भः॥ १०१

---

७१. लब्धिरिध्मे नद्यौपसत्केन सह क्षिपेत्ताम्। तत्स्थानमुप्ते यदि लब्ध इध्मे स्यादौपसत्केन सह क्षिपेताम् इति पाठा०।

७२. समान बन्धः, सहैव होमः इति पाठा०। सहैव बन्धेन सहैव होमः अर्थात् सिद्धः।

७३. अन्तराहृताम्। इति पाठा०। ७४. सामिधेन्यन्तराहुतिः, सामिधेन्यन्त आहुतिः इति पाठा०।

७५. यावदग्निर्वित्तायनादि इति पाठा०।

७६. बहुलं चितस्थाप्यायस्वसंव्रत्य शिवाभिमर्शः, चितस्थाप्यायनं सन्त इति शिवाभिमर्शः, चितस्थेत्याप्यायस्व समूह्य शिवाभिमर्शः, इति पाठान्तराणि।

अश्वद्वयाग्रा अभितश्च बध्वा[७७]
प्रजापतिस्त्वा मयि यो न यास्ते ॥ १०२
पुच्छात्मशिरसि स्थाप्याः षोडशोदीच्यरीतयः ।
तत्राद्या पञ्चमी तुर्या सप्तमी द्वादशी तथा ॥ १०३
चतुर्दशी षोडशी च पाद्याः शिरसि चाग्रिमा ।
षोडशीभिर्द्वितीया स्यादणूके तत्र पार्श्वयोः ॥ १०४
अणूकाभिस्तृतीया स्यादेवं षष्ठी त्रयोदशी ।
तृतीया त्र्यश्रयस्तासां[७८] षोडश्यस्त्वन्यरीतिगाः ॥ १०५
प्राच्यो द्वादश मध्यस्था आत्मनः पक्षयोः स्फुटम्[७९] ।
षष्टिरात्मनि षण्मूर्ध्नि पक्षयोश्च चतुश्शतम् ॥ १०६
पुच्छस्था इष्टकास्त्रिंशत्प्रस्तारो द्विशतेष्टकः[८०] ।
अपरस्मिन् स्फुटौ पक्षौ पुच्छे रीत्य उदीचिगाः ॥ १०७
अर्ध्या षट् षोडशीरर्ध्या पुच्छाग्रेऽष्टेष्टकाः क्षिपेत्[८१] ।
तिस्रोऽर्ध्या द्वे च षोडश्यौ तिस्रोऽर्ध्या मध्यरीतिगाः ॥ १०८
पूर्वस्यां मध्यतः प्राच्यौ षोडश्यौ पार्श्वयोर्दले ।
एवं चेदुपधानं स्यात् पुच्छभेदो न विद्यते ॥ १०९
प्राच्यः षडात्मनो रीत्योर्मध्यमे शिरसा सह ।
षोडशी च षडर्ध्या च षोडशी दक्षिणावलिः ॥ ११०

[८२]
अर्ध्ये च षोडशी चैव षडर्ध्या षोडशी तथा ।
पुनरर्ध्ये तथैव स्युर्द्वितीये द्वादशेष्टकाः ॥

---

७७. अश्वद्वयं तावभितश्च बध्वा इति पाठा० ।
७८. तृतीयास्त्र्यश्रयः इति पाठा० ।
७९. आत्मन्यष्ठौ च पार्श्वयोः ।
८०. द्विशतेष्टकाः इति पाठा० ।
८१. अर्ध्या तु षोडशी चार्ध्ये षोडश्यावर्धिका (वभितो) द्वयम्।
षोडशी चार्धसङ्ख्याया पुच्छाग्रीया दशेष्टकाः
षोडशीभिर्द्वितीया स्यात् पार्श्वयोरर्धसंज्ञिके इति पाठा० ।
८२. आन्ध्रकारिकापाठः ।

अर्ध्या षोडश्यष्ट चार्ध्याः षोडश्यर्ध्याप्युपादिमा[८३]।
षोडशीभिर्मध्यरीत्यौ तयोरर्ध्ये उपान्तिमे ॥ १११
पञ्चमी स्याद्द्वितीयावत् षष्ठी दक्षिणरीतिवत्।
द्वे मूर्ध्नि विंशतिः पुच्छेऽप्यष्टपञ्चाशदात्मनि ॥ ११२
द्वे षष्टी पक्षयोरेवं प्रस्तारो द्विशतेष्टकः[८४]।
प्रस्तारे तु द्वितीये स्याद्यदि पादैः प्रपूरणम् ॥ ११३
आत्मनः पार्श्वयोरर्ध्या द्वादशद्वादश त्यजेत्।
पाद्याषोडश तत्रैव क्षिपेदष्टौ च षोडशीः ॥ ११४
समुदायस्य संख्यानं ज्ञेयं तदनुरूपतः।
धाभिरन्तमृतव्यासु पुरस्तादनुषज्यते ॥ ११५
सजूर्देवैर्वयोनाधैः परस्तादनुषज्यते।
अमृन्मयीरिष्टका यास्सर्वास्ता अवटे क्षिपेत्[८५]॥ ११६
इन्द्रं विश्वाहुतिर्वाङ्म आसन्ना-
रुह्य[८६] साश्वोऽभ्ययदित्यथापाम्।
अमृन्मयीनामपि चेष्टकानां
कुर्यात्तयादेवतमत्र साम ॥ ११७
वार्षाहराख्यं यदपां निधिस्त-
द्यद्वान्यदिच्छन्ति तदेव चोद्यम्।
रुक्मं ह्युदक्छिद्रमथोपदध्या-
द्धैमं नरं प्राक्शिरऊर्ध्वबाहुम् ॥ ११८
ध्यात्वान्तरिक्षं ह्यरविन्दपर्णं
तत्स्थं रवेर्मण्डलमेव रुक्मम्।

---

८३ उपादिमा- उपादिमारीतिः = द्वितीयारीतिरित्यर्थः। ८४. द्विशतेष्टकाः इति पाठा०।
८५. अमृन्मयेष्टका देशबाधिनीरवटे क्षिपेत्,
अमृन्मयीरिष्टका देशबाधिनीरवटे क्षिपेत् इति पाठा०।
८६. इन्द्रं तत्त्वाहुतिर्वाङ्म आसन्नारुह्य इति पाठा०।

आतृण्णकं मुक्तिपदं मुनीनां
तन्मण्डलस्थं पुरुषं पुराणम् ॥ ११७

आघारयोर्नास्ति हिरण्यमस्ति[८७]
स्वाहेति भूमौ निखनेत्स्रुगादीन् ।

स्रुचोरुपस्थानममन्त्रकेऽपि
तुल्यं तया देवतयोपधानम् ॥ १२०

प्रजापतिस्त्वाद्यबुधश्च मन्त्रं
वदेत्तयादेवतमन्ततो भूः ।

दद्यादविद्वान् यजमानतो गां
लब्ध्वेष्टकानामिह[८८] मण्डलाद्याः ॥ १२१

मन्त्रास्तु तत्र प्रथमानि षट् षट्
पदान्यथाग्नेरभिसंविशन्तु ।

अन्ते ध्रुवे सीदतमत्र चोहो[८९]
यथर्त्वषाढा त्ववसानवर्ज्या ॥ १२२

शूर्पं च साद्यं मुसलं च तूष्णी-
मौदुम्बरं पूरणमप्यमन्त्रम् ।

हत्वा परापूय तयोपदध्या-
दुलूखलं तण्डुलपूर्णमेव ॥ १२३

षष्ठ्यां च रीत्यां तु तृतीयगोखा
द्युते द्विरुक्तिः समिदादिकाले[९०] ॥ १२४

वायव्यं पञ्चभिर्मन्त्रैश्चित्वा होमावुपस्थितिः *॥ १२५

आदित्य वातस्य चाजस्रमिन्दुं
वरुत्रि यो अग्निरित्युखायाम् ।

अन्ते तया देवतयोपदध्या-

---

८७. हिरण्यमत्र इति पाठा० ।
८८. अस्य वाक्यस्य अर्थो नावगतः । लब्धेष्टकानां इति पाठा० ।
८९. अत्र चोक्त्वा इति पाठा० ।
९०. समिदादि तस्मिन् इति पाठा० ।
*. अयं U.M पाठः ।

ततोऽक्षिहोमाविह चित्रमाप्राः ॥ १२६

इमं द्वीमं त्वेकमिमं समुद्र–
मिमामजाहीत्युपतिष्ठते तत् ।
अन्त्यास्तु तिस्रस्त्र्यवसानकाः स्यु–
रेकेन सर्पं यजुरेव काम्ये ॥ १२७

प्रत्यक्शिरा ऊर्ध्वबाहुः प्राक्पादा पुरुषाकृतिः ॥ १२८

प्रत्यङ्मुखः स्वाम्युपतिष्ठते तां
प्राचीनपादां पुरुषाकृतिं च ।
अथोच्यते क्लृप्तिर् ऋषीष्टकानां
षडिष्टका आयव आदि चाद्भ्यः ॥ १२९

सप्तर्तसत्सप्तम एव धाम्यै
सनिस्तु षड् गूर्द इतीह षष्ठः ।
षट् क्षत्रमित्यादिषु षष्ठ एव
क्षत्राय विश्वेषु दशमो दिवीति ॥ १३०

एकादश स्वर्जिदथो सपत्न–
हनादिरा शत्रुहणं तु सप्त ।
एकादशोद्वत् दश चेषि सीद
संवत्सरे षट् चतुर्दशोर्ध्वाः ॥ १३१

षट् पिन्वमानासि शतं प्रदिष्टं
यथागणं तत्र निधानदेशाः ॥ १३२

द्विपदाः प्राणभृन्मन्त्रा अन्त्याः पञ्चपदा मताः ।
त्रिपदौ प्रथमौ मन्त्रौ नवमश्च गणे गणे ॥ १३३

अपाना द्विपदा मन्त्राः षष्ठस्त्रिपद इष्यते ।
दशानां तेषु पितर इत्यादि जप इष्यते[९१] ॥ १३४

---

९१. दशकं तेषु पितर इत्यादेर्जप इष्यते इति पाठा० ।

९२. साहस्रे तौ विकल्पेते द्विषाहस्रे समुच्चयः इति पाठा० ।

ऋषीष्टकाश्शतं चापि प्राणापानभृतश्शतम् ।
साहस्रे तौ विकल्प्येते द्विषाहस्रे समुच्चिताः[९२] ॥ १३५
आयवाद्यत्र गण्यन्ते शतं चात्र ऋषीष्टकाः[९३] ।
ध्रुवास्सीदत कुम्भेषु युगला एकमन्त्रकाः[९४] ॥ १३६
भेदेन पूर्तिस्सहशल्कपातः[९५]
सर्वत्र कुम्भ्युत्तरतः पुरस्तात् ।
बृहस्पतिर्देवतयात्र चिन्त्यो
लोकाग्निपक्वो ह्यभिमन्त्र्य ऋग्भ्याम् ॥ १३७
परे श्येने पक्षवर्जं षोडशोदीच्यरीतयः ॥ १३८

## ॥ मन्त्रोपधानम् ॥

पञ्चम्यन्त्याक्रमण्याख्या तुर्या मध्ये तु मण्डला ।
आरोहे उत्तरे वामा द्वितीया सप्तमावलौ ॥ १३९
सिचौ तदन्त्यपूर्वान्त्ये ज्योतिः पञ्चम्युपादिमा ।
त्रयोदशीचतुर्दश्योः सँय्यान्यौ द्वे उपान्तिमे ॥ १४०
ऋतव्ये पूर्वयोरन्त्ये अषाढा ज्योतिरुत्तरा ।
एकादश्यन्तिमा घर्मा द्वादश्यन्त्या कुलायिनी ॥ १४१
षष्ठीमध्य उखास्थानं वक्ष्यते पुरुषाकृतिः[९६] ।
द्वादश्याः पूर्वयोराद्ये द्वादश्यां त्रिचतुर्थके ॥ १४२
प्रागायताश्च षोडश्यः सप्तम्यां त्रिचतुर्थके ।
आद्ये चापरयो[९७] रीत्योर्द्वादश प्रथमो गणः ॥ १४३
पाद्याश्चतस्रो द्वादश्यां षोडश्यो मध्यरीतिगाः[९८] ।
पाद्याश्चतस्रः सप्तम्यां इति द्वादश मध्यमः ॥ १४४
चतुर्दशीत्रयोदश्योरन्त्ये पाद्ये च पश्चिमे ।

---

९३. त्वर्धमृषीष्टकाः इति पाठा० ।
९४. युगला एव मन्त्रकाः इति पाठा० ।
९५. शल्कपाताः इति पाठा० ।
९६. प्रवक्ष्ये पुरुषाकृतिम् इति पाठा० ।
९७. आद्ये च परयोः इति पाठा० ।
९८. मध्यतः स्थिताः इति पाठा० ।

प्रागायताश्च षोडश्यः सप्तम्यां पादिकाद्वयम् ॥ १४५

अन्त्योपान्त्ये चापरयोः[९९] इत्येता द्वादशोत्तमः ॥ १४६

प्रत्यङ्मुखः स्वाम्युपतिष्ठते तां
प्राचीनपादां पुरुषाकृतिं च ।[१००] १४७

प्रत्यक्शिरा ऊर्ध्वबाहुः प्राचीना पुरुषाकृतिः ।
शिरोऽग्रे द्वितयं हित्वा पञ्चापस्याः पुरस्स्थिताः ॥ १४८

दक्षिणा उत्तराश्चापि पक्षयोः पुरतो दश ।
पुच्छस्य दक्षिणे पार्श्वे पञ्च पश्चादपस्यकाः ॥[१०१] १४९

| |
|---|
| हैमेष्टकाः प्रतिदिशं मध्ये त्वन्त्या निधीयते ।[१०२] |

उदक्पक्षाप्ययाग्रीयाश्चतस्रः पक्षगोचराः ।
नवमीदशमीरीत्योरन्तिमे आयवादि षट् ॥ १५०

दक्षिणात्मतिरश्चीनाः षोडश्यः पूर्वपादिके ।
आद्याप्ययाग्र्या सप्तर्तसत् गणोऽथ पुरस्त्रिकम् ॥ १५१

पक्ष्यास्त्रिंशत् समद्ध्यीयाः सन्याद्या स्वर्जिदन्तकाः ।
सपत्नहगणाद्याश्च सवंत्सरगणान्तिकाः[१०३]॥ १५२

उदक्पक्षाः समद्ध्यीयाश्चतुस्त्रिंशदृषीष्टकाः ।
आद्यामध्यां च पूर्वस्यां चतुर्थीमवशिष्य च ॥ १५३

उत्तमौ तु गणौ पुच्छे विंशतिस्ता ऋषीष्टकाः ।
ऋषीष्टकानां पश्चात्तु अष्टाविंशतिरिष्टकाः ॥[१०४] १५४

लोकंपृणाभिः साहस्रे सन्ततिस्तु विकल्पिता ।[१०४]
सन्ततीर्दक्षिणे पक्षे वशा उत्तर पक्षगाः ॥ १५५

अद्यां दक्षिणपक्षाग्र्यां हित्वा शिष्टास्तु सन्ततीः ।

---

९९. च परयोः इति पाठा० । १००. नास्ति C.H, B.M & H.T.M पाठे ।

१०१. अत्र 'ऋषीष्टकादिकास्पष्टा मध्येकुम्भा नरादुदक्' इत्यप्रकरणस्थं क्वचिद्विद्यते । कुम्भेष्टकावसरे भवितव्यमिति भाति । १०२. B.M पाठेऽधिकः ।

१०३. गणान्तकाः इति पाठा० । १०४. नास्ति C.H, B.M & H.T.M पाठे ।

अर्थे शर्म ज्योतिः । शुक्रार्जितं चक्षुः । मन्द्रास्सपत्नरेतः । अधिपतिरक्षोघ्नीः प्रजाः । क्षत्रभृद वसु तेजः । व्रजक्षितो भूतं वर्चष्षट् ।

ध्रुवास्सीदत कुम्भेषु युगला एकमन्त्रकाः ॥[१०५] १५६

भेदेन पूर्तिस्सहशल्कपातः
सर्वत्र कुम्भ्युत्तरतः पुरस्तात् ।[१०५] १५७

शिरोग्र्या दक्षपक्षाग्र्या सप्तम्याद्योत्तरच्छदे ।
पक्षाग्रीया तथा षष्ठ्यां तृतीया चाद्यमध्यमा ॥ १५८

त्रिवृतः षट् तथा षष्ठ्यां द्वितीया ऋषभेष्टका ।[१०६]
षोडश्यां मध्यमा पादा द्वितीयस्यां चतुर्थिका ॥ १५९

तिस्रश्चोत्तर पक्षाग्र्याः पञ्च लोकंपृणास्स्मृताः ।
पुच्छपक्षशिरोग्रेषु द्वे द्वे हित्वा तु त्रिंशके ॥[१०७] १६०

कुम्भाश्वरुश्वशिष्टानामधस्तात्त्रिवृदादीनाम्[१०८] ।
शिरःपक्षात्मपक्षात्म[१०९] पुच्छस्थास्ताः क्रमेण षट् ॥[११०] १६१

नामृन्मयीनां परिमाणमिष्टं
भूमौ पुरीषं च यथेष्टदिक्काः ॥ १६२

स्वयंचिती ऋचो ह्यष्टौ पुरीषं वाङ्म आदिकम्[१११]॥ १६३

क्लृप्त्याभिमृष्याग्निमथो च यत्ते
यास्ते च चित्तिं वयमादि पञ्च ।
इत्यष्टभिश्चाभिमृशेत् पुरीषं
व्यूह्याथ वाङ्मेत्यवरुह्य पश्चात् ॥ १६४

---

१०५. नास्ति C.H, BM & H.T.M पाठे । इदं १३६ तमे श्लोके एव पठितम् ।

१०६. एतदनन्तरं क्वचित् 'कुम्भाश्वरुश्च शिष्टानां अधस्तात्त्रिवृदादीनाम्' इति पाठोऽस्ति ।

१०७. क्वाचित्कोऽयं पाठः । अस्यार्थो नावगतः ।

१०८. त्रिवृदादयः इति पाठा० । नास्ति C.H पाठे ।

१०९. पुच्छात्म इति पाठ एवं परिष्कृतः ।

११०. नास्ति C.H & B.M पाठे ।

१११. ऋचोऽत्राष्टौ, वाङ्म आदि च इति पाठा० ।

षड्भिश्चितावेव जुहोत्यथाग्ने
भूरीणि सप्तम्यभिमृष्टिरग्नेः ॥ १६५
भूमौ स्थित्वाभिहूयेत नित्योऽश्वः[११२] परिणीयते । १६६
ततः प्रवर्ग्योपसदोः प्रचारः
आह्वानपर्यन्तमथैकमश्वम् ।
प्रदक्षिणेनाग्निचितेर्नयेयुः[११३]
सर्वर्त्विजः प्राक्प्रभृति व्रतं च ॥ १६७

## ॥ इति प्रथमा चितिः ॥

## ॥ अथ द्वितीया चितिः ॥

द्वितीयस्यां चितौ प्राच्य आत्मरीत्यः प्रकल्पिताः ।
दक्षिणस्यां पञ्च पूर्वा आश्विन्यः परिकल्पिताः[११४] ॥ १६८
ऋतव्या उत्तरास्ताभ्य उदक्प्राणभृतस्ततः ।
अपस्यास्स्युः प्रतिदिशं चतुर्थ्यां मध्यतोऽन्तिमा ॥ १६९
इष्टका अनुपरिहार्या नीयन्तेऽग्निं प्रदक्षिणम् ।
सँय्यान्यावप्यृतव्ये च पञ्चम्यां मध्यतः स्थिताः ॥ १७०
सूत्रोक्तश्चितिशेषोऽथ तृतीया वक्ष्यते चितिः ॥ १७१
त्वामग्न इत्यर्धयुतं शतं षट्
लोकंपृणास्त्रिष्टुबगन्म निद्रा ॥ १७२

## ॥ इति द्वितीया चितिः ॥

## ॥ अथ तृतीया चितिः ॥

बुध्वा जपादिश्चितिरोहणान्तं
रजाशया त्रिस्तनकव्रतं च ।

११२. निश्यश्वः इति पाठा० ।

११३. अग्निचितं नयेयुः , अग्निचितिं इति पाठा० ।

११४. परिकीर्तिताः इति पाठा० ।

ऊर्ध्वज्ञुरज्ञश्च भुवोऽन्ततस्स्या-

ह्रुत्वा निरुच्छवस्य वरश्च साम ॥ १७३

ज्योतिर्ह्यधि द्यौश्च विराट्त्रिकं च

सम्राट् प्रयोगो मनसा तया च ॥ १७४

मण्डलाद्या ऋतव्यान्ता दक्षिणश्रोणिदेशगाः ।

शिरोग्रे दक्षिणा दिश्याः पक्षपुच्छात्ममध्यमाः[११५] ॥ १७५

पृष्ठ्याया दक्षिणे मध्ये आयुर्मे दक्षिणांसगाः ।

बृहत्यः पक्षपुच्छस्था पुच्छस्था दक्षिणार्धगाः ॥ १७६

संस्पृष्टाः पृष्ठ्यया स्थाप्या वालखिल्या द्विसप्तकाः ।

भूताख्या उत्तरे पार्श्वे आत्ममध्यात्परर्षभः[११६] ॥ १७७

लोकंपृणा द्वादशकं शतं मेधाकारमित्यत्र च यूपकर्म ॥ १७८

## ॥ इति तृतीया चितिः ॥

## ॥ अथ चतुर्थी चितिः ॥

चतुरस्रवदेवास्य चतुर्थी चितिरिष्यते[११७] ।

चतुर्थ्यां ब्राह्मणे क्लृप्ता[११८] अष्टाविंशतिरिष्टकाः ॥ १७९

आशुरग्नेऽनुवाकाभ्यां प्रतिमन्त्रं प्रकीर्तिताः ।

चतस्र आत्ममध्यस्था ज्ञेयाः संय्यान्यृतव्यकाः ॥ १८०

द्वौ गणौ पार्श्वयोस्स्थाप्यावात्ममध्यात् परर्षभः[११९] ।

सृष्टयस्त्वसिधात्वन्ता ईयुष्टे व्युष्टिरुत्तमा ॥ १८१

त्वामादि लोकंपृणास्तास्तु पञ्च

त्रिंशच्छतं चापि भवेन्मनुष्वत् ।

---

११५. मध्यमा इति पाठा० ।

११६. आत्ममध्ये त्वथर्षभाः इति पाठा० ।

११७. चतुरस्रवदेवात्र चतुर्थी चितिरुच्यते इति पाठा० ।

११८. ब्राह्मणात् कृप्ताः इति पाठा० ।

११९. आत्ममध्ये त्वथर्षभः इति पाठा० ।

१२०. आहवनीयमत्र इति पाठा० ।

सायं व्रतं द्विस्तनदुग्धमिष्ट-
मग्ने त्वमित्याहवनीयमन्त्रः[१२०]॥ १८२

## ॥ इति चतुर्थी चितिः ॥

## ॥अथ पञ्चमी चितिः ॥

नाकसत्स्वन्तरिक्षायेत्यनुषज्येत पञ्चसु ।
चोडासु तेभ्य इत्यादि पुच्छ एवोत्तमेष्टका[१२१]॥ १८३
तिष्ठतः परमेष्ठ्यादिरपान्य वरसामनी ।
द्विषाहस्रादिके तृण्णा विकर्णी चोत्तमस्तरे ॥ १८४
छन्दस्वक्षरपङ्क्तीषु पूर्वयान्त्या विकल्प्यते ।
छन्दोऽन्ते सयुजो रय्यै पोषादिर्मन्त्र उत्तमः ॥ १८५
आदित्यमन्त्रा द्विपदा दिवस्त्वा त्रिपदो मतः ।
सादयाम्यासु सर्वासु यशोदास्वनुषज्यते ॥ १८६
भूयस्कृदादयोऽस्यन्ता सीदान्तस्त्वन्तरिक्षसत् ।
व्रतकाले समिन्मन्त्रे देवस्येति व्रतेष्टके ॥ १८७
सँय्यच्च पञ्च षष्ठ्यन्तास्ते तेऽधीत्यनुषज्यते ।[१२२]
पञ्चैव पञ्च पञ्चाथ सर्वतोमुखमिष्टकाः[१२३]॥ १८८
साहस्रे त्वसपत्नादि सप्तर्तव्यासु नावकाः ।
निधाय विश्वकर्मादि नव स्युः स्वर्णशर्कराः ॥ १८९
निदध्यादृषभाद्ये द्वे अज्यानीर्वज्रिणीरपि ।
राष्ट्रभृत्सर्वतोमुख्याः पञ्च लोकंपृणास्स्मृताः ॥ १९०
अथवा द्रविणोदान्ते विश्वकर्मादिका नव ।
ऋषभाद्याः परास्सर्वाः षट्सु लोकंपृणाः स्मृताः[१२४]॥ १९१
अग्ने जातादिका मन्त्रा असपत्ना इति स्मृताः ।

---

१२१. मध्यमैवोत्तमेष्टका इति पाठा० ।
१२२. नास्ति C.H & BM & H.T.M पाठे ।
१२३. सर्वतोमुख इष्टकाः इति पाठा० ।
१२४. षट् तु लोकंपृणात्ततः , इति श्रुताः इति च पाठा० ।

[ असपत्ना विराट्स्तोमभागाश्छन्दांसि वृष्टिकाः[१२५] ॥ १९२
अज्यानीश्च पृणाश्चेति --- शमेकविंशतिः ।
विकर्णा राष्ट्रभृद्भ्यश्च पूर्वस्यां त्रिंशदिष्टकाः ॥ १९३
पुरीषिणी स्तोमचोडा अतिच्छन्दांसि वृष्टिकाः ।
अग्नेर्हृदयमज्यानीः पृणेति दश मध्यतः ॥ ][१२६] १९४
असपत्ना शिरोऽग्रस्था सप्तमी चाद्यरीतिगा ।
पक्षाग्रीये तृतीये च दशम्यां मध्यमापि च ॥ १९५
चतस्र आद्या द्वादश्यां पूर्वस्यामादितो द्वयम् ।
चतस्र आद्याः पूर्वस्यां विराजो दश पूर्वतः ॥ १९६
आद्याग्रीयोत्तरा तस्यास्तत्पूर्वा तत उत्तरे ।
पूर्वा तदुत्तरा पूर्वाप्युत्तरे चेति दक्षिणाः ॥ १९७
पाद्याश्चतस्र आद्यायां पूर्वस्यां तिस्र आदितः ।
पूर्वस्यामुत्तरास्तिस्रः[१२७] इत्येता दश पश्चिमाः ॥ १९८
आद्यायामुत्तरे पक्षे चरमामवशिष्य च[१२८] ।
तद्दक्षिणा च पूर्वस्यां चतस्रोऽग्र्यादिदक्षिणाः ॥ १९८
तत्पूर्वा दक्षिणा पूर्वा दक्षिणे अपि चोत्तराः[१२९] ।
द्वादश्यां शेषितास्तोमाः पक्षयोश्च[१३०] विराट्पराः ॥ १९९
आद्यायामुत्तरास्सप्त नवम्यां मध्यतस्त्रिकम् ।
जिन्वन्ता विंशतिश्चैव अस्यन्ता रुद्रसंज्ञकाः ।[१३१]
षोडश्यां मध्यमा चोडा द्वे च पक्षाग्र्य[१३२]सन्निधौ ॥ २००

---

१२५. असपत्ना विराट् स्तोम चोडा छन्दांसि वृष्टिकाः इति पाठा० ।
१२६. क्वचिन्मातृकासु एताः कारिकाः विद्यन्ते । एतेषामर्थो नावगतः ।
१२७. पूर्वस्यामादितस्तिस्रः इति पाठा० ।
१२८. उत्तरे पक्षे पश्चिमाग्र्यां हित्वा इत्यर्थः ।
१२९. चोत्तरे इति पाठा० ।
१३०. पक्षयोस्तु इति पाठा० ।
१३१. इति आन्ध्रपाठेऽधिकः ।
१३२. पक्षाग्र इति पाठा० ।

मध्यमे आदिसप्तम्योर्विकर्णी स्पष्टदेशिका[१३३]।
सप्तम्यां मण्डला तुर्या रेतस्सिग्दक्षिणा ततः ॥ २०१
तत्रैव नवमी ज्योतिरथर्तव्ये च यानिके ।
एकादश्यां दशम्यां च[१३४] द्वितीये च चतुर्थके ।
वाङ्म आसन्नाश्वनीतिः श्वो न वाङ्मेति रोहति ॥ २०२

## ॥ अथ पञ्चम्याश्चितेः शेषभूता याज्ञसेनी चितिः ॥

गायत्र्यः शिरसि स्थाप्या विराजां त्रिष्टुभः पुरः ।
जगत्याख्या द्वितीयस्यां[१३५] विराड्भ्यः प्रागनुष्टुभः ॥ २०३
तिरश्च्य आत्मषोडश्यः सन्ध्योर्द्वे द्वे पुरस्थिते ।
विषुरूपाण्यतिच्छन्दा अष्टम्यां मध्यतः स्थिता ॥ २०४
चतुर्थ्यां द्विपदाः प्रोक्ता वक्ष्यन्ते सयुगादयः ।
दक्षपक्षोत्तरे भागे शिष्ट्वा राष्ट्रभृतां पुरः ॥ २०५
पक्षाप्यया द्वितीया च पक्ष्याः षोडश चेष्टकाः ।
तिस्रश्च पक्षमद्ध्यीयाः सयुग्जीमूतकृत्तिकाः ॥ २०६
षोडश्यां दक्षिणा पादा पौरस्त्ये पक्षयोर्द्वयोः ।
आद्यायां पञ्चमी वृष्टिरष्टम्यामप्युपादिमा ॥ २०७
उपान्त्यान्त्ये चतुर्थ्यां च पञ्चमी रीतिरेव च[१३६]।
षष्ठ्यामाद्या तथादित्यसंज्ञिका अष्ट चेष्टकाः ॥ २०८
सप्तम्यां पञ्च सप्ताष्ट षष्ठ्यां मध्यगते यशाः ।
षष्ठ्यामन्त्या च पूर्वान्त्ये अप्ययाग्र्ये च पश्चिमे ॥ २०९
भूयस्कृतोऽथ रूपाद्या ऋतव्यान्ताश्च शेषिताः ।
उदक्पक्षा समद्ध्यीयास्त्रयोविंशतिरिष्टकाः ॥ २१०
अग्नेस्तु हृदयं विद्यादेकादश्यां तु मध्यमाम् ।

---

१३३. 'उत्तरेऽंसे विकर्णी' इति सूत्रम् । अतस्त्रयोदशीचतुर्दश्योरन्त्ययोरन्यतरत्रोपधेया । लोकंपृणानामुपधानवाक्ये त्रयोदश्यन्तिमायाः विहितत्वात्तदितरा चतुर्दश्यन्तिमा विकर्णीस्थानं प्राप्नोति ॥ स्पष्टदेशिगा इति पाठा० ।

१३४. दशम्येकादशीरीत्योः इति पाठा० । १३५. द्वितीयायां इति पाठा० ।

१३६. चतुर्थ्यन्त्याप्युपान्त्या च पञ्चमी रीतिरेव च इति पाठा० ।

सुमेक इत्यृतव्यान्ते विश्वकर्मादिपञ्चकम् ॥ २११

चतस्रस्स्वयमातृण्णाः प्राणाय त्वादिकैर्दिशि ।

सप्तम्याद्या च ऋषभा[१३७] प्राजापत्या तदुत्तरा ॥ २१२

उपान्तिमा त्रयोदश्यां पौरस्त्याग्र्ये[१३८] च पक्षयोः ।

आद्या षष्ठी तथाष्टम्यां चतुर्थ्यज्यानि संज्ञिकाः ॥ २१३

अथाश्मनः प्रतिदिशं वज्रिणीरुपधाय च ।

दक्षपक्षोत्तरे भागे पुरस्ताद्राष्ट्रभृद्रणः ॥ २१४

अग्निर्भुवो जनस्य त्वामग्ने तमिति सर्वतः ।

त्रयोदश्यन्तिमा दक्षपक्षाग्रीयाप्युपादिमा ॥[१३९] २१५

तस्मिन्नेवाप्यये चाद्या तृतीयान्त्या[१४०] तथैव च ।

आद्या या उत्तरे पक्षे[१४१] पञ्च लोकंपृणास्स्मृताः ॥ २१६

अन्तिमा च चतुर्दश्यां पौरस्त्याग्र्या च पक्षयोः ।[१४२]

आदिमा च तृतीयस्यां द्वितीया दक्षिणेऽप्यये ॥[१४२] २१७

इति लोकंपृणाश्चित्तिमचित्तिमिति पूर्ववत् ॥ २१८

एवं यथोक्ता उपधाय सर्वाः

सव्यापरस्रक्तिगतास्समाप्तिः[१४३] ॥ २१९

चितौ हिरण्याद्यभिमृश्य चाग्निं[१४४]

तूष्णीं समिद्भ्यः[१४५] परिणीय चाश्मम् ।

चित्यन्त आपराह्णिक्यावग्ने युक्ष्वा हि ये तव ॥ २२०

ततोऽभिमृश्याभिमुखोऽग्निमाज्यैः

प्रोक्षेद्द्वितीयेन तु दक्षिणस्थः ।

---

१३७. ऋषभः इति पाठा० । १३८. पौरस्त्याग्र्या, पौरस्त्याग्रे इति पाठा० ।

१३९. अन्तिमा च त्रयोदश्यां पक्षाग्रे परतो द्वयोः ।
आदिमा च तृतीयस्यां दक्षपक्षाप्युपादिमाः इति पाठा० ।

१४०. तृतीयाद्या तथैव च इति पाठा० । १४१. आद्याग्र्यामुत्तरे पक्षे इति पाठा० ।

१४२. क्वाचित्कोऽयं पाठः । 'अष्टमा च' इति मूलपाठोऽसम्भाव्यत्वादेवं परिष्कृतः ।

१४३. गता समाप्तिः इति पाठा० । १४४. अभिमृश्यतेऽग्निं इति पाठा० ।

१४५. तूष्णीं समिद्भिः । तूष्णीं समद्भिः इति पाठा० । पाठानामर्थो नावगतः । समिध्य इति पाठ उन्नीयते ।

प्रसव्यमेत्यापरतस्तृतीय-
मुदक्चतुर्थं पुनरेव चान्त्यम् ॥ २२१
भूमौ स्थितः सञ्चितकर्मशल्कैः
प्रोक्षेत् सहस्रस्य चतुष्पदोऽन्त्यः ।
धेनूकृता स्यादनुवाक[१४६] शेष-
स्ततोऽग्निरस्यैडिकचित्यरण्ये ॥ २२२
बध्वार्कपर्णं त्विह दीर्घवंशे
उदङ्मुखः सन्ततधारया च ।
नमस्त आदिश्च सभापतिभ्य-
श्च वो नमोऽन्तस्त्विह[१४७] जानुदघ्ने ॥ २२३
नाभिप्रमाणे ध्रियते नमो
अश्वेभ्योऽश्वपत्यादिरिहापि मन्त्रः ।
अन्तस्त्ववार्याय च आस्यदघ्ने
नमः प्रपूर्वस्तरणाय चादिः ॥ २२४
अस्मिन्महत्यादिषु चाष्टकेषु
तेषां सहस्रेत्यनुषङ्ग इष्टः ।
धन्वानि तन्मस्यवधिस्तृतीये
तिस्रो नमो आदिभिराहुतीस्तु ॥ २२५
अन्नं त्रयं ये पृथिव्यां त्रयं च[१४८]
क्रमेण सर्वा अपि चास्यदघ्ने ।
एतास्तु तिस्रो यजमानवाच्याः
चरोः प्रतिष्ठेह तु लौकिकस्य ॥ २२६
स्पृष्टे जले त्रीषुधनुस्तु कर्त्रे
दिक्षूपतिष्ठेद्यजमान[१४९] एव ॥ २२७

१४६. धेनूः कृता, धेनोः कृतः इति पाठा० ।
१४७. नमोन्तं त्विह इति पाठा० ।
१४८. पृथिव्यां त्रयश्च इति पाठा० ।
१४९. दिशोपतिष्ठेद्यजमान इति पाठा० ।

तिसृधन्वं भवेच्चापमिषुभिः तिसृभिर्युतम् ।
यत्ते रुद्रेत्युपस्थानमग्नेः प्रतिदिशं मतम् ॥ २२८

पाप्मानमश्मꣳस्त इहापि मन्त्रे
मण्डूकनासाक्षिविनाशनं स्यात् ॥ २२९

पृष्ठोपस्थानमध्वर्योर्यष्टुर्वा स्तोतुरेव वा ॥ २३०

औद्गात्रमाध्वर्यवमेव वा स्या–
द्गानं स्तुतस्य स्तुतमन्त्रवाच्यम् ।
शस्त्रे तु शस्त्रस्य ततः प्रवर्ग्य–
मुद्वासयिष्यन्निममूषु होमात् ॥ २३१

घर्मोद्वासनमग्नौ चेदातृण्णाया उदग्भवेत् ॥ २३२

शालामुखीये स्वयमादिहोमान्
जुहूस्थमाज्यं नृषदे वडादौ ।
स्वाहाकृतिर्नास्ति हिरण्यमस्ति
स्वामी च तूष्णीमवरोहतीह ॥ २३३

उन्मुच्य तूष्णीमपराऽग्निमेत्य[१५०]
होमास्समिच्च प्रतिमन्त्रमेव ।
इध्माधानं प्रैषऋचोद्यमोऽग्नेः
यत्तेति होमो हरणं च मन्त्रैः ॥ २३४

**पञ्च दिश इति पञ्चभिः षड्भिर्वा षड्भिर्हरतीति लिङ्गात् तदा विमान इति द्विः ।**[१५१]

ब्रह्माशुरित्येत्यावताहवेषु[१५२]
निधीयते शुक्लशिलोपधानम्[१५३] ।
प्रयाणमन्त्रस्त्वनुवाकशेष

---

१५०. उन्मुच्य कार्ष्णी अपराऽग्निमेत्य इति पाठा० ।
१५१. C.H & BM पाठे अधिकं वाक्यम् ।
१५२. ब्रह्माशुरित्येत्यवताहवेषु इति पाठा० ।
१५३. शुल्बशिलोपधानम् इति पाठा० ।

अध्वर्युरिवाग्निसहाधिरोहेत्[१५४] ॥ २३५

स्रुचा विकृत्या दधि हूयतेऽत्र[१५५]
मन्त्रौ समस्येन्न तदर्धखण्डौ[१५६] ।
पयस्तु जुह्वा परिधीन्निधाय
सम्भारमग्निं विकृतिस्थमन्त्रैः ॥ २३६

ते वै सुपर्णोऽसि गरुत्म भासा-
ऽऽजुह्वान इत्युत्तरतो मनुष्वत् ।
प्रेद्धादि पूर्णाहुतिमन्त्रमुक्त्वा
योऽग्निस्स्थितो[१५७] दिक्ष्विह सोऽस्तु चिन्त्यः ॥ २३७

ततोऽतिमुक्त्यादि तु सौमिकं स्यात्
त्रिःप्रोक्ष्य वेदिं तत इष्टितन्त्रम् ।
अस्यादिरेकां समिधं चराञ्च
समूहलेपौ न च भक्षपात्रम्[१५८] ॥ २३८

निरुप्य वैश्वानरमेकशूर्पे
तस्मात्पृथक्सप्त सहैव तूष्णीम् ।
अष्टावधिश्रित्य निनीय लेपं
स्तब्ध्वादि नाघारसमिद्द्वितीया ॥ २३९

सम्प्रेष्य चाप्यलेपान्ते स्रुचौ संमृड्ढि नोपभृत् ॥ २४०

ततो विधृत्यादि यथैव सूत्रं
स्रौवात्परस्तात्प्रवराज्यभागौ[१५९] ॥ २४१

आघारसमिदेकात्र स्रुच्याघारस्य लोपनात् ।
इध्मं विंशतिधा केचित् आघारौ द्वौ ध्रुवाज्यतः ॥ २४२

---

१५४. अग्निसखाधिरोहेत्, अग्निमथाधिरोहेत् इति पाठा० ।

१५५. विकृत्या स्रुचा- अन्यया औदुम्बर्या स्रुचा इत्यर्थः । 'दध्नः पूर्णामौदुम्बरीं स्वयमातृण्णायां जुहोति इति सूत्रम् ।

१५६. समस्येन्न तदर्धखण्डौ, समस्येत तदर्धखण्डौ इति पाठा० ।

१५७. अग्निश्चितो इति पाठा० । १५८. भक्षपात्रे इति पाठा० । १५९. ध्रौवात् इति पाठा० ।

तूष्णीं निधाय स्रुचि सर्वहोमः
पञ्चावदाने त्र्यभिघार इष्टः ॥। २४२
ध्रुवासमाप्तिर्हविषि पञ्चावत्ताद्युपस्तृतिः ॥ २४३
प्रत्येत्य चान्यत्र जुहूं निधाय
प्रक्षाल्य हस्तं जुहुयात्क्रमेण ।
ईदृङ्शुक्र ऋतजिद्धुनिश्च
ऋतश्च सत्यस्वतवानीदृक्षासः ॥ २४४
पूर्वं त्वनुद्रुत्य परेण होमो
होमे मितासाद्यनुषङ्ग इष्टः[१६०] ।
आद्ये तु होमेऽन्त्यमनूच्य पूर्वं
नारिष्ठवैश्वानरमार्गहोमाः[१६१] ॥ २४५
वाजस्य मादि द्विजतर्पणान्तं
जुह्वैव हुत्वोपलिपेदधस्तात् ॥ २४६

अत ऊर्ध्वं पक्षान्तरमाह प्रस्तरवर्जम् ।
स्वतवानित्यनद्रुत्य गणेनाद्येन हूयते ॥
ग्राम्याणां स्वतवान् षष्ठी तथा कण्वा अधीयते ।
सत्याषाढभरद्वाजावपि सप्तममाहतुः ॥
दश ते तनुवो भूयाद्ध्रुवासीत्यादि शँय्युवाक् । [१६२]
सँय्याजान्तेष्टिरत्रापि पिष्टादि परिवेषणम् ॥

औदुम्बरीं दीर्घबिलाल्पदण्डा-
मादाय कुर्यात्सह मन्त्रधारे ।
स्वाहायुतास्स्युस्त्रिपदाश्च मन्त्राः
चतुष्पदा ग्राम्य आरण्य विश्वे ॥ २४७

---

१६०. अनुवाकशेषः इति पाठा० ।
१६१. मार्गहोमाः – अग्निसम्मार्जनस्य होमः । यो भूतानामिति इध्मसन्नहनप्रहरणमिति यावत् ।
१६२. इति M.M पाठेऽधिकः ।

सप्त त्वहोरात्र[१६३] सशक्वरीस्तु
वाजादयोन्त्या द्विपदास्समुद्रात् ॥ २४८

पुष्टिकामे वसोर्धारा सन्ततं पठनक्रिया ।[१६४]

धारायामादिसंयोगः[१६५] सकृत्स्वाहाक्रियान्ततः ॥ २४९

अधर्मको लौकिक एव चाग्नौ[१६६]
ब्रह्मौदनस्सोऽपि महर्त्विजां स्यात् ।
पृथक्पृथग्धेनुरथो यवाग्व-
श्चतुर्दश स्युः श्रपणं तु[१६७] बाह्ये ॥ २५०
वाजस्येममित्यादि[१६८] तु सप्त हुत्वा
वाजो न इत्याद्यपराश्च सप्त ।
विकल्पसम्पातनयस्सरस्वत्यै[१६९]
वाचमध्यो ह्यभिषेकमन्त्रः ॥ २५१
हुत्वा पयो राष्ट्रभृतो घृतेन
पर्याययुक्तः प्रथमो न तूर्ध्वम् ।
हुत्वा त्रयोदश पुनर्भुवनस्य पति-
मध्वर्युगेहमभिहरन्ति रथान् स्वभृत्याः[१७०] ॥ २५२
दत्ते रथेऽश्वसहिते वरुणाय चाश्वं
वैश्वानराय रथमत्र च वातहोमाः ॥ २५३

वातनामान्यञ्जलिना सर्पिरादाय हूयते ॥[१७१]

सर्वमन्त्रा दशपदा रक्षितेत्यनुषज्यते ।

---

१६३. सप्त त्वहोरात्रयोः, सप्तैवाहोरात्र इति पाठा० ।
१६४. इदं केवलं बार्सीहस्तप्रतिपाठे ।
१६५. धाराया आदिसँय्योगः इति पाठा० ।
१६६. वह्नौ इति पाठा० ।
१६७. श्रपयन्ति इति पाठा० ।
१६८. वाजस्य चेत्यादि इति पाठा० ।
१६९. विकल्प्य सम्पातनयः इति पाठा० ।
१७०. गेहं हि हरन्ति रथं स्वभृत्याः, रथान् स्वभृत्यान् इति पाठा० ।
१७१. क्वचिदधिकः पाठः । इदमुपदेशमतम् ।

एकादशपदाः परे वातनामानि च क्रमात् ॥[१७२] २५४

हुत्वाग्न आदीनथ सर्पहोमान्
दिशं दिशं प्रत्यपरस्थितोऽन्त्यौ ।
स्वजासितश्वित्र–तिरश्चराजिः–
पृदाकुकल्माष–परोऽनुषङ्गः ॥ २५५

तत्र प्राग्दक्षिणा पश्चादुदक् प्राक्प्राङ्मुखः क्रमात् ॥[१७३] २५६

महस्तु दध्ना परिचारमिष्टं
पदानि चैकादश वातनामम्[१७४] ।
आज्येन चार्काहुतयो रुचश्च
वेदिस्तरादिः शकटे खरान्तम् ॥ २५७

न चोपवापो नवशर्कराभिः
परिश्रयेद्ध्रीयमथोपधानम् ।
अष्टाभिरष्टावुपलां नवम्यां[१७५]
मध्ये तया देवतया पुरीषम् ॥ २५८

धिष्ण्येष्विष्टकास्वष्टौ ममाग्ने यास्स्युरादितः[१७६] ।[१७७]
आग्नीध्रीयस्य[१७८] मध्येऽश्मा ये न इत्युपधीयते ॥[१७७] २५९

एवंक्रमा द्वादश धिष्णियानां[१७९]
विना शिलां[१८०] द्वादश होतुरुक्ताः ।
देवीषडर्वाञ्चमिति द्विरुक्ति–
रेकादश ब्राह्मणशंसिनोन्त्या[१८१] ॥ २६०

वापक्रमेणैव च सप्त धिष्ण्यान्

---

१७२. सर्वमन्त्रा दशपदाः एकादशपदाः परे । रक्षिताद्यनुषज्येत वातनामानि च क्रमात् इति पाठा० ।
१७३.नास्ति B.M पाठे ।
१७४. वातनामा, वातनाम इति पाठा० ।
१७५. अष्टाभिरष्टाथ शिलां नवम्यां इति पाठा० ।
१७६. यासुरादितः इति पाठा० ।
१७७. क्वाचित्कोऽयमधिकपाठः ।
१७८. ह्याग्नीध्रीयस्य इति पाठा० ।
१७९. एवं क्रिया द्वादश धिष्णियस्य इति पाठा० ।
१८०. हित्वा शिलां इति पाठा० ।
१८१. द्विरुक्त्यैकादश , देवीष्षड्डुर्व्यामिह द्विरुक्तिः, ब्राह्मणशंसिनो अन्त्याम् इति पाठा० ।

यथोपदेशं सदनादि पञ्च[१८२]।

पूर्वं ममाग्ने सदनादिषु स्यात्

पञ्च त्रयं पञ्च च पञ्च चेति ॥ २६१

गत्वा जलोपर्युपधाय चाष्टौ

प्रत्येत्य खण्डोदसनं च तूष्णीम् ।

धिष्ण्यानुपस्थाय ततोऽनुदेशा–

द्यासादनान्तं वसतीवरीणाम्[१८३] ॥ २६२

समानतन्त्रं पशुदेवतायै

व्रीहींस्तु कृष्णप्रथमान्[१८४] निरुप्य ।

अग्नये गृहपतादि ततोऽष्ट बीजा–

न्नानाबीजविधिराग्रयणोक्तः[१८५]॥ २६३

वरुणो देवसुषूच्चैरुपांश्वन्या अभीप्सिताः ।[१८६]

हुत्वा स्विष्टकृते[१८७] रौद्रं अपोऽभ्यवहरेच्चरुम् ॥[१८६] २६४

इति बौधायनः प्राह प्राशित्रेडा न विद्यते ॥[१८६] २६५

तत्समाप्य[१८८] पशुसंवादनादि

ग्रावसूपावहरणान्तमिहेष्टम् ।

अग्निं युनज्मीत्यभिमृश्य चाग्निं

प्रैषादि यावत्प्रतिहर्तृदानम् ॥ २६६

यथा संस्था ऋतुपशुराग्नेयस्त्वेव केचन ॥[१८९] २६७

हिरण्यपात्रं मधु चात्र दद्यात्

प्रतिग्रहे स्यात्तु हिरण्यमन्त्रः ।

---

१८२. सदनानि पञ्च इति पाठा० ।

१८३. ततोऽनुदेश्यानासादनात्प्राग्वसतीवरीणां इति पाठा० ।

१८४. कृष्णान् प्रथमं इति पाठा० ।

१८५. अग्नये गृहपत्यादि ततोऽष्टौ भिन्नबीजविधिराग्रयणोक्तः। ततोऽष्ट बीजं नवबीजविधिः इति पाठा० ।

१८६. क्वाचित्कोऽयमधिकपाठः ।

१८७. कृत्वा स्विष्टकृतं इति पाठा० ।

१८८. ततस्समाप्य इति पाठा० ।

१८९. ऋतुपशूनाग्नेयः इति पाठा० । क्वाचित्कोऽयमधिकपाठः ।

अन्विष्टकं दानमथाग्नियुक्तं
सहस्रसंख्याकमथो शतं वा ।[१९०]

अध्वर्यवे गास्त्र्यवरास्त्वपूर्वाः[१९१]
ततश्च दानं चमसाध्वराणाम् ॥ २६८

पान्नेजनीर्निनयनान्तमवैकृतं स्या-
त्स्तोत्रेऽप्युपान्त्यनिधने[१९२] ऽभिमृशेन्नमस्ते ।
ततः परं स्तुतिसमाप्तिरथ स्वकालेऽ-
प्येकादशेष्ट इति पञ्च पदानि पूर्वम्[१९३] ॥ २६९

गत्वेष्टकास्ववभृथो न तृणप्रहारो
नोहो निवर्तत[१९४] इहाथ हुता पयस्या ।
वापोऽथ पालीवतमग्निविमोकहोमो
धूमानुमन्त्रणमथाध्वरमाग्निकं स्यात् ॥ २७०

आकूतिहोममवरुह्य पुनर्मनश्चा-
थायं न आदिरथ वृष्टिरथाप्युपस्था ।
आरोपणं व्रजत एव भवेदुप त्वा
तत्रेदमूनु सकलप्रभृतिप्रयाणः[१९५] ॥ २७१

# ॥ इति प्राचीनकारिकाः ॥



---

१९०. U.M पाठेऽधिकम्  १९१. स्त्र्यवराश्च पूर्वाः इति पाठा० ।

१९२. गीते ह्युपान्त्यनिधने इति पाठा० ।

१९३. अन्तः पथे स्तुति---काले ह्येकादशेष्टमथ---पूर्वः । अन्तः पथस्तु समाप्तिरथ इति पाठा० ।

१९४. यथा सौमिकाभृथे अग्निशब्दस्थाने अप्शब्दस्य ऊहः क्रियते, तद्यथा- 'अग्नीदपस्त्रिस्समृड्ढि''आपो वाजजितो वाजं वः सरिष्यन्तीः' इत्यादिः, तथात्रापि अप्स्विष्टकासु प्रचरणकाल ऊहो न निवर्तते इत्यर्थः ।

१९५. प्रकृतिप्रयोगः इति पाठा० ।

# ॥ उज्ज्वलकारिकाः ॥

## ॥ शुल्बोपधानम् ॥

आद्यस्तरे श्येनचितौ चतस्रः
पादेष्टकाश्शीर्ष्णि पुरो निदध्यात् ।
पश्चात्ततष्षोडशियुग्ममन्त–
र्विशेषकं पञ्च ततश्च पादाः ॥ १

तिस्रोऽर्धिकाः षोडशिके ततोऽर्धा[1]
ततश्च पश्चादपि रुद्रपादाः ।
पक्षाग्रयोश्चापि तदग्रसंज्ञाः
पृथक् पृथक्चापि चतस्र एव ॥ २

तथैव पक्षाप्ययोश्चतस्रः
चतस्र एता विशया विधेयाः[2]।
ततः पृथक् पक्षयुगस्य मध्ये
तथा चतस्रोऽपि च पक्षमध्याः ॥ ३

पक्षद्वयेऽशीति च पक्षसंज्ञाः
प्राच्यः क्रमाद्रीतिचतुष्टयस्थाः ।
पक्षात्मसन्धौ तु तदग्रसंज्ञाः
चतुष्टयाश्लिष्टमुखाश्चतस्रः ॥ ४

असव्यपार्श्वे खलु षोडशीकाः
तथान्यपार्श्वेऽपि चतस्र एव ।
अथान्तरात्मन्यपि षोडशीका
भवन्ति च द्वादश पूर्वदीर्घाः ॥ ५

ततश्च पश्चादपि रुद्रपादाः
तिस्रोऽर्धिकाः षोडशिके ततोऽर्धा[3]।

---

१. ततोऽर्ध्या इति पाठा० । २. एता विशेषा विशया विधेयाः इति पाठा० । ३. ततोऽर्ध्या इति पाठा० ।

पादास्ततः पञ्च पुनश्च पञ्च
त्र्यर्धास्ततषोडशिके ततोऽर्धा[३] ॥ ६
त्र्यर्धास्ततषोडशिकाश्चतस्रः
ततोऽर्धिका पञ्चदशाथ पादाः ।
प्रस्तार एष द्विशतः क्रमात् स्यात्[४]
अष्टोत्तरष्षोडश रीतयश्च ॥ ७
प्रत्यक् प्रभृत्येव तथोदगन्ताः
चतस्र एवात्र तु पक्षयोश्च ।
पुरुषोपधानार्थमिहात्ममध्ये
रीतित्रयं प्राङ्मुखमेव कल्प्यम् ॥ ८
पूर्वापरस्थाः कति चेष्टकास्ताः
पुरुषानुरूपाः परिकल्पनीयाः ।
अथ द्वितीयस्तरणं प्रवक्ष्ये
पुच्छे तु रीतित्रितयं प्रकल्प्यम् ॥[५] ९
तत्पार्श्वयोर्बाह्यविशेषयुक्ताः
षडर्धसंज्ञा विधिवद्विधेयाः ।[५]
षडाद्यरीत्यां खलु षोडशीका
द्वितीयरीत्यां तु चतस्र एव ॥ १०
तृतीयरीत्यामपि षोडशिके
त्वन्तर्विशेषे विशये[६] पुरोग्रे ।
चतुर्थ्यरीत्यामपि षोडशीके
द्वयं प्रतीच्यां विशयं निधाय[७] ॥ ११
तत्पार्श्वयोः पूर्ववदर्धसंज्ञे
कृत्वा ततः पञ्चमरीतिकायाम् ।

४. द्विशतः कृतस्स्यात्, द्विशतः क्रमस्स्यात् इति पाठा० ।
५. नास्ति M.M पाठे वाक्यद्वयम् ।
६. सम्यक् विधेये विशये इति पाठा० ।
७. विशये निधाय इति पाठा० ।

पार्श्वद्वये षोडशिकद्वयं[८] स्यात्
प्रत्यङ्मुखं बाह्यविशेषयुक्तम् ॥ १२

तयोश्च मध्येऽपि च षोडशीकाः
चतस्र एवा स्युरथो पुरोग्राः ।
ताभिः समाश्लिष्टविशेषयुक्ताः
चतस्र एवा स्युरथार्धसंज्ञाः ॥ १३

षष्ठ्यादिरीतित्रयमत्र तिर्यक्
षट् षड्भिरिष्टं खलु षोडशीभिः ।
नवम्यतः पञ्चमवद्विशेषाः
तत्रेष्टकास्तद्विपरीतदिश्याः ॥ १४

रीत्यां दशम्यामुभयत्र पार्श्वे
बहिर्विशेषेऽपि निधाय चार्ध्ये[९] ।
तयोश्च मध्येऽपि च षोडशीके
त्वन्तर्विशेषे विशये पुरोग्रे ॥ १५

तत्षोडशिद्वन्द्वविशेषयुक्तं
विशेषमर्धद्वितयं निधाय ।
शिरस्यथो षोडशिसंज्ञिके द्वे
बहिर्विशेषे पुरतो निदध्यात्[१०] ॥ १६

पक्षद्वयोश्चाप्यथ सप्तरीति-
रुदङ्मुखाः सम्परिकल्पितास्स्युः ।
शतं तथा द्वादश पक्षसंज्ञाः
तथा यथायोगमुदङ्मुखा स्युः ॥ १७

पक्षाग्रयोश्चाप्युभयोश्चतस्रः
चतस्र एवा स्युरथार्धसंज्ञाः ।

---

८. षोडशिके द्वयं इति पाठा० । ९. बहिर्विशेषे विनिधाय चार्धे इति पाठा० ।
१०. बहिर्विशेषे विशये पुरोऽग्रे इति पाठा० ।

शतद्वयी द्वादशभिर्विहीना[११]
सैषा चितिः शङ्करीतयश्च ।
अग्नेरभेदाय तु पञ्चभिस्तत्
सहस्रसङ्ख्या परिपूर्तिरत्र ॥ १८

[ नवतिश्चाप्यधिशतं द्वे च कुर्याच्च षोडशी ।
अष्टषष्टिः शतं पाद्याः चतस्रोर्ध्याः शताधिकम्[१२] ॥ १९
विंशतिश्च चतस्रश्च कार्याः स्युः पक्षमध्यगाः ।
पक्षाग्र्या इहाष्टौ च चत्वारिंशच्च कारयेत् । [१३]
चतुष्षष्टिश्च चत्वारि शतानि स्युः पक्षेष्टकाः[१४] ॥ ] २०

पक्षेष्टकाश्चतुष्षष्टिश्चतुश्शतं स्यु-
स्तथा चतुर्विंशति पक्षमध्याः ।
पक्षाग्रसंज्ञा अपि चाष्टचत्वा-
रिंशत् भवन्तीह सहस्रपूर्तिः ॥ २१
तथापि पादा अपि षट् चतस्रः
पक्षाग्रसंज्ञादधि ता भवन्ति ।
दशस्तु तैरत्र[१५] निधीयमाना
सहस्रसंख्याः परिपूरणीयाः[१६] ॥ २२
मन्त्रोपधानमाद्ये तु प्रस्तारे वक्ष्यतेऽधुना ।

## ॥ अथ प्रथमा चितिः ॥

आक्रमणयाद्यमध्ये स्यात् अष्टम्याद्या तु मण्डला ॥ २३
पञ्चमी तु द्वितीयस्यां तृतीयस्यां चतुर्थिका ।
अन्वारोहे तु दूर्वादि हिरण्योप्त्वा तु वामभृत् ॥ २४

---

११. शतद्वयं----विहीनं इति पाठा० । १२. शताधिकाः इति पाठा० । १३. M.M पाठे नास्ति ।
१४. पक्षचेष्टकाः, स्युश्चदेष्टकाः इति मातृकाग्रन्थपाठावेवं परिष्कृतौ ।
१५. धनैस्तु तैरत्र इति पाठा० । १६. सहस्रसंख्यादधि तान्विहाय इति पाठा० । श्लोकार्थो नावगतः।

नवम्यां च तथाद्या तत्पूर्वे रेतस्सिचौ तथा ।
विश्वज्योत्यष्टमान्त्या स्यात् दशम्येकादशान्त्यगे[१७] ॥ २५
द्वे सय्यान्यौ त्रयोदश्यां मध्यमे द्वे ऋतव्यके ।
अषाढा तु नवम्यन्त्या सव्यपक्षाप्ययस्थिते ॥ २६
पश्चादवस्थिते द्वे तु स्यातां घर्मकुलायिनी ।
उखास्थानं तु पञ्चम्यां तृतीयस्यामधो भवेत् ॥ २७
अथ सर्पशिरोऽन्तं तुं कृत्वा पुरुषाकृतिं ततः ।
त्रयोदश्यामथार्धे द्वे पादे द्वे पश्चिमे तथा ॥ २८
पूर्वदीर्घाश्चतस्रश्च षोडश्यो दक्षरीतिगाः ।
ततः पश्चिमपादाथ द्व्यर्धे पादाथ पश्चिमे[१८] ॥ २९
प्रथमो गण एष स्यात् द्वितीयो गण उच्यते ।
द्वादश्यां च चतुर्थ्यादिचतस्रः पादसंज्ञिकाः ॥ ३०
पूर्वदीर्घाश्चतस्रश्च षोडश्यो मध्यरीतिगाः ।
पादाः पश्चिमतस्तिस्रः पश्चादेका च षोडशी ॥ ३१
द्वितीयो गण एष स्यात् तृतीयो गण उच्यते ।
त्रयोदश्यन्त्यगे द्वे च द्वे पादे पश्चिमे तथा ॥ ३२
पूर्वदीर्घाश्चतस्रश्च षोडश्यः सव्यरीतिगाः ।
ततः पश्चिमपादे द्वे षोडश्येकाथ पादिका ॥ ३३
तृतीयो गण एष स्यात्पुरुषरूपं दिशं प्रति ।
अपस्याः पञ्च मूर्ध्नि स्युः पादे द्वे षोडशीद्वयम् ॥ ३४
चतुर्दश्यां तृतीया च दक्षपक्षे तथोच्यते ।
चतुर्थ्यामादितः[१९] पञ्च पुच्छे चापि तथोच्यते ॥ ३५
सप्तमी प्रथमायां तु पुरतः षोडशी तथा ।
अर्धे पुरस्तात्पादाथ पञ्च पक्षे तथोत्तरे[२०] ॥ ३६

---

१७. अन्तिके इति पाठ० । १८. पश्चिमा इति पाठ० । १९. अग्रतः इति पाठ० ।
२०. द्वर्ध्यामग्रतः पञ्च पुच्छे चापि तथोच्यते इति M.M पाठः ।

आद्यायामग्रतः पञ्च ततो वक्ष्ये ऋषीष्टकाः ।
आद्यायामादितः पञ्च पादाश्चैकैव चोत्तरा ॥ ३७
तस्यामेव नवम्यादिसप्त पादास्त्वनन्तराः ।
द्वितीयोत्तरगास्तिस्रो द्वे तृतीयान्त्यगे अपि ॥ ३८
चतुर्थ्यान्त्यगता पादा षट् सन्यः परिकीर्तिताः ।
दक्षपक्षाप्ययस्थाः स्युश्चतस्रः पक्षसंज्ञिके ॥ ३९
द्वे चैव षड्भिर्विज्ञेयाः क्षत्रं पाहि गणस्ततः ।
दक्षिणे दश पक्षाख्या विश्वेषु त्वादिमो गणः[२१]॥ ४०
अष्टौ पक्षेष्टकास्तिस्रः पक्षमध्याश्च दक्षिणाः ।
एकादशेष्टकास्स्वर्जिदुत्तरे पक्ष उच्यते ॥ ४१
द्वे पक्षाप्ययगे पञ्च पक्षसंज्ञाः सपत्नहाः[२२]।
तत्रैवैकादशोद्दिष्टाः तूद्वदाद्यास्त्वनन्तराः ॥ ४२
दक्षिणे पक्ष एव स्यात् इषि सीद दशैव तु ।
तास्वेका पक्षमध्याख्या पक्षसंज्ञास्तथा नव ॥ ४३
तत्रैव पक्षसंज्ञाष्ट् संवत्सरगणस्ततः ।
सव्यपक्षेऽपि मध्याश्च चतस्रस्तत उत्तराः ॥ ४४
पक्षाख्या दश चैकस्यामित्याद्यास्तु चतुर्दश ।
तत्रैव तिस्रः पक्षाख्यास्तिस्रः पक्षाग्रसंज्ञिकाः ॥ ४५
पिन्वमानासि षट् प्रोक्ता ह्येतास्तूक्ता ऋषीष्टकाः ।
पञ्चम्यां तु तृतीया स्यादृषभा तु ततोऽधिकाः ।
लोकंपृणाश्च षट्त्रिंशत् हिरण्यादि यथा विधिः ॥ ४६

## ॥ इति प्रथमा चितिः ॥

२१. त्वादितो गणः इति पाठ० ।

२२. सपत्नहा इति पाठ० ।

## ॥ अथ द्वितीया चितिः ॥

मन्त्रोपधानं प्रस्तारे द्वितीये तु तथोच्यते ।
नवम्यां तु द्वितीयादि पञ्चाश्विन्यः प्रकीर्तिताः ॥ ४७
अष्टम्यां तु द्वितीयादि पञ्चर्तव्याः क्रमेण तु ।
सप्तम्यां तु द्वितीयादि पञ्च प्राणभृतः क्रमात् ॥ ४८
मूर्ध्नि पक्षाग्रयोः पुच्छे मध्ये पञ्चमपञ्चमी ।
पञ्चानुपरिहारास्स्युरर्धाश्चापस्यसंज्ञिकाः ॥ ४९
आद्ये द्वे पञ्चमीषष्ठ्योः सँयानीसंज्ञिके तथा ।
तत्पूर्वके तु षोडश्यौ द्वे तु स्यातामृतव्यके ॥ ५०
त्र्यविर्वयादिमन्त्रैस्तु दक्षश्रोण्यां तु पञ्च च ।
पष्ठवादादिमन्त्रैस्तु सव्यश्रोण्यां तु पञ्च च ॥ ५१
बस्तो वयो दक्षिणेऽंसे वृष्णिः स्यादुत्तरेऽंसके ।
व्याघ्रो दक्षिणपक्षे स्यात् सिंहस्स्यात् सव्यपक्षके ॥ ५२
षष्ठ्यां तृतीयका मध्ये पुरुषो वय उच्यते ।
सव्यपार्श्वे शिरोऽन्त्यादि प्रतीच्यस्स्युर्वयस्यकाः[२३] ॥ ५३
चतस्र ऋषभान्ता स्युश्चतुर्थ्यां तु तृतीयका ।
लोकंपृणाश्चतुश्चत्वारिंशदप्यधिकं शतम् ॥ ५४

## ॥ इति द्वितीया चितिः ॥

## ॥ अथ तृतीया चितिः ॥

प्रस्तारे च तृतीये स्यादष्टम्याद्या तु मण्डला ।
रेतस्सिचस्तु तत्पूर्वाः तिस्रो विवयसोऽत्र तु ॥ ५५
विश्वज्योत्यष्टमान्त्या स्यान्नवमीदशमान्त्यगे ।
सँयान्यौ द्वे तु षोडश्यौ षष्ठ्यां मध्यगते तथा ॥ ५६

२३. प्रतीचिस्युर्वयस्यकाः इति पाठा० ।

सव्यपक्षाप्ययस्थे द्वे पक्षाग्रे ये च मध्यमे ।
ताश्चतस्र ऋतव्यास्युः पञ्च दिश्यास्त्वनन्तराः ॥ ५७
राज्यसीत्यादिभिर्मन्त्रैः पादैका मूर्ध्नि पक्षयोः ।
अग्रस्थितेऽग्रसंज्ञी द्वे पुच्छे पादाद्यमध्यमा[२४] ॥ ५८
नवम्यान्तु तृतीया स्यान्मध्ये ताः पञ्च चैव हि ।
आरभ्य द्वादशीं रीतिं दक्षिणेऽंसे दशैव तु ॥ ५९
यथावकाशं विज्ञेयाः प्राणभृत्संज्ञकास्ततः[२५] ।
मा छन्द आदिभिः पक्षे दक्षिणे द्वादश स्मृताः ॥ ६०
पृथिवीत्यादिभिः पुच्छे द्वादशासव्यपार्श्वगाः ।
द्वादशोत्तरतः पक्षे अग्निर्देवादिभिस्तथा ॥ ६१
मूर्धाऽसीत्यादिभिर्मन्त्रैर्वालखिल्यास्तु सप्त हि ।
चतुर्दश्यन्त्यमारभ्य प्रतीचीश्च यथाक्रमम् ॥ ६२
पञ्चमीं रीतिमारभ्य[२६] प्राचीस्सप्त पुरस्तथा ।
यन्त्री राडादिभिर्मन्त्रैर्विज्ञेयाश्च क्रमेण तु ॥ ६३
पुच्छस्योत्तरपार्श्वे तु भूताख्या द्वादश स्मृताः ।
यथावकाशं पञ्चम्यां मध्यमा त्वृषभा स्मृता ॥ ६४
एकोनविंशत्यधिकं शतं लोकंपृणा इह[२७] ॥ ६५

## ॥ इति तृतीया चितिः ॥

## ॥ अथ चतुर्थी चितिः ॥

चतुर्थप्रस्तरे आशुस्त्रिवृदग्निरिति श्रुतौ ।
अनुवाकौ तु यौ ताभ्यां यथाब्राह्मणमिष्टकाः ॥ ६६
उपदध्याच्चतुर्दिक्षु क्रमेणैवाष्टविंशतिः ।

---

२४. पादाद्य मध्यमा इति M.M पाठः । २५. प्राणभृत्संज्ञका स्मृताः इति पाठा० ।

२६. पञ्चम्यादित आरभ्य इति पाठा० ।

२७. नास्ति M.M पाठे । अस्य स्थाने 'शिष्टा लोकंपृणास्सर्वा एकादशोत्तरं शतम्' इति क्वचित्पठ्यते । सोऽयं प्रामादिकः ।

शिरोऽग्रे अर्धिके पश्चात् षोडश्यौ दक्षिणार्धिका ॥ ६७
पौरस्त्या दक्षपक्षेऽर्धास्तथा श्लिष्टेष्टकात्रयम् ।
पुच्छाग्रे चान्तिमां त्यक्त्वा सव्ये दक्षिणपक्षवत् ॥ ६८
सँयान्यौ सप्तमीषष्ठ्योः तृतीये द्वे इति स्मृते ।
तयोरुत्तरगे द्वे तु षोडश्यौ चाप्यृतव्यके ॥ ६९
आत्मनोऽसव्यपार्श्वे च सृष्टीः सप्तदश क्रमात् ।
तथैवोत्तरपार्श्वे तु षोडश व्युष्टिसंज्ञकाः ॥ ७०
ऋषभा तु चतुर्थ्यां तु तृतीया तु ततोऽधिकाः ।
द्वाविंशदुत्तरशतं ज्ञेया लोकंपृणा इह ॥ ७१

## ॥ इति चतुर्थी चितिः ॥

## ॥ अथ पञ्चमी चितिः ॥

मन्त्रोपधानं पञ्चम्याश्चितेर्वक्ष्ये शिरोऽन्त्यगा ।
अग्ने जातां तु पुच्छाद्या मध्यमा सहसा मता ॥ ७२
दक्षपक्षे तृतीयाग्र्या चतुश्चत्वारिमन्त्रका ।
सव्यपक्षे तृतीयाग्र्या षोडशस्तोममन्त्रका ॥ ७३
नवम्यान्तु तृतीया च पुरीषाण्यभिधीयते ।
दशम्यन्त्यगता पूर्वा दक्षिणा च पुरा तथा ॥ ७४
दक्षिणा च पुरा चैव दक्षिणा च पुरा तथा ।
दक्षिणे च दशैवैताः विराजः पुरतस्स्मृताः ॥ ७५
तथा दक्षिणपक्षेऽपि आद्याग्र्या चोत्तरा पुरा ।
उत्तरे च पुरस्त्वेका चोत्तरा च पुरा तथा ॥ ७६
उत्तरे च दश प्रोक्ताः पुच्छे चापि तथोच्यते ।
अद्यायामन्त्यगे पादे पूर्वा दक्षिणगे पुरा ॥ ७७
दक्षिणा च पुरा चैव दक्षिणे च दशैव तु ।

सव्यपक्षेऽपि चाद्यायामग्रगा[२८] दक्षिणा पुरा ॥ ७८

दक्षिणे च पुरा चैव दक्षिणा च पुरा तथा ।

दक्षिणे च दशैतास्स्युः[२९] विराजस्तोमकास्त्वथ ॥ ७९

द्वादश्यामादितः सप्त पादाश्च पुरतः स्मृताः ।

तथा दक्षिणपक्षाद्यतृतीयादिचतुष्टयम् ॥ ८०

द्वितीयस्यां च षष्ठी च मध्यस्थे मध्यसंज्ञिके ।

आद्यायामादि पादे द्वे द्वितीयस्यां तु पञ्च च ॥ ८१

पुच्छैतास्सप्त विज्ञेयाश्चोत्तरे पक्ष उच्यते ।

तिस्रश्च पक्षमध्याख्याः प्रथमायां तदुत्तराः ॥ ८२

चतस्रः पक्षसंज्ञाश्च मध्यमस्तु तथोच्यते ।

अष्टम्यामादितस्तिस्रः शिरस्यैका तु नाकसत् ॥ ८३

दक्षपक्षे द्वितीयाग्र्या पुच्छाद्यनवमी तथा ।

सव्यपक्षे द्वितीयाग्र्या मध्ये सप्तमपञ्चमी ॥ ८४

तासु चोडा यथासूत्रं स्वयंतृण्णा विधीयते[३०] ।

कृत्वा ततो विकर्णी च चतुर्दश्यन्त्यगा स्मृता ॥ ८५

अष्टम्यान्तु चतुर्थी तु मण्डला स्यात्तदुत्तरा ।

रेतस्सिक्तु नवम्याद्या विश्वज्योतिरिति स्मृता ॥ ८६

तत्पूर्वे तु[३१] ऋतव्ये द्वे सँय्यान्यावुत्तरे तयोः ।

एतावत्तद्दिने कृत्वा विरमय्य श्व एव तु ॥ ८७

द्वादश्यन्त्यगते पादे त्रयोदश्यन्त्यगा तथा ।

गायत्र्यः पुरतस्तिस्रो दक्षपक्षे तथोच्यते ॥ ८८

चतुर्थ्यामादितस्तिस्रः पक्षाख्यास्त्रिष्टुभस्स्मृताः ।

पुच्छे जगत्यस्त्वाद्यायां चतुर्थ्यादिपदत्रयम् ॥ ८९

सव्यपक्षेऽपि चान्त्यायामादितः पक्षसंज्ञकाः ।

---

२८. चान्त्यायामग्रगा इति पाठा० ।

२९. दशैवैताः इति पाठा० ।

३०. विधिस्त्वथ इति पाठा० ।

३१. तत्पूर्वके इति पाठा० ।

तिस्रस्त्वनुष्टुभः प्रोक्ता विषुरूपास्त्वनन्तराः ॥ ९०
सप्तम्यामादितस्तिस्रः पादास्तु बृहतीरथ ।
षष्ठ्यां तिस्रोऽर्धसंज्ञास्स्युरुष्णिहस्स्युस्तथोत्तराः ॥ ९१
सप्तम्यामेव षष्ठ्यादि तिस्रः पङ्क्त्यस्तदुत्तराः ।
तिस्रोऽक्षराण्यतिच्छन्दास्त्वेकादश्यां तृतीयका ॥ ९२
पुच्छे त्वाद्यदशम्यादित्रिपादा द्विपदास्स्मृताः ।
सव्याप्ययगताश्चापि चतस्रः पक्षसंज्ञकाः ॥ ९३
अष्टौ सयुज एव स्युर्दक्षिणे चाप्ययस्थिताः ।
चतस्रः पक्षसंज्ञैका जीमूताः पञ्च चैव हि[३२] ॥ ९४
तत्रैव पक्षसंज्ञास्स्युः सप्तैताः कृत्तिकास्स्मृताः ।
मूर्ध्नि दक्षिणपार्श्वस्था पादा चोभयपक्षयोः ॥ ९५
तृतीययोरुपान्त्ये द्वे पक्षाख्ये पुच्छके पुनः ।
आद्यायां सप्तमी पादा सप्तम्यां च चतुर्थिका ॥ ९६
प्रोक्ता वृष्टिसनीरेताः सयुजामुत्तरास्स्मृताः ।
आदित्यास्त्वष्ट पक्षाख्या दिशं प्रति घृतेष्टकाः ॥ ९७
आदित्योत्तरतः पञ्च यशोदाः पक्षसंज्ञकाः ।
पञ्चम्यां मध्यमा पादा ऋषभा तु तदुत्तरा ॥ ९८
प्राजापत्या त्रयोदश्यामादिमोभयपक्षयोः ।
अन्त्ययोरग्रसंज्ञे द्वे पुच्छाद्यायां त्रयोदशी ॥ ९९
दशम्यान्तु तृतीया च स्युः पञ्चाज्यानि संज्ञकाः ।
ततश्च वज्रिणीर्दिक्षु ततश्चोत्तरपक्षके ॥ १००
मध्यानामुत्तरास्तिस्रः[३३] पक्षाख्या लोकसंज्ञिकाः ।
मध्यानां दक्षिणास्तिस्रः पावमान्यस्तु तत्र वै ॥ १०१
अथ दक्षिणपक्षेऽपि मध्यानामुत्तरास्तथा ।
पक्षसंज्ञास्तु सप्तैता उक्ताश्छन्दस्यसंज्ञिका ॥ १०२

---

३२. पञ्च ताः स्मृताः इति पाठा० । ३३. पक्षमध्योत्तरास्तिस्रः इति पाठा० ।

शिरःप्रदेशे शिष्टास्स्युश्चतस्रो राष्ट्रसंज्ञिकाः ।
लोकंपृणास्ततशिशष्टा एकोनत्रिंशदेव हि[३४] ।
हिरण्यादि यथासूत्रं समाप्ताश्श्येनकारिकाः ॥ १०३

## ॥ इति पञ्चमी चितिः ॥

## ॥ इति उज्ज्वलकारिकाः समाप्ताः ॥*



३४. एकविंशतिरेव हि इति M.M पाठः ।

*. एतासु कारिकासु बहवोऽपाणिनीयप्रयोगा मातृकाग्रन्थेषु उपलभ्यन्ते । छन्दोभङ्गभयात् यथापठितपाठ एवात्रादृतः । अर्थाविरोधान्नैव परिष्कृतः ।

# ॥ अपरा उज्वलकारिकाः ॥*

## ॥ अथ शुल्बोपधानकारिकाः ॥

(भाष्या)नुसारेण शुल्बोपधाने भेदस्स्यादपरश्येन एव तु ।
शिरःपुच्छात्मदेशस्थाष्षोडशोदीच्यरीतयः ॥ १
आद्या तुर्या पञ्चमी च सप्तमी द्वादशी तथा ।
चतुर्दशी षोडशी च शिरोऽग्रीया च पादिकाः ॥ २
द्वितीयरीत्यां तिस्रोऽर्ध्याषोडशीनां चतुष्टयम् ।
अर्ध्या चाथ तृतीयस्यां तिस्रोऽर्ध्याषोडशीद्वयं ॥ ३
अर्ध्या चैका तथा षष्ठ्यां त्रयोदश्यां तथैव च ।
द्वादशात्मनि षोडश्यः प्राच्यः पक्षौ तु सूत्रवत् ॥ ४
चतुस्त्रिंशन्मताः पुच्छे चतुष्षष्टिरथात्मनि ।
षण्मूर्ध्नि दक्षिणे पक्षे द्विपञ्चाशत् तथोत्तरे ॥ ५
एवं द्विशतसङ्ख्यास्ता अष्टौ च प्रथमा चितिः ।
तृतीये पञ्चमेप्येवं प्रस्तारे क्रम ईरितः ॥ ६
प्रस्तारस्य द्वितीयस्य प्रोच्यतेऽनुक्रमस्ततः ।
पुच्छात्मशिरसि स्थाप्या द्वादशोदीच्यरीतयः ॥ ७
पुच्छाद्ये मध्यतस्स्थाप्याः षट्षोडश्योऽभितोऽर्धिके ।
षोडशीभिर्द्वितीया स्यादर्धाख्ये पार्श्वयोस्स्मृते ॥ ८
पूर्वस्यामभितोऽर्ध्ये च प्राच्यौ तु षोडशिकेऽन्तरा ।
चतुर्थ्यां तु प्रतीच्यौ च षोडश्यौ पार्श्वयोर्दले ॥ ९
पञ्चम्यां पार्श्वयोस्स्थाप्ये षोडश्यौ बाह्यशेषिके ।

* सम्पूर्णानन्दविश्वविद्यालयादुपलब्धे वासुदेवदीक्षितकारिकामातृकाग्रन्थे एताः कारिकाः पठिता दृश्यन्ते । नैतासां कारिकाणां किञ्चित् शीर्षकं विद्यते । पाठस्य तु उज्वलकारिकाभिः क्वचित् साम्यं दृश्यते । तद्यथा– प्रतिप्रस्तारोपहितेष्टकासंख्या, प्रथमेष्टकोपधानस्थानमित्यादि । अनेनैता अपि उज्वलकारिका इत्यूह्य **अपरा उज्ज्वलकारिका** इति नाम कृतमस्माभिः । अस्याः पटो न दर्शितः ।

मध्ये चतस्रष्षोडश्यः प्राच्यस्स्थाप्यास्ततः परम् ॥ १०

अर्ध्याभिश्च यथायोगमुपदध्यात्क्रमेण तु ।
षोडशीभिस्तिरश्चीभिष्षड्भिष्षष्ठी समीरिता ॥ ११

सप्तमी चाष्टमी चैवं नवमी तु ततः परा ।
चतस्रो मध्यतस्स्थाप्याष्षोडश्यः प्रत्यगायताः ॥ १२

तत्तत्संख्याभिरर्ध्याभिर्यथायोगं प्रकल्पयेत् ।
बहिर्विशेषे षोडश्यौ प्राच्यावभित एव तु ॥ १३

दशम्यामभितोऽर्ध्ये द्वे बाह्यतस्सविशेषके ।
प्रच्यवन्ता विशेषे द्वे षोडश्यौ विषयेन्तरा ॥ १४

एकादश्यां तथाऽर्ध्ये द्वे दक्षोत्तरविशेषके ।
प्राच्यौ शिरसि षोडश्यौ सूत्रवत्पक्षयोर्द्वयोः ॥ १५

पुच्छेऽष्टादश संप्रोक्ता द्वे षष्टी पक्षयोस्तथा ।
आत्मनि द्व्यूनपञ्चाशत् शीर्षे द्वे परिकल्पिते ॥ १६

अष्टाशीतिशतं चैव द्वितीया चितिरीरिता ।
चतुर्थेऽप्येवमेव स्यादेषा भाष्यान्वितो मतिः ।
प्रस्तारपञ्चकेन स्यादिष्टकानां सहस्रकम् ॥ १७

## ॥ अथ मन्त्रोपधानकारिकाः ॥

## ॥ अथ प्रथमा चितिः ॥

मन्त्रोपधानमाद्ये तु प्रस्तारे वक्ष्यतेऽधुना ।
आक्रमण्याद्यमध्ये स्यादष्टम्याद्या तु मण्डला ॥ १८

द्वितीयस्यां तृतीया च तृतीयस्यां द्वितीयका ।
अन्वारोहे तु दूर्वादि हिरण्योप्त्वा तु वामभृत् ॥ १९

नवम्यां च तथाद्या स्यात्पूर्वे रेतस्सिचौ तथा ।
विश्वज्योत्यष्टमान्त्या स्याद्दशम्येकादशान्तिगे॥ २०

द्वे संय्यान्यौ त्रयोदश्यां मध्यमे द्वे ऋतव्यके ।

अषाढा तु नवम्यन्त्या सव्यपक्षाप्ययस्थिते ॥ २१
पश्चादवस्थिते स्यातां द्वे तु घर्मकुलायिनी ।
चतुर्दशीत्रयोदश्योराद्ये पाद्ये च पश्चिमे ॥ २२
पूर्वदीर्घाश्चतस्रश्च षोडश्यो दक्षरीतिगाः ।
ततः पश्चिमपादे द्वे षोडश्येकाथ पादिका ॥ २३
प्रथमो गण एष स्यात् मध्यमो गण उच्यते ।
द्वादश्यां च चतुर्थ्यादिचतस्रः पादसंज्ञिकाः ॥ २४
पूर्वदीर्घाश्चतस्रश्च षोडश्यो मध्यरीतिगाः ।
पादाः पश्चिमतस्तिस्रः पश्चादेका च षोडशी ॥ २५
द्वितीयो गण एष स्यात्तृतीयो गण उच्यते ।[1]
चतुर्दशीत्रयोदश्योरन्त्ये पाद्ये च पश्चिमे ॥ २६
पूर्वदीर्घाश्चतस्रश्च षोडश्योत्तररीतिगाः ।
ततः पश्चिमपादे द्वे षोडश्येकाथ पादिका ॥ २७
तृतीयो गण एष स्यात्पुरुषरूपं दिशं प्रति ।
अपस्याः पञ्च मूर्ध्नि स्युः पादे द्वे षोडशी ततः ॥ २८
चतुर्दश्यां तृतीया च दक्षपक्षे तथोच्यते ।
चतुर्थ्यामादितः पञ्च पुच्छे चापि तथोच्यते ॥ २९
सप्तमी प्रथमायां तु पुरतः षोडशीद्वयम् ।
पुरस्तादपि पादे द्वे सव्यपक्षे तथोच्यते ॥ ३०
आद्यायामग्रतः पञ्च ततो वक्ष्ये ऋषीष्टकाः ।
आद्यायामादितः पञ्च पादास्त्वेका तथोत्तरा ॥ ३१
प्रथमायां नवम्यादि सप्त पाद्यास्तथैव च ।[2]
द्वितीयोत्तरागास्तिस्रो द्वे तृतीयान्त्यगे अपि ॥ ३२
चतुर्थ्यन्त्यगता पादा षट् सनीः परिकीर्तिताः ।[3]
दक्षपक्षाप्ययस्थास्स्युश्चतस्रः पक्षसंज्ञिकाः ॥ ३३

१ नास्ति मातृकापाठे । २ प्रथम्यायां इति मातृकापाठः । ३ चतुर्थ्यन्तगता इति मातृकापाठः ।

द्वे चैव षट् च संख्येयाः क्षत्रं पाहि गणस्ततः ।
दक्षिणे दश पक्ष्यास्स्युर्विश्वेषु त्वादिको गणः ॥ ३४
अष्टौ पक्षेष्टकास्तिस्रः पक्षमध्याश्चतस्र तु ।
एकादशेष्टकास्स्वर्जिदुत्तरे पक्ष उच्यते ॥ ३५
द्वे पक्षाप्ययगे पञ्च पक्षसंज्ञाः सपत्नहाः ।
तत्रैवैकादशोद्दिष्टाः तूद्वदाद्यास्त्वनन्तराः ॥ ३६
दक्षिणे पक्ष एव स्यादिषि सीद दशैव तु ।
तास्वेका पक्षमध्या स्यात्पक्षसंज्ञास्तथा नव ॥ ३७
तत्रैव पक्षसंज्ञाष्षट् संवत्सरगणास्स्मृताः ।
सव्यपक्षेऽपि मध्यश्च चतस्रस्तत उत्तराः ॥ ३८
पक्षाख्या दश चैकस्यामित्याद्यास्तु चतुर्दश ।
तत्रैव तिस्रः पक्षाख्यास्तिस्रः पक्षाग्रसंज्ञिकाः ॥ ३९
पिन्वमानासि षट् प्रोक्ता ह्येतास्तूक्ता ऋषीष्टकाः ।
पञ्चम्यां तु तृतीया स्यादृषभा तु ततोऽधिकाः ।
लोकंपृणाश्च षट्त्रिंशत् हिरण्यादि यथा विधिः ॥ ४०

## ॥ अथ द्वितीया चितिः ॥

अयाशयालभ्य जपश्च वाङ्मेऽ
त्यारुह्य पूर्वार्ध इहाश्विनीस्तु ॥ ४१
मन्त्रोपधानं प्रस्तारे द्वितीये तु तथोच्यते ।
दक्षिणाद्या उदक्संस्थाः पञ्चाश्विन्यः प्रकीर्तिताः ॥ ४२
पश्चात्तु ताभ्यो नवम्या ऋतव्याः
सजूर्द्वयं पूर्वमिहानुषक्तम् ॥ ४३
तासां पश्चादुदक्संस्थाः पञ्चर्तव्याः क्रमेण तु ॥ ४४
क्रमेण पञ्चोपरि शेष एभ्यः
पश्चादथ प्राणभृतोक्तमन्त्राः ।

पदत्रया: पञ्चभृतश्चतुर्थो
दिशस्त्वपस्यास्तु चतुष्पदोन्त्यः ॥ ४५
पक्षत्रयोः पुच्छे मध्ये तास्तु चतुर्थिका ।
पञ्चानुपरिहारस्स्यादेताश्चापस्य संज्ञिकाः ॥ ४६
द्वितीयस्यां चतुर्थ्यादि द्वे तु संयानि संज्ञिके ।
प्रथमायां तृतीयादि द्वे तु स्यातामृतव्यके ॥ ४७
त्र्यविर्वयादिमन्त्रैस्तु दक्षश्रोण्यां तु पञ्चभिः ।
पष्ठवादादि मन्त्रैस्तु सव्यश्रोण्यां तु पञ्चभिः ॥ ४८
बस्तो वयो दक्षिणेऽंसे वृष्णिः स्यादुत्तरेऽंसके ।
व्याघ्रो वयो दक्षपक्षे सिंहस्तूत्तरपक्षके ॥ ४९
मध्यमं स्याच्चतुर्थ्यां च तृतीया पुरुषो वयः ।
चतुर्थ्यां तु शिरोऽन्त्यादि प्रतीचीस्स्युर्वयस्यगाः ।
चतुर्थी ऋषभाख्या तु तृतीयाया मतोऽधिका ॥ ५०

## ॥ अथ तृतीया चितिः ॥

प्रस्तारे तु तृतीये स्यादष्टम्याद्या तु मण्डला ।
रेतस्सिचस्तु तत्पूर्वाः तिस्रो विवयसोऽत्र तु ॥ ५१
विश्वज्योत्यष्टमान्त्या स्यात् नवमीदशमान्त्यगे ।
संयान्यौ द्वे तु षोडश्यौ षष्ठ्यां मध्यगते तथा ॥ ५२
सव्यपक्षाप्ययस्थे द्वे पक्षाग्रीये च मध्यमे ।
ताश्चतस्र ऋतव्यास्तु पादैका मूर्ध्नि पक्षयोः ॥ ५३
अग्रस्थितेऽग्रसंज्ञे द्वे पुच्छे चाप्याद्यमध्यमा ।
नवम्यान्तु तृतीया स्यात् मध्ये ताः[४] पञ्च चैव हि ॥ ५४
आरभ्य द्वादशीं रीतिं दक्षिणांसे दशैव तु ।
यथावकाशं विज्ञेयाः प्राणभृत्संज्ञकास्ततः ॥ ५५

४. 'मध्यैताः' इति मातृकापाठः ।

मा छन्द आदितः पक्षे दक्षिणे द्वादशेरिताः ।
पृथिवीत्यादिभिः पुच्छे द्वादशैव प्रकीर्तिताः ॥ ५६
तथोत्तरे च पक्षेऽग्निर्देवतेत्यादिभिस्तथा ।
मूर्धासि राडिति मन्त्रैर्वालखिल्यास्तदत्र तु ॥ ५७
चतुर्दश्यन्तमारभ्य प्रतीचीश्च यथाक्रमम् ।
पञ्चमीं रीतिमारभ्य प्राचीस्सप्त पुरस्तथा ॥ ५८
यन्त्री राडादिभिर्मन्त्रैर्विज्ञेयाश्च क्रमेण तु ।
पुच्छस्योत्तरपार्श्वे तु भूताख्या द्वादश स्मृताः ॥ ५९
यथावकाशं पञ्चम्यां मध्यमा ऋषभस्तथा ।
एकोनविंशत्यधिकं शतं लोकंपृणा इह ॥[5] ६०

## ॥ अथ चतुर्थी चितिः ॥

चतुर्थे तु स्तरेऽप्याशुस्त्रिवृदग्नेरिति श्रुतौ ।
अनुवाकौ तु यौ ताभ्यां यथाब्राह्मणमिष्टकाः ॥ ६१
उपदध्याच्चतुर्दिक्षु क्रमेणैवाष्टविंशतिः ।
तृतीयस्यां चतुर्थ्यादि द्वे तु संयानिसंज्ञिके ॥ ६२
चतुर्थ्यां तु तृतीयादि द्वे तु स्यातामृतव्यके ।
अथ दक्षिणरीत्योस्तु सृष्टिस्सप्तदशैव तु ॥ ६३
तथैवोत्तररीत्योस्तु षोडश व्युष्टिसंज्ञिकाः ।
पुच्छाऽप्यये तृतीयाद्या षोडशी ऋषभा स्मृता ।
लोकंपृणास्ततः शिष्टाः सचतुस्त्रिंशकं शतम् ॥ ६४

## ॥ अथ पञ्चमी चितिः ॥

मन्त्रोपधानं पञ्चम्याः चितेर्वक्ष्ये शिरोऽन्त्यगा ।
अग्ने जातां तु पुच्छाद्या मध्यमा सहसा स्मृता ॥ ६५

---

५. 'शिष्टा लोकंपृणास्सर्वा शतमेकादशोत्तरम्' इति सङ्ख्यादोषयुक्तो मातृकापाठः ।

दक्षपक्षे तृतीयाद्या चतुश्चत्वारिंशमन्त्रगा ।
सव्यपक्षे तृतीयाद्या षोडशस्तोम उच्यते ॥ ६६
नवम्यान्तु तृतीया स्यात् पुरीषिण्यभिधीयते ।
दशम्यन्तगता पूर्वा दक्षिणा च पुरा तथा ॥ ६७
दक्षिणा च पुरा चैव दक्षिणा पुरगा तथा ।
दक्षिणे च पुरा चैव विराजः पुरतो दश ॥ ६८
तथा दक्षिणपक्षाद्या एकाद्या चोत्तरा पुरा ।
उत्तरे पुरतस्त्वेका चोत्तरा च पुरा तथा ॥ ६९
उत्तरे च दश प्रोक्ताः पुच्छे चापि तथोच्यते ।
अद्यायामन्त्यगे पादे पूर्वा दक्षिणगे पुरा ॥ ७०
दक्षिणा च पुरा चैव दक्षिणा च पुरा तथा ।
सव्यपक्षेऽपि चाद्यायामेकाग्र्या दक्षिणा पुरा ॥ ७१
दक्षिणे च पुरा चैव दक्षिणा च पुरा तथा ।
दक्षिणा च पुरैवा स्युर्विराजस्तोमकस्तथा ॥ ७२
द्वादश्यामादितः सप्त पादाश्च पुरतस्स्मृताः ।
तथा दक्षिणपक्षाद्या तृतीयादिचतुष्टयम् ॥ ७३
तृतीयस्यां तु षष्ठ्यन्तमध्यस्थे मध्यसंज्ञिके ।
पुच्छाद्यायां त्रिपादाश्च द्वे षोडश्यौ तृतीयके ॥ ७४
आद्या तथा तृतीयायामग्रपादा तथोत्तरे ।
तिस्रः पाश्चाद्यमध्यायां प्रथमस्यां तदुच्यते ॥ ७५
चतस्रः पक्षसंज्ञीया मध्यतस्तु तथोच्यते ।
अष्टम्यामादितस्तिस्रः शिरस्यैका तु नाकसत् ॥ ७६
दक्षपक्षे द्वितीयाग्र्या पुच्छाद्यनवमी तथा ।
सव्यपक्षे द्वितीयाग्र्या मध्ये सप्तमपञ्चमी ॥ ७७
तासु चोडा विकर्णी च चतुर्दश्यन्तिमा स्मृता ।
अष्टम्यान्तु चतुर्थी तु मण्डला स्यात्तदुत्तरा ॥ ७८

रेतस्सिकु नवम्याद्या विश्वज्योतिरिति स्मृता ।
एकादश्यां दशम्यां च तृतीये च चतुर्थके ॥ ७९
एतदन्तं दिने कृत्वा श्वः शेषं पञ्चम्याश्चितेः[६] ।
द्वादश्यन्त्यगते पादे त्रयोदश्यन्त्यगा तथा ॥ ८०
गायत्र्यः पुरतस्तिस्रो दक्षपक्षे तथोच्यते ।
चतुर्थ्यामादितस्तिस्रो विराजस्त्रिष्टुभस्स्मृताः ॥ ८१
पुच्छे जनस्य गोपाद्या चतुर्थ्यादि पदत्रयम् ।
सव्यपक्षेऽपि चान्त्यायामग्रतः पक्षसंज्ञकाः ॥ ८२
तिस्रस्त्वनुष्टुभः प्रोक्ता विषुरूपास्त्वनन्तराः ।
सप्तम्यामादितस्तिस्रः पादास्तु बृहतीरथ ॥ ८३
षष्ठ्यां तिस्रस्तु षोडश्य उष्णिहस्तु तथेरिताः ।
सप्तम्यामेव षष्ठ्यादि तिस्रः पङ्क्तयस्तदुत्तराः ॥ ८४
तिस्रोऽक्षराण्यतिच्छन्दास्त्वेकादश्यां तृतीयका ।
पुच्छे त्वाद्यदशम्यादि त्रिपदा द्विपदास्स्मृताः ॥ ८५
सव्यपक्षाप्ययस्थास्तु चतस्रः पक्षसंज्ञकाः ।
अष्टौ सयुज एतास्स्युर्दक्षिणे चाप्ययस्थिताः ॥ ८६
चतस्रः पक्षसंज्ञास्तु जीमूताः पञ्च ताः स्मृताः ।
तत्रैव पक्षसंज्ञास्स्युः सप्तैताः कृत्तिकास्स्मृताः ॥ ८७
मूर्ध्नि दक्षिणपार्श्वस्था पादा चोभयपक्षयो ः ।
तृतीययोरुपान्त्ये द्वे पुच्छस्थानमिहोच्यते ॥ ८८
आद्यायां सप्तमी पादा सप्तम्यां च चतुर्थिका ।
प्रोक्ता वृष्टिसनीरेताः सयुजामुत्तरास्ततः ॥ ८९
आदित्यास्त्वष्ट पक्षाख्या दिशं प्रति घृतेष्टकाः ।
आदित्योत्तरतः पञ्च यशोदाः पक्षसंज्ञिकाः ॥ ९०
त्वामग्ने मध्यमा पाद्या सर्षभा तु तदोत्तरा[७] ।

---

६ 'पञ्चमी चितिः' इति मातृकापाठः । ७ त्वामग्ने इति श्लोकार्धे किञ्चिन्न्यूनाधिक्यमस्तीति भाति ।

त्रयोदश्यां दशम्याद्या तथैवोभयपक्षयोः ॥ ९१

अन्त्ययोरग्रसंज्ञे द्वे पुच्छाद्यायां त्रयोदशी ।

दशम्यान्तु तृतीया च पञ्चाज्यानिसंज्ञिकाः ॥ ९२

ततश्च वज्रिणीर्दिक्षु ततश्चोत्तरपक्षके ।

मध्यानामुत्तरास्तिस्रः पक्षाख्या लोकसंज्ञिकाः ॥ ९३

मध्यानां दक्षिणास्तिस्रः पावमान्यस्तु तत्र वै ।

अथ दक्षिणपक्षेऽपि मध्यानामुत्तरास्तथा ॥ ९४

छन्दः संज्ञास्तु तत्रैताः प्रोक्ताश्छन्दस्यसंज्ञिकाः ।

शिरःप्रदेशे शिष्टास्स्युश्चतस्रो राष्ट्रसंज्ञिकाः ॥ ९५

लोकंपृणास्ततश्शिष्टा एकविंशतिरेव हि ।

हिरण्यादि यथापूर्वं समाप्ताश्श्येनकारिकाः ॥ ९६

## ॥ इति अपरा उज्ज्वलकारिकाः समाप्ताः ॥



# ॥ अथ द्विषाहस्रकारिकाः ॥*

द्विषाहस्रे परश्श्येने वक्ष्ये मन्त्रोपधिक्रमम्[1] ।
साहस्रवदपस्यान्तं कुम्भान् कुम्भीस्ततः क्षिपेत् ॥ १
अनुसीतं प्रदेशं चतस्रो मध्यगा इति ।
बार्हस्पत्यस्य चरोरपकर्षो[2] विधीयते ॥ २
ऋषीष्टका यथापूर्वं शिष्टा लोकंपृणास्स्मृताः ।
तूष्णीं पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ॥ ३
अथापरस्मिन् प्रस्तारे प्राणापानभृतान्निधिः ।
षष्ठरीत्यामन्तिमे द्वे पञ्चम्यां पञ्च पूर्वतः ॥ ४
तिस्रश्चतुर्थ्यामन्त्याश्च[3] पूर्वाः प्राणभृतो दश ।
पक्षयोश्च यथायोगमक्ष्णया चोपधीयते ॥ ५
तृतीयाद्या तथा पुच्छे तृतीयाद्ये ततः पराः ।
तिस्रश्चतस्र आद्यायां पश्चिमाः प्राणभृद्दश ॥ ६
चतस्रोऽर्ध्या आदिमायां चतस्रोऽर्ध्यास्तदुत्तराः ।
तृतीयस्यां पञ्चमी च षष्ठी स्यान्मध्यतो दश ॥ ७
शीर्ष्युदक्स्था षोडशी च तिस्रोऽन्त्याश्च तृतीयगाः ।
द्वितीयस्यामादिमायं तिस्रस्तिस्रोऽन्तिमाः क्रमात् ॥ ८
दशापानभृतः पूर्वा दक्षिणा प्राणभृत्पुरः ।
पुच्छाद्यरीत्योरन्त्यास्तु चतस्रस्तिस्र एव च ॥ ९
तत्पूर्वाश्च[4] तृतीयाद्या दशापानभृतः पुराः ।
दशापानभृतः प्राणभृतां पश्चादुदग्गताः ॥ १०

---

* एताः कारिकाः सम्पूर्णानन्दविश्वविद्यालयादुपलब्धवासुदेवदीक्षितकारिकामातृकाग्रन्थस्यारम्भे पठिताः । वासुदेवदीक्षितोक्तसाहस्रचितिशुल्बोपधानकारिकानुसारिण्यो भाति । अत्र भूमिका द्रष्टव्या ।

१. मन्त्रो परिक्रमम् इति मातृकापाठः ।

२. चरो...र्षो इति मातृकापाठे त्रुटितः । अत एवमूहितम् ।

३. मातृकापाठस्य पठितुमशक्यत्वात् श्लोकार्धमेवमूहितम् ।

४. तत्पूर्वा च इति मातृकापाठः ।

चतस्रोऽर्ध्यास्ततषष्ठ्यां चतस्रोऽर्ध्याश्च दक्षिणाः ।
मध्यरीत्योस्तृतीया च द्वितीया च ततो दश ॥ ११
सन्ततीर्दक्षिणे पक्षे वशा उत्तरपक्षकाः ।
शिरोग्र्यापक्षयोराद्ये आद्यायामादिमात्मनि ॥ १२
तृतीयस्यां चतुर्थी च पुच्छाद्यायान्तु पञ्चमी ।
शिरःपक्षात्मपक्षात्मपुच्छे तु क्रमशः क्षिपेत् ॥ १३
त्रिवृतः षट् द्वितीयायां चतुर्थी ऋषभेष्टका ।
षट्सप्ततिस्तथा लोकंपृणाश्चितिसमापनम् ॥ १४
गायत्र्याभिमृशेदग्निमश्वश्च परिणीयते ।
मध्यमाश्चितयस्स्पष्टाः पञ्चमी वक्ष्यते चितिः ॥ १५
श्वोभूते नवमेऽस्मिन्स्यात्प्रस्तारे प्रथमे ततः ।
साहस्रवद्विकर्ण्यन्तं नात्रातृण्णाविकर्णिके ॥ १६
विरम्य तूर्ष्णीं तत्रैव गायत्र्यादि यथा पुरा ।
द्विपदान्तं तु तत्र स्यात्सन्ध्योर्द्वे द्वे तु मध्यगे ॥ १७
पक्षसन्ध्योश्च पूर्वान्त्ये द्वे द्वे तद्दक्षिणोत्तरे ।
पृष्ठयोरुपधानार्थमिदानीं नोपधीयते ॥ १८
दक्षपक्षोत्तरे भागे शिष्टा अष्टादशेष्टकाः ।
तत्रैव पक्षमध्ये च सयुग्जीमूतकृत्तिकाः ॥ १९
आदित्यानाञ्च वृष्टीनामुपधानं यथा पुरा ।
षष्ठीसप्तमयो रीत्योश्शिष्टाः सव्यच्छदे तथा ॥ २०
यशोदाद्या ऋतव्यान्ताश्चतुस्त्रिंशतमिष्टकाः ।
एकादश्यां तु हृदयं मध्ये मन्त्रक्रमेण च ॥ २१
चतुर्दशीत्रयोदश्योरन्त्योपान्त्ये च पुच्छतः ।
आद्या षष्ठी तृतीयाद्या त्वष्टम्यां च चतुर्थिका ॥ २२
तिस्रोऽन्त्या दक्षपक्षे च विशयाग्रे च पार्श्वयोः ।
लोकंपृणाश्च तत्रैवमेकादश समीरिताः ॥ २३

एकादशेऽह्नि श्वोभूते प्रस्तारे तु द्वितीयके ।
या देव्यसीष्टके त्वष्टाचत्वारिंशतमिष्टकाः ॥ २४
इन्द्रतन्वन्तमेतासां दक्षपक्षे विधीयते ।
ज्योतिष्मतीस्सव्यपक्षे तथा यज्ञतनूरपि ॥ २५
पृष्ठस्थानमबाधित्वा उपदध्याथाक्रमम् ।
एतदन्ते विरम्यात्र प्रभाते शेषमारभेत् ॥ २६
द्वितीयस्यामुपान्त्या स्यात्पूर्णापश्चादितीष्टका ।
तत्पश्चात्कृत्तिकाद्याश्च दश पुच्छे ह्यतः पराः ॥ २७
चतस्रस्तु प्रतीच्यस्तु विशाखान्ताश्च तारकाः ।
पुच्छाद्यायां तथा षष्ठी यत्ते देवा इतीष्टका ॥ २८
तिस्रः पुरस्तात्पुच्छे तु पञ्चम्यां च दशेष्टकाः ।
मैत्राद्यापभरण्यन्तं ताः पूर्णा पूर्वभागतः ॥ २९
असंस्पृष्टत्वमेतासां तिलमात्रं विधीयते ।
सरितोऽष्टौ सव्यपक्षे अह्नोरूपभृतानि च ॥ ३०
षष्ठ्यामाद्यास्ततः प्रोक्ताः पञ्चात्मेष्टकसंज्ञिकाः ।
तृतीयान्त्या षोडशी च पक्षयोरर्धसंज्ञिके ॥ ३१
पुच्छाद्यरीत्याममन्त्या च चतुर्थ्याञ्च चतुर्थिका ।
पञ्चादितस्तृतीयस्यां वैश्वदेव्य उदाहृताः ॥ ३२
आद्यास्तिस्रो वामदेव्यस्त्वथर्वशिरसो दश ।
द्वितीयान्त्या तृतीयस्यां चतुर्थ्यां च तदुत्तराः ॥ ३३
अन्त्या च पञ्चमीरीत्यां पृष्ठयोश्च धृतास्तु याः ।
उपदध्यादिदानीं ता पूर्वप्रस्तारगोचराः[५]॥ ३४
आद्यरीत्यां पञ्चमी च द्वितीयस्यां तृतीयगा ।
तत्पूर्वा विशया चात्र यज्ञायज्ञीयसंज्ञिकाः ॥ ३५
ऋषभा च चतुर्थ्याद्या स्यात्प्राजापत्या ततः पुरा ।

---

५. अथ प्रस्तारगोचराः इति मातृकापाठः ।

शिष्ण्युर्दक्स्था षोडशी च द्वितीयार्ध्ये च पक्षयोः ॥ ३६
पुच्छाद्यायां सप्तमी च चतुर्थ्यामपि पञ्चमी ।
पञ्चाज्यान्यस्ततः पुच्छे दक्षिणा लोकसंज्ञिकाः ॥ ३७
उत्तराः पावमान्यश्च यथायोगं विनिक्षिपेत् ।
आद्यायामन्तिमाः पञ्च पक्षे द्वे सप्त छन्दसः ॥ ३८
ततो राष्ट्रभृतः पूर्वा अन्नातृण्णाविकर्णिके ।
चतस्रो दक्षपक्षे च पञ्च पक्षे तथोत्तरे ॥ ३९
पुच्छाप्यये[६] चतुर्थ्यां च तृतीया अवशेषिताः ।
व्रतेष्टके यदि स्यातां पृणा एकादशेष्टकाः ॥ ४०
चितौ हिरण्यमित्यादि प्रयोगन्तु यथा पुरा ।
एवं द्वितीयश्येनस्य द्विषाहस्रे प्रकीर्तितः[७] ॥ ४१
उपधानविधिस्सम्यक् प्रीयतां पार्वतीपतिः ।
रज्जुं द्विपुरुषां कुर्यात्तन्मध्ये लक्षणं भवेत् ॥ ४२
पक्षस्यापरयोः कोट्योरन्तौ यच्छेद्वलिं विना ।[८]
चिह्नमायम्य शङ्कुः प्राक्स्थाप्यस्तद्वच्च पाशयोः ।
आलिखेदत्र आमूलादागात्पक्षनतिस्त्वियम् ।
शिरस्यात्मनि पुच्छे च पक्षयोरङ्गुलीषु च ।
पार्श्वं शङ्कुषु सर्वेषु रज्ज्वाबध्याऽऽतनोति च ।

## ॥ इति द्विषाहस्रकारिकाः ॥



६. पुच्छाद्यां च इति मातृकापाठः । ७. प्रकीर्तिता इति मातृकापाठः ।

८. इतः परं मातृकापाठेऽस्पष्टाक्षरस्थानेष्वक्षराण्यस्माभिरेवोह्य श्लोकाः पूरिताः ।

# ॥ अथ अपरा द्विषाहस्रकारिकाः ॥*

## अथ प्रथमा चितिः

प्रस्तारद्वयमेकैका द्विषाहस्रे चितिर्भवेत् ।
पञ्चम्यन्त्याक्रमण्याख्या तुर्या मध्ये तु मण्डला ॥ १
अन्वारोहाभिधाने द्वे तुर्यरीत्यन्तगे मते ।
वामभृत्यथ विज्ञेया एकादश्यन्त्यषोडशी ॥ २
द्वितीयन्त्या तृतीयान्त्या षोडश्यौ तु सिचौ मते ।
द्वादश्यामन्तिमा पाद्या विश्वज्योतिः प्रकीर्तिता ॥ ३
त्रयोदशीचतुर्दश्योः सँय्यान्यौ द्वे उपान्तिमे ।
पञ्चदश्यां च षोडश्यामन्तिमे द्वे ऋतव्यके ॥ ४
अथ रीतौ तु पञ्चम्यामषाढा मध्यमा मता ।
तस्यामेवादिमा घर्मा द्वितीया तु कुलायिनी ॥ ५
षष्ठीमध्य उखास्थानं वक्ष्यते पुरुषाकृतिः ।
द्वादश्याः पूर्वयोराद्ये द्वादश्यां त्रिचतुर्थके ॥ ६
प्रागायताश्च षोडश्य आत्मदक्षिणपार्श्वगाः ।
सप्तम्यामावलौ तिस्रो द्वितीयाद्यास्तु पादिकाः ॥ ७
अपरस्यामादिमा च प्रथमः पौरुषो गणः ।
पाद्याश्चतस्रो द्वादश्यां ताः पूर्वोपहितोत्तराः ॥ ८
प्रागायताश्च षोडश्य आत्मनो मध्यतः स्थिताः ।
पाद्याश्चतस्रः सप्तम्यां ताः पूर्वोपहितोत्तराः ॥ ९
इति द्वादशभिर्ज्ञेयो मध्यमः पौरुषो गणः ।
त्रयोदशीचतुर्दश्योरन्त्ये पाद्ये च पश्चिमे ॥ १०
प्रागायताश्च षोडश्यस्सप्तम्यां पादिकात्रयम् ।

---

* एता अपि कारिकाः वासुदेवदीक्षितोक्तशुल्बानुगुणाः, साहस्रकारिकाश्लोकसाम्याश्च । अत्र भूमिका द्रष्टव्या ।

अपरस्यामन्तिमा च तृतीयः पौरुषो गणः ॥ ११
षोडश्यां पञ्चदश्यां च रीतौ द्वे आदिमे मते ।
पाद्ये अथ चतुर्दश्यां द्वितीया च तृतीयका ॥ १२
त्रयोदश्यां तु पाद्या च पञ्चापस्यास्तु पूर्वगाः ।
पूर्वपत्रस्योत्तरतः पञ्चापस्यास्तु दक्षिणाः ॥ १३
आद्यायामादिमे द्वे च पूर्वरीतिषु चादिमाः ।
अपस्याः पञ्च विज्ञेयाः पश्चिमां दिशमाश्रिताः ॥ १४
सव्यपक्षे पूर्वपत्रात्पञ्चापस्यास्तु दक्षिणाः ।
आयवाद्या द्वादश तु गणाश्शतमृषीष्टकाः ॥ १५
ताश्चोत्तरापवर्गास्तु प्रागपवर्गा यथायथम् ।
आद्यरीतौ तृतीयाद्या त्रयोदश तु पादिकाः ॥ १६
द्वितीयस्यान्तु षोडश्यश्चतस्रो मध्यतस्स्थिताः ।
तृतीयस्यामपि तथा षोडश्यौ मध्यतः स्थिते ॥ १७
इति त्रयो गणाः पुच्छे मता नवदशेष्टकाः ।
अथ पक्षे दक्षिणेऽस्मिन्पूर्वे पत्रे विहाय तु ॥ १८
त्यक्त्वा च पूर्वोपहिताः पञ्च संख्या अपस्यकाः ।
अवशिष्टाः पञ्चचत्वारिंशत्तत्र वसन्ति याः ॥ १९
एताः पञ्च गणा ज्ञेयाः क्षत्राद्यास्तु ऋषीष्टकाः ।
अथ वामभृतः पश्चात्तिस्रष्षोडशिकास्स्थिताः ॥ २०
सव्यपक्षे दक्षिणतो रीत्यः प्रागायता नव ।
अपस्यावर्जमेतासु स्युष्षट्त्रिंशदृषीष्टकाः ॥ २१
चत्वारस्तत्र विज्ञेया इषिसीदादयो गणाः ।
इत्येवं शतसङ्ख्याका उपधेया ऋषीष्टकाः ॥ २२
ऋषीष्टकान्तं प्रथमे उपधाय ततः परम् ।
अथ कुम्भेष्टका ज्ञेया नैवारान्ते पृणा मताः ॥ २३
तूर्ष्णीं पुरीषाध्यूहस्स्याद्द्वितीये प्राणभृन्मुखाः ।

आद्यद्वितीययोरात्मरीत्योरन्त्ये चतुश्चतुः ॥ २४

तृतीयस्यां रीतिकायां षष्ठी चैवाथ सप्तमी ।

पूर्वाः प्राणभृतो ज्ञेया अथ दक्षिणतः स्थिताः ॥ २५

पक्षस्य मूलरीतौ तु पश्चिमा पूर्विका ततः ।

तद्दक्षिणा च तत्पूर्वे दक्षिणा पूर्विके ततः ॥ २६

तद्दक्षिणा च तत्पूर्वा दश प्राणभृतो मताः ।

आत्मरीतौ तृतीयस्यां द्वितीया नैर्ऋती ततः ॥ २७

उत्तरा षोडशी तस्यास्तृतीयस्यां तु पुच्छके ।

आदितो द्वे द्वितीयस्यां द्वे चैव[१] प्रथमावलौ ॥ २८

आद्यास्तिस्रश्च पाश्चात्यास्सव्ये दक्षिणपक्षवत् ।

आत्मरीतौ तृतीयस्यां पञ्चमी दक्षिणावलौ ॥ २९

पश्चात्प्राणभृतां पञ्च प्रथमायां तथादितः ।

चतस्रश्च प्रतीचीना मध्याः प्राणभृतो दश ॥ ३०

चतुर्थ्यां सप्तमी षष्ठी पञ्चम्यामन्ततश्चतुः ।

षष्ठ्यामन्त्याश्चतस्रश्च दशापानभृतः पुरः ॥ ३१

दक्षिणस्य तु पक्षस्य दक्षिणार्धे तु दक्षिणाः ।

यथोत्तराः प्राणभृतस्तथेशानापवर्गकाः ॥ ३२

आद्यायामन्ततस्तिस्रः पूर्वस्यामन्ततो द्वयम् ।

तृतीयस्यामन्ततो द्वे प्रत्यगग्रा च षोडशी ॥ ३३

तस्या उत्तरतोऽर्ध्यैका तथा ज्ञेया च षोडशी ।

इत्यपानभृतः पश्चादुत्तरस्योत्तरार्धगे ॥ ३४

दक्षिणा प्राणभृद्वत्स्युस्तथा ज्ञेयापवर्गकाः ।

अथ षष्ठ्यां रीतिकायामादितश्चतुरिष्टकाः ॥ ३५

दक्षिणस्यां रीतिकायां चतुर्थ्याद्यास्तु पञ्च च ।

---

१. द्वे द्वे च इति मातृकापाठ एवं परिष्कृतः सूत्रोक्तसङ्ख्याप्राप्तये ।

चतुर्थ्यां पञ्चमी चेति मध्येऽपानभृतो दश ॥ ३६
अयं पुरोऽनुवाके तु मन्त्राः पञ्चैव कीर्तिताः ।
अयमादिप्रजाभ्यान्त एकैको मन्त्र एव हि ॥ ३७
एकैकमन्त्रस्यावृत्या क्षिपेद्दश दशेष्टकाः ।
प्राची दिशामित्यत्रापि मन्त्राः पञ्च ऋष्यन्तकाः[१(अ)] ॥ ३८
आवृत्यैव तु पञ्चानां ज्ञेयाः पञ्चाशदिष्टकाः ।
अनुवाकस्य शेषस्तु यः स्यात् पितर आदिकः ॥
सदैवहूत्यामित्यन्तं पञ्चस्वप्यनुषज्यते ॥ ३९

## ॥ इति विद्यारण्यभाष्योक्तप्रकारः ॥*

आद्यद्वितीयनवमास्त्रिपदास्स्युर्गणे गणे ।
अन्ये षट् द्विपदाः प्रोक्ता मन्त्राः पञ्चपदोऽन्तिमः ॥ ४०
प्राची दिशामित्यत्रापि गणमन्त्राश्च पूर्ववत् ।
सर्वेऽपि द्विपदा मन्त्राः षष्ठस्तु त्रिपदो भवेत् ॥ ४१
विभक्ता इति विज्ञेया प्राणापानभृतश्शतम् ।
दक्षिणे स्युस्सन्ततयो वशा उत्तरपक्षगाः ॥ ४२
शिरस्स्पृष्टा इष्टकाष्षडवशिष्टास्तु याः स्थिताः ।
त्रिवृदाद्याः षडुक्तास्ताः पक्षयोष्षट्षडेकतः ॥ ४३
आत्मरीतौ द्वितीयस्यां द्वितीया च तृतीयका ।
तथैवोत्तरयो रीत्योस्तृतीया च तुरीयका ॥ ४४
त्रिवृदाद्याः षडुद्दिष्टा मध्यदेशं समाश्रिताः ।

---

१(अ). ऋषीन्तकाः इति मातृकापाठः ।

* 'अयं पुरोऽनुवाके' इत्यारभ्य श्लोकत्रयं विद्यारण्यभाष्योक्तप्रकारेण मन्त्रविभागं दर्शयति । अत्र विद्यारण्यभाष्यम् – 'तत्र पूर्वस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रमाह । अयं पुरो भुवः –– प्रजाभ्यः इति । यद्यप्ययमेकवाक्यत्वादेक एव मन्त्रः तथापि प्रतीष्टकमावृत्या दश मन्त्राः सम्पद्यन्ते ॥ तत्र प्राच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह । प्राची दिशां –––ऋषिः इति । सर्वेष्वेतेषु पञ्चसु मन्त्रेष्वनुषञ्जनीयशेषमाह पितरः पितामहाः ––– देवहूत्याम् इति' (तै.सं.४–३–२,३) इति ।

पश्चिमास्त्रिवृदाद्यास्तु पुच्छे शिष्टाषडिष्टकाः । ४५
आत्मरीतौ तु पञ्चम्यां द्वितीया ऋषभसंज्ञका ।
शिष्टा लोकंपृणा ज्ञेयाः प्रथमा चितिरीरिता । ४६

## ॥ अथ द्वितीयादिचितयः ॥

प्रस्तारेऽथ तृतीये स्युर्ऋतव्यान्तास्ततः पृणाः ॥
त्र्यविराद्यास्तु चित्यन्ताः प्रस्तारे स्युश्चतुर्थके । ४७
पञ्चमे वालखिल्यान्ताशिशिष्टा लोकंपृणा मताः ।
भूतेष्टकाद्याश्चित्यन्ताष्षष्ठे प्रस्तार ईरिताः ॥ ४९
सप्तमे स्युर्ऋतव्यान्ता अवशिष्टाः पृणा मताः ।
प्रस्तारे त्वथ चित्यन्तास्सृष्टिप्रभृतयोऽष्टमे ॥ ५०

## ॥ अथ पञ्चमी चितिः ॥

सुमेक इत्यृतव्यान्ता नवमेऽथ पृणा इह ।
उपशीवर्यादयो[२] यास्तु चित्यन्ता दशमे मताः ॥ ५१
अथात्र पञ्चमचितेर्मन्त्रोपहितिरुच्यते ।
शिरोऽग्रीया पादिकाथ सप्तमी चाद्यरीतिगा ॥ ५२
पक्षे च दक्षिणे सव्ये चापि पत्रे उपादिमे ।
दशम्यां मध्यमा चेति क्रमात् पञ्चासपत्नगाः ॥ ५३
चतस्र आद्या द्वादश्यां पूर्वस्यामादितो द्वयम् ।
चतस्र आद्याः पूर्वस्यां विराजो दश पूर्वगाः ॥ ५५
आद्याग्रीयोत्तरा तस्यास्तत्पूर्वा तत उत्तरे ।
पूर्वा तदुत्तरे पूर्वे विराजो दश दक्षिणाः[३] ॥ ५६
पाद्याश्चतस्र आद्यायां पूर्वस्यां तिस्र आदितः ।
पूर्वस्यामुत्तरास्तिस्र इत्येता दश पश्चिमाः ॥ ५७

२. उपशीवर्यादय द्यास्तु इति मातृकापाठः ।
३. पूर्वा तदुत्तरा पूर्वा चोत्तरा दश दक्षिणाः इति मातृकापाठः ।

आद्याग्रीयां दक्षिणा तस्या तत्पूर्वा दक्षिणे ततः ।
तत्पूर्वा दक्षिणा पूर्वे दक्षिणेति दशोत्तराः ॥ ५८
द्वादश्यामुत्तरास्सप्त पुरस्तात् स्तोमभागकाः ।
दक्षिणे पश्चिमात्पत्रादुदगेकान्तरास्तु याः ॥ ५९
तास्सप्त स्तोमभागास्स्युर्दक्षिणां दिशमाश्रिताः ।
आद्यायामन्ततस्सप्त पश्चिमास्स्तोमभागकाः ॥ ६०
सव्यपक्षे दक्षिणवत् सप्त स्युः स्तोमभागकाः ।
नवम्यां मध्यमास्तिस्रषोडश्यस्स्तोमभागकाः ॥ ६१
इत्येका च त्रिंशदपि[४] स्तोमभागा उदीरिताः ।
षोडश्यां मध्यमा त्वेका पूर्वपत्रात्तथोत्तरा ॥ ६२
आद्यायां मध्यमा सव्ये[५] पूर्वपत्रात्तु दक्षिणा ।
सप्तम्यां पादिका षष्ठी पञ्च नाकसदो मताः ॥ ६३
अर्धोत्सेधा नाकसदस्तासु चोडास्तथाविधाः ।
अत्रातृण्णां विकर्णीं च विहायोत्तरमारभेत् ॥ ६४
अन्तिमा मण्डला षष्ठ्यां रेतस्सिग्दक्षिणा ततः ।
चतुर्दश्यामन्तिमा तु विश्वज्योतिः प्रकीर्तिता ॥ ६५
रीतौ दशम्यामप्येकादश्यां च द्वे द्वितीयके ।
तयोरेव चतुर्थ्यौ च ऋतव्ये यानिके क्रमात् ॥ ६६
तूष्णीमेवावरोहादि समिधो वासयेत् घृते ।
श्वोभूते याज्ञसेन्यादिकर्म तु प्रतिपद्यते ॥ ६७
शिरोमूलकषोडश्यौ षोडश्यामन्त्यपादिका ।
अग्निर्मूर्धेति गायत्र्यः तास्तिस्रः पूर्वगा मताः ॥ ६८
तृतीयं दक्षिणं पत्रं त्रिष्टुभश्च तदुत्तरे ।
जगत्यस्तु जनस्याद्या द्वितीयान्तर्गतं त्रिकम् ॥ ६९

---

४. इत्येकत्रिंशदपि इति मातृकापाठः ।
५. आद्यायां मध्यमाख्ये तु इति मातृकापाठः ।

त्रिष्टुभस्तु यथा दक्षे तथा सव्ये त्वनुष्टुभः ।
अथ तिस्रो दक्षिणाग्र्यषोडश्यः पश्चिमादिकाः ॥ ७०
एना वो अग्निमित्यादि बृहत्यः परिकीर्तिताः ।
उदगग्रे तु पक्षाग्र्ये पूर्वे षोडशिकोत्तरा ॥ ७१
अग्ने वाजादिकास्तिस्र उष्णिहः परिकीर्तिताः ।
अथोदगग्राष्षोडश्यस्तिस्रो याः पश्चिमादिकाः ॥ ७२
आ ते अग्न प्रभृतयस्तिस्रः पङ्क्तय ईरिताः ।
दक्षिणाग्रे तु पक्षाग्र्ये पूर्वे दक्षिणषोडशी ॥ ७३
अग्ने तमद्यादयस्स्युस्तिस्रस्त्वक्षरपङ्क्तयः ।
याष्टम्यां मध्यमा सातिच्छन्दास्स्यादग्निमादिका ।
तस्यां यथामन्त्रपाठमवसानचतुष्टयम् ॥ ७४
आद्याश्चतुर्थ्यां द्विपदास्तिस्रोऽग्ने त्वन्न आदिकाः ।
तासु मध्ये नावसानं छन्दोविचितिसूत्रतः ॥ ७५
असव्यपत्राद्द्वितीयादुदक्त्र्यन्तरितं द्वयम् ।
पूर्वास्तिस्रः पक्षमध्या अथ तिस्रस्तदुत्तराः ॥ ७६
इत्येवं दक्षिणे पक्षे सयुजोऽष्टौ प्रकीर्तिताः ।
तत्र त्वा सयुजेत्यादि सप्तस्वप्यनुषज्यते ॥ ७७
अष्टमस्तु मतो रय्यै पोषादिर्मन्त्र उत्तमः ।
मध्यीयानां तु पूर्वाणां तिस्र एकान्तरास्तु याः ॥ ७८
मध्यीयायाः पश्चिमाया एका द्व्यन्तरिता तथा ।
ततः पूर्वगतैका च पञ्च जीमूतसंज्ञकाः ॥ ७९
जीमूताया उत्तमाया पक्ष्ये द्वे पुरतस्स्थिते ।
उत्तरस्यां रीतिकायां द्वितीयादीष्टकात्रयम् ॥ ८०
उत्तरस्यामन्ततो द्वे इति स्युस्सप्त कृत्तिकाः ।
षोडश्यामादिमा पूर्वपत्रादेकान्तरापि च ॥ ८१

आद्यायां पञ्चमी पूर्वपत्रादेकान्तरा तथा ।
उपादिमा चाप्यष्टम्यां ता वृष्टिसनयो मताः ॥ ८२
चतुर्थ्यामुत्तरान्ते द्वे षष्ठ्यां रीतावथादिमा ।
कृस्ना तु पञ्चमीरीतिरष्टादित्येष्टका मताः ॥ ८३
ऋचे त्वेत्यादिभिर्मन्त्रैर्घृतपिण्डा घृतेष्टकाः ।
सप्तम्यामादिमाः पञ्च यशोदाः परिकीर्तिताः ॥ ८४
तस्यामेवान्तिमाः पञ्च तथा भूयस्कृतस्स्तु ताः ।
विशया सव्यपक्षे तु द्वितीया स्यात्तदुत्तराः ॥ ८५
तिस्रः पक्षेष्टकाश्चैव तृतीयस्यां तु पश्चिमा ।
अग्निरूपाणि पञ्चैता उपदध्याद्यथाक्रमम् ॥ ८६
पुरस्तादिष्टका द्वे द्वे रूपयोर्द्वितृतीययोः ।
चतुर्थ्याश्च पुरश्चैका द्रविणोदा इह स्मृताः ॥ ८७
द्रविणोदास्योत्तमस्य स्यादेका पुरतस्स्थिता ।
उत्तरस्यां रीतिकायां द्वितीयादीष्टकात्रयम् ॥ ८८
उत्तरस्यामन्ततो द्वे षडायुष्याः प्रकीर्तिताः ।
आत्ममध्ये पुरस्तात्तु षोडशी हृदयं मतम् ॥ ८९
द्वितीया पक्षमध्यीया ततः पक्ष्या च दक्षिणा ।
तन्मध्यीयोत्तरे च द्वे तृतीया पक्षमध्यका ॥ ९०
तदुत्तरत एका च पूर्वान्त्या पक्षमध्यका ।
ऋतव्यास्सप्त विज्ञेया मन्त्रा एकपदात्मकाः ॥ ९१
विशया दक्षिणे पक्षे पश्चिमा दक्षिणे ततः ।
विज्ञेयास्सव्यपक्षे च पक्ष्ये द्वे च तदुत्तरे ॥ ९२
रथन्तरं बृहच्चेति प्रोक्ता एता षडिष्टकाः ।
रथन्तरस्य बृहतश्चोपरिष्टाद्भविष्यतोः ॥ ९३
पक्षयोरिष्टका एताः षट्सङ्ख्या अवशेषयेत् ।
शिष्टा लोकंपृणा ज्ञेयाः पुरीषं स्यादमन्त्रकम् ॥ ९४

## ॥ पञ्चम्यां चितौ द्वितीयः प्रस्तारः ॥

प्रस्तारे दशमे तत्र मन्त्रोपहितिरुच्यते ।
दक्षिणे पश्चिमं पत्रं तत्पूर्वं तत उत्तराः ॥ ९५
रीतिद्वयगताः पक्ष्याः प्राचीनास्स्युश्चतुर्दश ।
या देव्यसीष्टक इति ततश्च प्राणदा इति ॥ ९६
अथोपशीवरी सा मा इत्यादिरनुषज्यते ।
अपानदा व्यानदा इत्युत्तरेष्वेवमेव हि ॥ ९७
उत्तरस्यां रीतिकायां सप्त तिस्रश्च पश्चिमाः ।
उत्तरस्यां तथा रीताविन्द्रनामाह्वया दश ॥ ९८
एतस्यामेव रीतौ स्युश्चतस्रः पुरतः स्थिताः ।
तथैवोत्तरयो रीत्योरिष्टकास्स्युश्चतुर्दश ॥ ९९
उत्तरस्यां रीतिकायां चतस्रश्चैव पूर्वगाः ।
इतीन्द्रतनवो ज्ञेया द्वाविंशतिरिहेष्टकाः ॥ १००
अग्निनेत्यनुवाकेऽस्मिन् त्रिपदौ षोडशान्तिमौ ।
अष्टादशो पञ्चपद इतरा द्विपदास्स्मृताः ॥ १०१
सव्यपक्षे मूलरीत्योः पूर्वगाष्षट् षडिष्टकाः ।
तिसृष्वप्युत्तरासु स्युरेकविंशतिरिष्टकाः ॥ १०२
इत्येता यज्ञतनवस्त्रयस्त्रिंशत्प्रकीर्तिताः ।
एतासामुत्तरस्यां तु रीतौ सप्तेष्टका मताः ॥ १०३
उत्तरस्यां रीतिकायामिष्टकाः पञ्च पश्चिमाः ।
इति ज्योतिष्मतीराख्या द्वादशापि प्रकीर्तिताः ॥ १०४
आत्मरीतौ द्वितीयस्यां पूर्णिमा स्यादुपान्तिमा ।
तस्याः पश्चिमभागे तु प्रतीचीस्ता दशेष्टकाः ॥ १०५
पुच्छरीतौ तृतीयस्यामर्धैका दक्षिणान्तगा ।
द्वितीयस्यां द्वितीया च तृतीयां प्रथमावलौ ॥ १०६

तस्यामेव द्वितीया च दक्षिणा दश पञ्च च ।
अमावास्या तु नवमी षोडशी प्रथमावलौ ॥ १०७
अष्टमी चार्धिका तस्यां द्वितीयस्यां तु पञ्चमी ।
तृतीयस्यामन्तिमा च पञ्चम्याश्च तथात्मनि ॥ १०८
एता दश[६] तु प्राचीना नक्षत्राख्यास्तथोत्तराः ।
पूर्णा पश्चादित्यृचादावुपधाय तु पूर्णिमाम् ॥ १०९
कृत्तिकेत्यादिभिर्मन्त्रैः प्रतीचीनाश्चतुर्दश ।
उपदध्याद्विशाखान्ता आतृण्णायास्तु दक्षिणाः ॥ ११०
उपधाय त्वमावास्यां यत्त इत्यादि मन्त्रतः ।
उपदध्यादनूराधाप्रभृति पूर्वपूर्वतः ॥ १११
उत्तरेण स्वयं तृण्णां पूर्णेत्यन्ते च पूर्णिमा ।
इत्येवमिष्टकास्त्रिंशज्ज्ञेया नक्षत्रसंज्ञकाः ॥ ११२
ज्योतिषे त्वेत्येवमन्तो मन्त्रः प्राथमिको मतः ।
ऋचे त्वेत्यादिशेषस्तु सर्वत्राप्यनुषज्यते ॥ ११३
ज्योतिष्मत्या अन्तिमायाः पुरस्तादिष्टका द्वयम् ।
उत्तरस्यां पूर्वगाष्टट् सरितोऽष्टाविह स्मृताः ॥ ११४
हिरण्मयाः स्वयंतृण्णा उपधेयास्ततः परम्[७] ।
अह्नां रूपाण्यात्मनस्तु षष्ठ्यां पञ्च स्युरन्तिमाः ॥ ११५
पुच्छरीतौ द्वितीयस्यां तृतीया षोडशीष्टका ।
पूर्वरीतौ द्वितीया च स्यातामेते व्रताह्वये ॥ ११६
समिदाधानमन्त्रौ यौ व्रतकाले प्रचोदितौ ।
देवस्य त्वादि शेषौ तु ताभ्यां मन्त्रोपधिर्मता ॥ ११७
दक्षिणा तु शिरोऽग्रीया दक्षिणा पूर्वपत्रकम् ।
आद्यायां च तुरीयार्ध्या पूर्वपत्रं तथोत्तरम् ॥ ११८

---

६. एकादशाद्या इति मातृकापाठः नक्षत्रेष्टकासंख्याविरोधादेवं परिष्कृतः ।

७. विश्वकर्मा दिशां पतिरिति पञ्च हिरण्येष्टकाः । प्राणाय त्वा चक्षुषे त्वेति चतस्रः स्वयमातृण्णा उपधेया इत्यर्थः ।

चतुर्थ्यां षोडशी तुर्या पञ्चाप्यात्मेष्टका इमाः ।
आत्मरीतौ तृतीयस्यां द्वितीयादीष्टकात्रयम् ॥ ११९
द्वितृतीये उत्तरस्यां वैश्वदेव्यस्तु पञ्च ताः ।
एतासां पञ्च मन्त्रेषु प्रथमः सँय्यदादिकः ॥ १२०
उग्रेत्यादि द्वितीयस्स्याद्ध्रुवादिस्तु तृतीयकः ।
धर्त्रीत्यादि तुरीयस्स्यात्प्राची चाद्यस्तु पञ्चमः ॥ १२१
ते तेऽधिपतयस्तेभ्य इत्यादिश्शेष एव तु ।
जम्भे दधामीत्यन्तस्तु पञ्चस्वप्यनुषज्यते ॥ १२२
आत्मरीतावादिमायां तृतीयादीष्टकात्रयम् ।
वामदेव्यमिह ज्ञेयमात्मनो दक्षिणान्तिकम् ॥ १२३
द्वितीयस्यामन्तिमार्ध्या तृतीयस्यां तथावलौ ।
पञ्चम्याद्या तथा पञ्च तुरीयायाश्चतुष्टयम् ॥ १२४
षष्ठीमारभ्य चाथर्वशिरो नाम्न्यो दश स्मृताः ।
प्रस्तारे नवमे शिष्टाः पक्षयोर्या अवस्थिताः ॥ १२५
रथन्तरंबृहत्संज्ञा उपधेयाः क्रमेण ताः ।
पुच्छरीतावथाद्यायां षष्ठी तत्पूर्वषोडशी ॥ १२६
तृतीयस्यां तृतीया च यज्ञायज्ञियसंज्ञकाः ।
आत्मरीतौ तृतीयस्यां प्रथमर्षभसंज्ञका ॥ १२७
तदुत्तरा षोडशी तु प्राजापत्याह्वया मता ।
उत्तरा तु शिरोऽग्रीया दक्षिणोपान्त्यपत्रकम् ॥ १२८
आद्यायां षोडशी पञ्चम्युत्तरोपान्त्यपत्रकम् ।
चतुर्थ्यां पञ्चमी चेति पञ्चाज्यान्यः प्रकीर्तिताः ॥ १२९
वज्रिण्यथात्मनष्षष्ठ्यां लोकाख्यास्तिस्र आदितः ।
तनोरेकोनविंशत्या इन्द्राख्यायास्तु पश्चिमाः ॥ १३०
तिस्रः पक्षेष्टका ज्ञेयाः पावमान्यस्तदुत्तराः ।
विहाय पूर्वान्तगतां पक्ष्यां तत्पश्चिमास्तु षट् ॥ १३१

आत्माद्यरीतावाद्या च छन्दस्यास्सप्त तास्स्मृताः ।
मूलरीतौ दक्षिणस्याश्शिष्टैका पूर्वदिग्गता ॥ १३२
आत्मरीतावथाद्यायामन्त्यास्तिस्रस्तथेष्टकाः ।
चतस्रस्तु राष्ट्रभृतः पञ्चम्यन्त्या विकर्णिका ॥ १३३
उपधाय हिरण्यैस्तु सर्वतोमुखसंज्ञकम् ।
उपधाय विकर्णी च पञ्चम्यामन्तिमार्धिकाम् ॥ १३४
आयोस्त्वेत्यादिमन्त्रैस्तु तृण्णाधर्मः प्रवर्तते ।
ततो लोकंपृणादिस्स्यात्ता एकादश कीर्तिताः ।
अग्ने युक्ष्वेत्यादिकं तु यथासूत्रं विधीयताम् ॥ १३५
एकैकस्मिन्वासरे त्वेकैकः
प्रस्तारस्स्यादा चतुर्थ्याश्चितेश्च ।
पञ्चमी स्यादहोभिश्चतुर्भि-
र्विराडन्ता नवमेऽहन्युत्तरेऽह्नि ॥ १३६
सँय्यान्यन्ता समिधां वासनं च
विकर्ण्याः प्राक् सर्वमेकादशेऽह्नि ।
विकर्ण्याद्या इष्टका द्वादशेऽह्नी-
त्येवं भागस्स्याद्द्विषाहस्रचित्ये ॥ १३७

## ॥ इति अपरा द्विषाहस्रकारिकाः ॥



# ॥ प्राचीनकारिकासु द्विषाहस्रकारिकाः ॥*

द्विषाहस्रेषु द्विस्तारा एकैका चितयस्स्मृताः ।
त्रिषाहस्रे तथा त्रिस्त्रिः प्रस्ताराश्चितयस्तथा ॥ १
साहस्रे पञ्च चितयः स्ताराः पञ्च भवन्ति च ।
द्विषाहस्रे दश स्ताराः चितयः पञ्च चैव हि ॥ २
त्रिषाहस्रे पञ्चदश प्रस्ताराश्चितिपञ्चकम् ।
द्विषाहस्रे प्रतिचिति त्विष्टकास्स्युश्चतुश्शतम् ॥ ३
एकस्यास्तु चितेस्त्रिषाहस्रे षट्शतमिष्टकाः ।
मन्त्रास्साहस्र उदिताः पञ्चोनन्तु शतत्रयम् ॥ ४
आक्रमण्याद्यपस्यान्तं तन्मन्त्रा एकसप्ततिः ।
ऋषीष्टकाश्शतमथ प्राणापानभृतश्शतम् ॥ ५
द्वादशापि च सन्तत्यो वशाः पञ्च प्रकीर्तिताः ।
त्रिवृतषडेक ऋषभ एवमेते प्रकीर्तिताः ॥ ६
प्रथमेऽग्नौ वस्तुतस्तु प्राणापानभृतो न हि ।
तदूर्ध्वपतितास्सन्तत्याद्या अपि भवन्ति न ॥ ७
बद्धक्रमत्वादेतेषामपकर्षो न विद्यते ।
ऋषीष्टकान्त ऋषभशिष्टास्सर्वाः पृणा इति ॥ ८
यजुष्मत्यस्तु यावत्यः तावतीरुपधाय च ।
अन्या लोकंपृणाभिस्युर्मध्यमादिचितिर्भवेत् ॥ ९
पञ्चम्यास्तु चितेस्सम्यक् प्रयोगो वक्ष्यतेऽधुना ।
असपत्नाद्यृतव्यान्ता विश्वकर्मादिशर्कराः ॥ १०
ऋषभश्च ततः प्राजापत्या अज्यानिरादयः ।
राष्ट्रभृत्सर्वतोमुखं ततो लोकंपृणादिकम् ॥ ११

---

*. एताः कारिका मातृकाग्रन्थेष्वेवंनाम्ना नैव पठिताः । अत्रस्थाः कारिकाः प्राचीनकारिकायाः शुल्बोपधानानुसारिण्यः इत्यत एवं नाम कृतम् ।

केचन श्रौतिनस्सम्यगुपधानं वदन्ति हि ।
एकचित्यर्थमन्त्रास्तु ये ये तांस्तान्विभज्य तु ॥ १२
प्रतिप्रस्तारमेवैनानादावादौ प्रयोजयेत् ।
शिष्टा लोकंपृणाभिस्स्युरुपधेया यथाक्रमम् ॥ १३
यजुष्मतीभिः प्रस्तारे केवलाभिर्न चीयते ।
तथा लोकंपृणाभिस्तु केवलाभिर्न चीयते ॥ १४
आदौ काश्चिद्यजुष्मत्यः काश्चिल्लोकंपृणास्तथा ।
मन्त्रैर्विभज्यमानांशे न्यूनो वा यदि वाऽधिकः ॥ १५
नैतावतापि दोषस्स्यात् गणभेदभयात्तथा ।
द्विषाहस्रे परश्येने वक्ष्ये मन्त्रोपधिक्रमम् ॥ १६
शुल्बोपधाने बहवो विकल्पास्सन्ति शास्त्रतः ।
तेषु यं पक्षमाश्रित्य कृत्स्नशुल्बोपधाविधिः ॥ १७
मन्त्रोपधाने तं पक्षमाश्रित्यैव क्रियोच्यते ।
इदानीमुपधानस्य विधिरत्र प्रकाश्यते ॥ १८
साहस्रचयनस्याग्रे प्रयोगः परिकीर्तितः ।
इदानीमपि तन्मार्गमनुसृत्य क्रियोच्यते ॥ १९
पञ्चम्यन्त्याक्रमण्याख्येत्येवमादि यथाक्रमम्[१] ।
उपदध्यादपस्यान्तं कुम्भं कुम्भीमथ क्षिपेत्[२] ॥ २०
अमृन्मयीष्टकादेशबाधिनीरवटे क्षिपेत् ।
तस्मात्कुम्भोपधानन्तु साहस्राग्न्युपधिस्थले[३] ॥ २१
चतस्रो मध्य एव स्युर्विधेरत्र च सम्भवात् ।
स्वकाले शक्यते तासामुपधानक्रमेण च ॥ २२
द्विषाहस्रे कुम्भकुम्भ्योरुपधाने त्वसम्भवात् ।
चतस्रो मध्य इत्युक्तेर्मन्त्राननत्रापकृष्य च ॥ २३

---

१. यथा पुरः इति K.M पाठः । २. कुम्भान् कुम्भीस्ततः क्षिपेत् इति K.M पाठः ।
३. साहस्रे उपधिस्थले इति K.M पाठः ।

ऋषीष्टकाभिः प्रागेता उपदध्याद्यथाक्रमम् ।
अन्यथोपहितानान्तु न न्यायञ्चालनं भवेत् ॥ २४
कुम्भेष्टकास्त्यजन्त्यन्ये त्यागं नेच्छन्ति चापरे ।
बार्हस्पत्यस्य चरोरपकर्षो विधीयते[४] ॥ २५
उपदधेयास्ततस्वर्णास्ततश्शतमृषीष्टकाः ।
उपधाय तथैकान्नत्रिंशल्लोकंपृणेष्टकाः ॥ २६
तूर्ष्णीं पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ।

## ॥ अथ प्राणापानभृतां उपधानम् ॥

अथापरस्मिन्प्रस्तारे प्राणापानभृतां निधिः ॥ २७
आरभ्य च प्राणभृतो बाह्यां बाह्यामिति क्षिपेत् ।
अथापनभृतो बाह्यामन्तरामन्तरामिति ॥ २८
दक्षपक्षे प्राणभृतो बाह्यां बाह्याग्निदिङ्मुखाः ।
तथैव सव्यपक्षे स्युरन्तरा रुद्रदिङ्मुखाः ॥ २९
षष्ठरीत्यामन्तिमे द्वे पञ्चम्यां पञ्च पूर्वतः ।
तिस्रश्चतुर्थरीत्यन्त्याः पूर्वाः प्राणभृतो दश ॥ ३०
आद्यरीतौ तृतीयाद्याश्चतस्रः पूर्वगा मताः[५] ।
तद्दक्षिणे च तत्पूर्वे दक्षिणा च ततः पुरः ॥[५अ] ३१
एवं प्रोक्ता दश प्राणभृतो दक्षिणदिग्गताः[६] ।
आदिमा च द्वितीयस्यां तृतीयस्यां तथादिमा ॥ ३२
तत्पश्चाद्विशया षोडश्यर्ध्या तद्दक्षिणा ततः ।
पुच्छे पश्चिमयो रीत्योस्तिस्रस्तिस्रस्तथादिमाः ॥[६अ] ३३

---

४. बार्हस्पत्यस्य चरोः कुम्भेष्टका मध्ये वितानिताः इति मातृकापाठः ।
५. दक्षपक्षे तृतीयाद्याः चतस्रः पूर्वगास्ततः इति पाठा० ।
५अ. दक्षिणा पूर्वगा दक्षा पूर्वा च प्राणभृद्दश इति पाठा० ।
६. तत्पूर्वा च दश प्राणभृतो दक्षिणदिग्गताः इति पाठा० ।
६अ. तिस्रश्चतस्र आद्यायां पश्चिमा प्राणभृद्दश इति पाठा० ।

सव्याद्यायां तृतीयाद्याः पञ्चैव पूर्वगा मताः ।[७]
उत्तरा पूर्वगोदक्स्था[८] उत्तरे प्राणभृद्दश ॥ ३४
चतस्रोऽर्ध्या आदिमायां चतस्रोऽर्ध्यास्तदुत्तराः ।
तृतीयस्यां पञ्चमी च षष्ठी स्यान्मध्यतो दश ॥ ३५
शिरसो दक्षिणा षोडा तत्पश्चात्तिस्र उच्यते ।
द्वितीयस्यामादिमायां तिस्रस्तिस्रोऽन्तिमाः क्रमात् ॥ ३६
दशापानभृतः पूर्वा दक्षिणाः प्राणभृत्पुरः ।
पुच्छे पश्चिमयो रीत्योः तिस्रस्तिस्रोऽन्तिमाः क्रमात् ॥ ३७
षोडश्यर्ध्ये च तत्पूर्वे षोडश्यर्ध्ये ततः पुरः ।
सव्ये प्राणभृतः पश्चाद्दशापानभृतस्तथा ॥ ३८
चतस्रोऽर्ध्यास्ततषष्ठ्यां चतस्रोऽर्ध्याश्च दक्षिणाः ।
चतुर्थ्यां च तृतीयायां द्वितीया मध्यतो दश ॥ ३९
सन्ततीर्दक्षिणे पक्षे वशा उत्तरपक्षगाः ।
शिरोऽग्र्या पक्षयोराद्ये आद्यायामादिमात्मनि ॥[९] ४०
तृतीयस्यां चतुर्थी स्यात्पुच्छाद्यायां तु पञ्चमी ।[९]
तृतीया च तृतीयायामृषभः परिकीर्तितः ॥[१०] ४१
षट्सप्ततिस्तथा लोकंपृणाश्चितिसमापनम् ।
गायत्र्याभिमृशेदग्निं नित्योऽश्वः परिणीयते ॥ ४२

## ॥ अथ द्वितीया चितिः॥

श्वो भूते तु तृतीयेऽह्नि प्रस्तारः प्रथमो भवेत् ।
एकादश्यान्तु षोडश्यः पञ्चाश्विन्यः प्रकीर्तिताः ॥ ४३

---

७. सव्यपक्षे तृतीयाद्याश्चतस्रः पूर्वगास्ततः इति पाठा० । ८. उत्तराः पूर्वगोदक्स्था इति पाठा० ।

९. तुरीयरीत्यामन्त्या च पक्षाग्रे च ततो मते ।
प्रथमायां तथा षष्ठ्यां आद्ये चैव तथेष्टके ॥
पुच्छाद्यरीत्यां पङ्क्तिश्च त्रिवृतः परिकीर्तिताः इति आन्ध्रप्रयोगपाठः ।

१०. द्वितीयस्यां तृतीया च ऋषभः परिकीर्तितः इति पाठा० ।

तासां पश्चादृतव्यास्स्युः तत्पश्चात्प्राणभृद्गणः ।
पञ्चापस्याः प्रतिदिशं मध्ये च परिहृत्य ताः ॥ ४४
अष्टम्यां मध्यमां हित्वा सँय्यान्यौ दक्षिणे ततः ।
ऋतव्ये उत्तरे तासां पृणाः षट्सप्ततिश्शतम् ॥ ४५
चतुर्थेऽह्नि द्वितीये तु प्रस्तारे त्र्यविरादिकाः ।
उपधाय यथासूत्रमृषभोऽत्रोपधीयते ॥ ४६
शतञ्चाशीतिरस्यां तु चितौ लोकम्पृणेष्टकाः ।
त्रिष्टुभाभिमृशेदग्निं तृतीया वक्ष्यते चितिः ॥ ४७

## ॥ अथ तृतीया चितिः॥

मण्डलाद्या बृहत्यन्ताः प्रथमे स्तार आदिमे ।
अष्टत्रिंशच्छतं लोकंपृणा अपि च निक्षिपेत् ॥ ४८
षष्ठाहनीयप्रस्तारे द्वितीये प्रक्षिपेत्क्रमात् ।
संस्पृष्टाः पृष्ठ्यया स्थाप्या वालखिल्या द्विसप्तगाः ॥ ४९
भूताख्या उत्तरे पार्श्वे आत्ममध्यात्परर्षभः ।
पृणास्त्रिसप्ततिशतं जगत्याग्न्यभिमर्शनम् ॥ ५०

## ॥ अथ चतुर्थी चितिः ॥

श्वो भूते सप्तमेऽह्नि स्यात्प्रस्तारः प्रथमोऽत्र तु ।
आशुरग्नेरिति द्वाभ्यामष्टाविंशतिरिष्टकाः ॥ ५१
द्विसप्ततिशतं चात्र पृणाश्चाथाष्टमेऽहनि ।
द्वितीय एव प्रस्तारे सँय्यान्यौ द्वे ऋतव्यके ॥ ५२
चतस्र आत्ममध्ये स्युस्सृष्टीर्दक्षिणपार्श्वगाः ।
व्यष्टीरुत्तरपार्श्वे तु वृषस्तत्रैव पश्चिमः ।

११. व्युष्टीरुत्तरपार्श्वे तु ईयुष्टे व्युष्टिरुत्तमा ।
द्विषष्टिस्तु शतं चात्र पृणाश्चितिसमापनम् ।
ऋषभस्तु ततो ज्ञेयः द्विषष्टिस्तु पृणास्तथा इति आन्ध्रप्रयोगपाठः ।

पृणा द्विषष्टिश्च शतमभिमृष्टिरनुष्टुभा ॥[११] ५३

## ॥ अथ पञ्चमी चितिः ॥

श्वोभूते नवमेऽह्नि स्यात्प्रस्तारः प्रथमो मतः ।
इष्टका असपत्नाद्या विराडाद्याश्च पूर्ववत् ॥ ५४
द्वादश्यां शेषितास्स्तोमा विराजः पक्षयोः पुरः ।
आद्यायामुत्तरास्सप्त नवम्यां मध्यतस्त्रिकम् ॥ ५५
षोडश्यां मध्यमा पाद्या पक्षयोश्च विराट्पुरः ।
मध्यमे चादिसप्तम्योर्नात्र तृण्णाविकर्णिके[१२] ॥ ५६
सप्तम्यां मण्डला तुर्या रेतस्सिग्दक्षिणा ततः ।
तत्रैव नवमी ज्योतिरथर्तव्ये च यानिके ॥ ५७
एकादश्यां दशम्यां च द्वितीये च चतुर्थके ।
दशमेऽहनि तत्रैव प्रस्तारे शेषमारभेत् ॥ ५८
गायत्र्यश्शिरसि स्थाप्या विराजस्त्रिष्टुभः पुरः ।
जगत्याख्या द्वितीयस्यां विराजोऽनुष्टुभः पुरः ॥ ५९
तिरश्च आत्मषोडश्यः सन्ध्ययोर्द्वे द्वे तु मध्यमे ।
विषुरूपाण्यतिच्छन्दा[१३] अष्टम्यां मध्यतस्स्थिता ॥ ६०
चतुर्थ्यां द्विपदाः प्रोक्ताः पृष्ठयोः स्थानमुच्यते ।
पक्षसन्ध्योश्च पूर्वान्त्ये द्वे द्वे तद्दक्षिणोत्तरे ॥ ६१
एतत्तु पृष्ठयोस्स्थानमिदानीन्नोपधीयते ।[१४]
दक्षपक्षोत्तरे भागे पक्ष्या अष्टादशेष्टकाः[१५] ॥ ६२
तत्रैव पक्षमध्ये द्वे सयुग्जीमूतकृत्तिकाः ।

---

१२. ना नाकसदः चोडा अपि भवन्ति । तृण्णाः स्वयमातृण्णाः विकर्णी च न भवतः इत्यर्थः ।

१३. विषुरूपाणि छन्दांसि इति आन्ध्रप्रयोगपाठः ।

१४. अस्मिन् प्रस्तारेऽनेन श्लोकेन षडिष्टकानां रथन्तरबृहतां स्थानानि निर्दिष्टानि । उत्तरप्रस्तारोपधानकाल एतासामुपधानं भवति ।

१५. शिष्टा अष्टादशेष्टकाः इति पाठा० ।

षोडश्यां दक्षिणा पाद्या पक्षाग्रीये च पक्षयोः ॥ ६३
आद्यायां पञ्चमी वृष्टिरष्टम्यामप्युपादिमा ।
उपान्त्यान्त्ये चतुर्थ्याञ्च पञ्चमीरीतिरेव च ॥ ६४
षष्ठ्यामाद्या तथादित्यसंज्ञिका अष्ट चेष्टकाः ।
षष्ठ्यामन्त्याश्च सप्तम्यामाद्ये पञ्च यशास्स्मृताः ॥ ६५
सप्तम्यामेव शिष्टास्स्युः पञ्च भूयस्कृदिष्टकाः ।[१६]
पक्षेष्टकास्सव्यपक्षे त्रयोविंशतिरिष्टकाः ॥ ६६
अग्निरूपाद्यृतव्यान्ता उपधेया यथाक्रमम् ।
एकादश्यान्तु हृदयं मध्ये मन्त्रक्रमेण हि ॥ ६७
उपात्यान्त्ये त्रयोदश्यां चतुर्दश्यामथान्तिमा ।
तिस्रश्च दक्षपक्षे स्युरिष्टका अवशेषिताः ॥ ६८
विशया तत्र पाश्चात्या तृतीयाद्या च पुच्छतः ।
पुच्छाद्यायां तथा षष्ठी अष्टम्याञ्च चतुर्थिका ॥ ६९
विशया सव्यपाश्चात्या पृणा एकादशेष्टकाः ।
षडिष्टका नोपहितास्सन्ध्योस्तिष्ठन्ति पृष्ठतः ॥ ७०
एकादशेऽह्नि श्वोभूते प्रस्तारे तु द्वितीयके ।
या देव्यसीति मन्त्राद्या अष्टाचत्वारिंशदिष्टकाः ॥ ७१
इन्द्रतन्वन्तमेतासां दक्षपक्षाग्रियादिमाः ।
तत्रैव पक्षे पूर्वत्र शेषयेद्राष्ट्रभृद्गणम् ॥ ७२
यज्ञतन्वस्त्रयस्त्रिंशद्द्वादश ज्योतिषोऽपि च ।
षष्ठरीत्यन्तिमां शिष्ट्वा तद्वत्सव्यच्छदे पुनः ॥[१७] ७३
एतासामुभयानाञ्च उदगेवापवर्गकाः[१८] ।

---

१६. एतदनन्तरम् 'उदक्पक्षाग्रियाप्यया चाग्र्या चैव तदुत्तरे' इति मातृकाग्रन्थे पठितम् । अस्य तात्पर्यं नावगतम् ।

१७. एतदनन्तरम् 'आद्यरीतौ सादिमा स्यात् षष्ठीरीतिगणादिमा' इति मातृकाग्रन्थे पठितम् । अस्य तात्पर्यं नावगतम् ।

१८. 'ज्योतिष्मती सव्यपक्षे तथा यज्ञतनूरपि ।
पृष्ठस्थानमबाधि त्वा उपदध्याद्यथाक्रमम्' इति मातृकाग्रन्थपाठः ।

एतदन्तं विरम्य श्वः प्रभाते शेषमारभेत् ॥ ७४
अथात्मनि द्वितीयस्यां उपान्त्या पौर्णमासिका ।
तत्पश्चात्कृत्तिकाद्याश्च दश पुच्छे ततः पराः ॥ ७५
चतस्रस्तु प्रतीच्यस्तु[१९] विशाखान्ताश्च तारकाः ।
पुच्छाद्यायान्तथा षष्ठी यत्ते देवा इति क्षिपेत् ॥ ७६
ततः पुरस्तात्तिस्रस्स्युः पुच्छ एव ततः पराः ।
पञ्चम्यान्दश मैत्राद्या भरण्यन्तास्त्रयोदश ॥ ७७
तत्रोपान्त्या पुनश्चापि पूर्णा पश्चादिति क्षिपेत् ।
असंस्पृष्टत्वमेतासां तिलमात्रं विधीयते[२०]॥ ७८
असंस्पृष्टत्वमत्रैके इष्टकाव्यवधानतः ।
अपरामपरां पूर्वां इत्येव च विधेन च ॥[२०अ] ७९
सरितोऽष्टौ पूर्वरीतिः साग्र्याऽनाद्यावुत्तरच्छदे[२१] ।
निधाय विश्वकर्मादि तथा स्युस्स्वर्णशर्कराः ॥ ८०
पञ्चाह्नां रूपसंज्ञास्स्युः षष्ठ्यामाद्याः प्रकीर्तिताः ।
व्रतकाले समिन्मन्त्रौ देवस्य त्वेति मन्त्रतः ॥ ८१
सायं प्रातर्नियमितौ ताभ्यां द्वे इष्टके क्रमात् ।
अथ व्रतमुपदधात्यत्र कैश्चित्प्रयुज्यते ॥ ८२
अत्रैवेष्टं मम मते यदि स्यातां व्रतेष्टके ।
आत्मेष्टका चतुर्थ्यन्त्या पक्षयोरप्युपादिमा ॥ ८३
पुच्छाद्यायां चतुर्थी च चतुर्थ्यां च चतुर्थिका ।
पञ्चादितस्तृतीयस्यां वैश्वदेव्यः प्रकीर्तिताः ॥ ८४
अथाद्यायां वामदेव्यस्तिस्रः पूर्वाः प्रकीर्तिताः ।

---

१९. प्रतीचीस्तु इति आन्ध्रप्रयोगपाठः ।
२०. असंस्पृष्टत्वमेतासां ब्राह्मणोक्तं असंभवेत् ।
तथाप्यत्र तथा कुर्यात् तिलार्धार्धान्तरं यथा इति पाठा० ।
२०अ. इष्टकाव्यवधानक्रमेऽपि पूर्वां प्रथमामुपधाय अपरामपरामिष्टकामिति विधेनैवोपदध्यादित्यर्थः ।
२१. अनाद्योत्तरच्छदे इति मातृकापाठः ।

द्वितीयान्त्या तृतीयस्यां षष्ठी चैव ततः परम् ॥ ८५
परस्त्रीणि च तत्पूर्वाश्चतुर्थ्यां चैव षष्ठिका ।
तत्पुरस्त्रीणि पञ्चम्यन्त्याथर्वशिरसो दश ॥ ८६
पक्षसन्ध्योश्च पूर्वस्मिन्[२२] तिस्रस्तिस्रस्तथेष्टकाः ।*
रथन्तरं बृहच्चापि ह्युपधाय यथाक्रमम् ॥* ८७
प्रस्तारे ह्युत्तरे तत्र यज्ञायज्ञियमिष्यते ।*

*** क्वचिदधिकः पाठः**

पक्षसन्ध्योश्च पूर्वान्त्ये द्वे तु दक्षिणतोत्तरे ॥
षडिष्टका उपधाय चात्मन्येव यथायथम् ।
उपधायोत्तरे स्तारे चित्यास्तत्रोपरि क्षिपेत् ॥

यज्ञा यज्ञाव इत्याद्यैर्यज्ञियन्तूपधीयते ॥ ८८
पुच्छे पश्चिमयो रीत्योः पञ्चम्यावुपधाय च ।
तत्पूर्वा विशयां प्राचीमुत्तरां षोडशीं क्षिपेत् ॥[२३] ८९
आत्माद्यरीत्यां तुर्या तु ऋषभः परिकीर्तितः ।
प्राजापत्या च तत्रैव पूर्वा हि परिकीर्तिता ॥ ९०
शीर्ष्णि स्थिता[२४] षोडशी च तृतीयाग्रे च पक्षयोः ।
पुच्छानाद्या चतुर्थी च[२५] चतुर्थ्यामपि पञ्चमी ॥ ९१
एताः पञ्चैव चाज्यान्यो ह्यश्मनोऽथ दिशः प्रति ।
पुच्छस्य दक्षिणश्रोण्यां तिस्रो लोकेष्टका मताः ॥ ९२
पावमान्यश्चोत्तरस्यां श्रोण्यां तद्वच्च निक्षिपेत् ।
आद्यायामन्ततस्तिस्रः पक्षे चत्वारि छन्दसः[२६] ॥ ९३

---

२२. पूर्वास्मिन् प्रस्तारे इत्यर्थः ॥
२३. एतदनन्तरम् 'दक्षा चतुर्थ्यां पाद्या तु प्राजापत्या तदुत्तरा' इति क्वचिदप्रकरणस्थं पठितम् ।
२४. शीर्ष्ण्युदक्स्था इति पाठा० । द्वितीयाग् र्ये च पक्षयोः इति प्रामादिकः पाठः ॥
२५. पुच्छाद्यायां द्वितीया च इति पाठा० । २६. आद्यायामन्तिमाः पञ्च पक्षे द्वे सप्त छन्दसः इति पाठा० ।

दक्षपक्षोत्तरे भागे पुरस्ताद्राष्ट्रभृद्गणः ।
अग्निर्भुवो जनस्य त्वामग्ने तमिति सर्वतः ॥ ९४
उत्तरेऽंसे विकर्णी स्यादातृण्णां मध्यतः क्षिपेत् ।
पुच्छाद्यायां त्वष्टमी च दक्षपक्षे द्वयं तथा ॥[२७] ९५
आद्यास्तिस्रश्चतुर्थ्यां च सव्यपक्षे तु पञ्चकम् ।[२८]
एकादश पृणा अत्र यदि स्यातां व्रतेष्टके ॥[२८] ९६
केचिद्व्रतेष्टकोपधानं वैकल्पिकं च मन्वते ।
चितौ हिरण्यमित्यादि पङ्क्त्याऽग्निमभिमृश्य तु ॥ ९७
द्विषाहस्रस्य श्येनस्य प्रयोगः परिकल्पितः ।
उपधानविधिस्सम्यक्प्रीयतां पुरुषोत्तमः ॥ ९८

## ॥ इति प्राचीनकारिकासु द्विषाहस्रकारिकाः ॥



---

२७. दक्षपक्षे द्वयं चापि पुच्छाद्यायां तृतीयिका इति मातृकापाठः स्थानविरोधादेवं परिष्कृतः ।

२८. चतस्रो दक्षपक्षे तु शिष्टाः पुच्छे चतुर्थिका ॥
चतुर्थ्यान्या तथा षष्ठ्या उपान्त्ये द्वे उदक्छदे ।
अवशिष्टाः पञ्च लोकम्पृणा अत्र त्रयोदश इति पाठा० ।

# ॥ प्राचीनकारिकासु अपरा द्विषाहस्रकारिका: ॥

द्वितीये श्येनचित्येऽग्नौ द्विषाहस्रविधोच्यते ।
ऋषीष्टकावधि प्राग्वच्छिष्टा नव च विंशतिः ॥ १
पञ्चम्यन्त्याक्रमण्याख्या तुर्या मध्ये तु मण्डला ।
आरोहे उत्तरे वामा द्वितीया सप्तमावलौ ॥ २
सिचौ तदन्त्यपूर्वान्त्ये ज्योतिः पञ्चम्युपादिमा ।
त्रयोदशीचतुर्दश्योः संयान्यौ द्वे उपान्तिमे ॥ ३
ऋतव्ये पूर्वयोरन्त्ये अषाढा ज्योतिरुत्तरा ।
एकादश्यन्तिमा घर्मा द्वादश्यन्त्या कुलायिनी ॥ ४
षष्ठीमध्य उखास्थानं प्रवक्ष्ये पुरुषाकृतिम् ।
द्वादश्याः पूर्वयोराद्ये द्वादश्यां त्रिचतुर्थके ॥ ५
प्रागायताश्च षोडश्यः सप्तम्यां त्रिचतुर्थके ।
आद्ये चापरयो रीत्योर्द्वादश प्रथमो गणः ॥ ६
पाद्याश्चतस्रो द्वादश्यां षोडश्यो मध्यतः स्थिताः ।
पाद्याश्चतस्रः सप्तम्यां इति द्वादश मध्यमाः ॥ ७
चतुर्दशीत्रयोदश्योरन्त्ये पाद्ये च पश्चिमे ।
प्रागायताश्च षोडश्यः सप्तम्यां पादिकाद्वयम् ॥ ८
अन्त्योपान्त्ये चापरयोरित्येता द्वादशोत्तमाः ।
शिरोग्रे द्वितयं हित्वा पञ्चापस्याः पुरस्थिताः ॥ ९
दक्षिणा उत्तराश्चापि पक्षयोः पुरतो दश ।
पुच्छस्य दक्षिणे पार्श्वे पञ्च पश्चादपस्यकाः ॥ १०
हैमेष्टकाः प्रतिदिशं मध्ये त्वन्त्या निधीयते ।
उदक्पक्षाप्ययाग्रीयाश्चतस्रः पक्षगोचराः ॥ ११
नवमीदशमीरीत्योरन्तिमे आयवादि षट् ।
दक्षिणात्मतिरश्चीनाः षोडश्यः पूर्वपादिके ॥ १२

आद्याप्ययाग्र्या सप्तर्तसत् गणोऽथ पुरस्त्रिकम् ।
पक्ष्यास्त्रिंशत्समद्ध्यीयाः सन्याद्या स्वर्जिदन्तकाः ॥ १३
सपत्नहगणाद्याश्च सवंत्सरगणान्तकाः[1] ।
उदक्पक्षाः समद्ध्यीयाश्चतुस्त्रिंशदृषीष्टकाः ॥ १४
आद्या मध्यां च पूर्वस्यां चतुर्थीमवशिष्य च ।
उत्तमौ तु गणौ पुच्छे विंशतिस्ता ऋषीष्टकाः ॥ १५

## ॥ अथ प्राणापानभृतामुपधानम् ॥

अथापरस्मिन्प्रस्तरे प्राणापानभृतां निधिः ।
आरभ्य च प्राणभृतो बाह्यां बाह्यामिति क्षिपेत् ॥
अथापनभृतो बाह्यामन्तरामन्तरामिति ।
दक्षपक्षे प्राणभृतो बाह्यां बाह्याग्निदिङ्मुखाः ॥
तथैव सव्यपक्षे स्युरन्तरा रुद्रदिङ्मुखाः ।
षष्ठरीत्यामन्तिमे द्वे पञ्चम्यां पञ्च पूर्वतः ॥
तिस्रश्चतुर्थरीत्यन्त्याः पूर्वाः प्राणभृतो दश ।
पक्षयोश्च यथायोगमक्ष्णया चोपधीयते ॥
आद्यरीतौ तृतीयाद्याश्चतस्रः पूर्वगा मताः ।
तद्दक्षिणे च तत्पूर्वे दक्षिणा च ततः पुरः ॥
एवं प्रोक्ता दश प्राणभृतो दक्षिणदिग्गताः ।
आदिमा च द्वितीयस्यां तृतीयस्यां तथादिमा ॥
तत्पश्चाद्दिशया षोडश्यर्ध्या तद्धक्षिणा ततः ।
पुच्छे पश्चिमयो रीत्योस्तिस्रस्तिस्रस्तथादिमाः ॥
सव्याद्यायां तृतीयाद्याः पञ्चैव पूर्वगा मताः ।
उत्तरा पूर्वगोदक्स्था उत्तरे प्राणभृद्दश ॥
चतस्रोऽर्ध्या आदिमायां चतस्रोऽर्ध्यास्तदुत्तराः ।

१. गणान्तिकम् इति पाठः ।

तृतीयस्यां पञ्चमी च षष्ठी स्यान्मध्यतो दश ॥
शिरसो दक्षिणाषोडा तत्पश्चात्तिस्र उच्यते ।
द्वितीयस्यामादिमायां तिस्रस्तिस्रोऽन्तिमाः क्रमात् ॥
दशापानभृतः पूर्वा दक्षिणाः प्राणभृत्पुरः ।
पुच्छे पश्चिमयो रीत्योः तिस्रस्तिस्रोन्तिमाः क्रमात् ॥
षोडश्यऽर्ध्ये च तत्पूर्वे षोडश्यौ ततः परे ।
दशापानभृतः प्राणभृतां पश्चादुदीरिताः ॥
सव्येप्राणभृतः पश्चाद्दशापानभृतस्तथा ।
चतस्रोऽर्ध्यास्ततषष्ठ्यां चतस्रोऽर्ध्याश्च दक्षिणाः ॥
चतुर्थ्यां च तृतीयायां द्वितीया मध्यतो दश ।
सन्ततीर्दक्षिणे पक्षे वशा उत्तरपक्षगाः ॥
तुरीयरीत्यामन्त्या च पक्षाग्र्ये च ततो मते ।
प्रथमायां तथा षष्ठ्यामाद्ये चैव तथेष्टके ॥
पुच्छाद्यरीत्यां पङ्क्तिश्च त्रिवृतः परिकीर्तिताः।
तृतीया च तृतीयायामृषभः परिकीर्तितः ॥
षट्सप्ततिस्तथा लोकंपृणाश्चितिसमापनम् ।
गायत्र्याभिमृशेदग्निं नित्योऽश्वः परिणीयते ॥

[एतावता आन्ध्रदेशीयद्विषाहस्रकारिकासु प्राणापानभृतामुपधानविधिरभिहितः । प्राचीन-कारिकायाः द्विषाहस्रकारिकासु प्राणापानभृतामुपधानकारिका एता अनुपदं पठ्यन्ते । पटनिर्माणे प्राचीनकारिका अस्माभिर्दुर्बुद्धा अभवन् । अतोऽस्माभिः प्राणापानभृतां विषये आन्ध्रकारिका आश्रिताः । चयनविषये कुशला विद्वांसः इदं साधयन्तु इति संप्रार्थयामहे ।]

## ॥ प्रथमचितौ द्वितीयः प्रस्तारः ॥

अथोत्तरस्मिन्प्रस्तारे कार्याः प्राणभृतादयः ।
दक्षिणस्यां चतस्रोऽन्त्याः तिस्रश्चैवोत्तरां गताः[२] ॥ १६
तृतीयस्यान्तिमे हित्वा द्वे तयोरुत्तरापि च ।
एवं प्राणभृतः प्राच्यो ज्ञेयाः सूत्रानुसारतः ॥ १७
दक्षपक्षे तृतीयाद्या तुरीयाद्या तथैव च ।
तद्दक्षिणाश्चतस्रश्च पञ्चम्यां च तुरीयका ॥ १८
तत्पूर्वा दक्षिणा तस्यास्तत्पूर्वा च दश स्मृताः ।
पुच्छाद्यरीतिगास्तिस्रो द्वितीयस्यां तथादिमे ॥ १९
तत्पूर्वार्ध्या तृतीयस्यामाद्यायां च तुरीयका ।
पञ्चम्युपाद्ये इत्येवं पुच्छे प्राणभृतां गणः ॥ २०
दक्षपक्षे यथाप्राणभृतः सम्परिकीर्तिताः ।
तथैवोत्तरपक्षेऽपि प्राणापानभृतस्समाः ॥ २१
उदक्पक्षे तृतीयाद्या तुरीयाद्या तथैव च ।
तदुत्तराश्चतस्रश्च पञ्चम्यां च तुरीयका ॥ २२
तत्पूर्वा चोत्तरा तस्याः तत्पूर्वा च दश स्मृताः ।
आद्यायामादिमास्तिस्रो मध्ये प्राणभृतां गणे ॥ २३
द्वितीयस्यां तुरीयादि[३] षट् तृतीयायां च सप्तमी ।
एवं मध्ये प्राणभृतां दशसंख्या प्रकीर्तिता ॥ २४
अथापानभृतां वक्ष्ये प्राणभृद्वदथ क्रमात् ।
तत्रापानभृतां सङ्ख्या पुर आरभ्य कीर्तिता ॥ २५
अन्त्यास्तिस्रोऽथ पञ्चम्यां चतुर्थ्यां पञ्चमी तथा ।
तत्रैव सप्तमी षष्ठी तृतीयस्यां तुरीयका ॥ २६
तत्रैव पञ्चमी चापि द्वितीयस्यां द्वितीयका ।

---

२. उत्तरान्तगाः इति पाठा० ।

३. द्वितीयस्यां तृतीयादि इति पाठा० ।

तत्रैव च तृतीयापि अपानभृद्गण ईरितः ॥ २७

अन्त्यरीत्यामुपान्त्या च षष्ठ्यां षष्ठी तथैव च ।

पञ्चम्यां पञ्चमी चैव चतुर्थी च तुरीयका ॥ २८

तृतीयस्यां तुरीया च तथैवाद्यद्वितीययोः ।

द्वितीयादिचतुर्थ्यन्ताः पञ्चापानभृतां गणः ॥ २९

उदक्पक्षाद्यरीतिस्था षष्ठ्यामात्मनि चादिमा ।

पञ्चम्याद्या च तत्पश्चादर्ध्या चापि ततः परम् ॥ ३०

पुच्छद्वितीयरीतिस्थास्तिस्रः प्राणभृतामुदक् ।

षष्ठी च सप्तमी चैव अष्टमी चाद्यरीतिगाः ॥ ३१

तिस्रः षष्ठ्यां तथैवान्त्या मध्येऽपानभृतां गणे ।

पञ्चम्यां च तुरीयादि पञ्च तुर्याष्टमी[४] तथा ॥ ३२

तत्रैव नवमी चापि दशसङ्ख्या प्रकीर्तिताः ।

अथापानभृदन्ते स्यात्सन्तत्याद्यृषभावधि ॥ ३३

सन्ततीः पूर्वकस्तारे वशा अपि तथैव च ।

त्रिवृतश्चापि षण्मूर्ध्नि पक्षपुच्छाग्रशेषिताः ॥ ३४

एवं च शेषिताः पञ्च पूर्वस्मिन् शतमुत्तरे ।

एवं पञ्च शतं शिष्टाः कार्या लोकंपृणाः क्रमात् ॥ ३५

सन्ततीर्दक्षिणे पक्षे वशा उत्तर पक्षगाः ।

शिरोग्र्या दक्षपक्षाग्र्या सप्तम्याद्योत्तरच्छदे ॥ ३६

पक्षाग्रीया तथा षष्ठ्यां तृतीया चाद्यमध्यमा ।

त्रिवृतः षट् तथा षष्ठ्यां द्वितीया ऋषभेष्टका ॥ ३७

षोडश्यां मध्यमा पादा द्वितीयस्यां चतुर्थिका ।

तिस्रश्चोत्तरपक्षाग्र्याः पञ्च लोकंपृणा स्मृताः ॥ ३८

चितौ हिरण्यमित्यादि चितिशेषं समापयेत् ।

सुब्रह्मण्यावसाने तु श्वेतोऽश्वः परिणीयते ॥ ३९

---

४. तुर्यायामष्टमी इत्यर्थः ।

## ॥ अथ पञ्चमचितौ प्रथमः प्रस्तारः ॥

मध्यमाश्चितयः स्पष्टाः पञ्चमी चितिरुच्यते ।
प्राग्वदत्राप्यृतव्यान्तं नात्र तृण्णा विकर्ण्यपि ॥ ४०
पक्षयोर्विशये चाद्ये[५] द्वे द्वे तद्दक्षिणोत्तरे ।
रथन्तरबृहत्षट्कं चिह्नयेदुद्धरेच्च हि ॥ ४१
दक्षपक्षे द्वितीयाग्र्या तुरीयाग्र्या[६] तथैव च ।
आद्योपाद्ये च सप्तम्यां आद्याषष्ठी[७] तथैव च ॥ ४२
तृतीयाद्या च षष्ठ्यन्त्या सप्तम्यामप्युपान्तिमा[८] ।
उपान्तिमा तथाष्टम्यां सप्तम्यामन्तिमापि च ॥ ४३
उदक्पक्षे तथाग्र्यान्त्ये एवमेकादश स्मृताः ।
द्विषाहस्रे तु पूर्वस्मिन् प्रस्तारेऽनुष्टुबन्तकम् ॥ ४४
प्राग्वत्किञ्चिद्विशेषोऽत्र व्यत्यासो वक्ष्यतेऽत्र तु ।
अग्ने जातादिका मन्त्रा असपत्ना इति स्मृताः ॥ ४५
असपत्ना शिरोग्रस्था सप्तमी चाद्यरीतिगा ।
पक्षाग्रीये तृतीये च दशम्यां मध्यमापि च ॥ ४६
चतस्र आद्या द्वादश्यां पूर्वस्यामादितो द्वयम् ।
चतस्र आद्याः पूर्वस्यां विराजो दश पूर्वतः ॥ ४७
आद्याग्र्या चोत्तरा तत्र तत्पूर्वा तत उत्तरे ।
पूर्वा तदुत्तरा पूर्वाप्युत्तरे चेति दक्षिणाः ॥ ४८
पाद्याश्चतस्र आद्यायां पूर्वस्यां तिस्र आदितः ।
पूर्वस्यामुत्तमास्तिस्र इत्येता दश पश्चिमाः ॥ ४९
आद्याग्रीया च पूर्वस्यां चतस्रोग्र्यादि दक्षिणाः ।
तत्पूर्वा दक्षिणा पूर्वा दक्षिणे अपि चोत्तराः ॥ ५०
द्वादश्यां शेषितास्तोमाः पक्षयोश्च विराट्पराः ।

---

५. पक्षयोर्विशयोराद्ये इति पाठा० ।
६ द्वितीयाद्या तुरीयाद्या इति पाठा० ।
७. आद्यायां षष्ठी इत्यर्थः ।
८. उपादिमा इति पाठा० ।

आद्यायामुत्तरास्सप्त नवम्यां मध्यतस्त्रिकम् ॥ ५१
षोडश्यां मध्यमा चोडा द्वे च पक्षाग्रसन्निधौ ।
मध्यमे आदि सप्तम्योर्विकर्णी चोत्तमस्तरे ॥ ५२
सप्तम्यां मण्डला तुर्या रेतस्सिग्दक्षिणा ततः ।
तत्रैव नवमी ज्योतिरथर्तव्ये च यानिके ॥ ५३
एकादश्यां दशम्या च द्वितीये च चतुर्थके ।
वाङ्म आसन्नाश्वनीतिः श्वो न वाङ्मेऽधिरोहति ॥ ५४
गायत्र्यः शिरसि स्थाप्या विराजां त्रिष्टुभः पुरः ।
जगत्याख्या द्वितीयस्यां विराड्भ्यः प्रागनुष्टुभः ॥ ५५
दक्षिणात्मतिरश्चीने षोडश्यौ मध्यतः स्थिते ।
अप्ययाग्र्या तृतीया च त्रयोदश्यान्तिमे तथा ॥ ५६
अन्त्या चैव चतुर्दश्यां बृहत्युष्णिग्गणौ[९] स्मृतौ ।
पूर्वास्तिस्रोऽथ षोडश्य उत्तरात्मतिरोगताः ॥ ५७
तदुत्तराग्र्यास्तिस्रश्च पङ्क्त्यक्षरगणौ स्मृतौ ।
अतिच्छन्दास्तु पूर्वोक्ता अष्टम्यां मध्यतः स्थिता[१०] ॥ ५८
चतुर्थ्यां द्विपदाः प्रोक्ता वक्ष्यन्ते सयुगादयः ।
दक्षपक्षान्त्यरीतिस्थास्तिस्रः पक्ष्यास्तदुत्तरा[११]॥ ५९
अप्ययाग्र्या षोडशी च शिष्टा भूयस्कृतस्ततः[१२] ।
पक्षाप्यये द्वितीया च पक्ष्याषोडश चेष्टकाः ॥ ६०
तिस्रश्च पक्षमध्यीयाः सयुग्जीमूतकृत्तिकाः ।
षोडश्यां दक्षिणा पादा पौरस्त्ये पक्षयोर्द्वयोः ॥ ६१
आद्यायां पञ्चमी वृष्टिरष्टम्यामप्युपादिमा ।
उपान्त्यान्त्ये चतुर्थ्यां च पञ्चमीरीतिरेव च ॥ ६२

---

९. बृहत्यस्मिन् गणौ इति पाठा० ।
१०. अतिच्छन्दा सुपूर्वोक्ता चतुर्थ्यां द्विपदा तथा इति पाठा० ।
११. आद्या इति मूलपाठः पक्ष्या इति परिष्कृतः ।
१२. पञ्च भूयस्कृतः स्मृतः इति पाठा० ।

षष्ठ्यामाद्या तथादित्यसंज्ञका अष्ट चेष्टकाः ।
सप्तम्यां पञ्च सप्ताष्ट षष्ठ्या मध्यगते यशाः ॥ ६३
दक्षपक्षान्त्यरीतिस्थास्तिस्रः पक्ष्यास्तदुत्तरा[१३] ।
अप्ययाग्र्या षोडशी च पञ्च भूयस्कृतः स्मृताः ॥ ६४
अप्सुषदिति रूपाद्या ऋतव्यान्ताश्च शेषिताः ।
उदक्पक्षा समध्यीयाः त्रयोविंशतिरिष्टकाः ॥ ६५
अग्नेस्तु हृदयं विद्यादेकादश्यां तु मध्यमा ।
तथा च पूर्वके स्तारे शिष्टैकादश चेष्टकाः ॥ ६६
रथन्तरबृहथ्षट्कमवशिष्य च पूर्वके ।
एवं हित्वा सप्तदश कार्यः प्रस्तार उत्तरः ॥ ६७

## ॥ अथ पञ्चम्यां चितौ द्वितीयः प्रस्तारः ॥

प्रस्तार उत्तरे तूपशीवर्याद्युपधीयते ।
दक्षपक्षोत्तरे भागे शिष्ट्वा राष्ट्रभृतः पुरः ॥ ६८
पुरस्तादुपशीवर्यः पक्षे षोडश दक्षिणे ॥ ६९

अथेन्द्रनामानि दशोपदध्यात् पूर्वके स्तरे । *
दक्षपक्षे द्वितीयाग्र्या तुरीयाग्र्या[१४] तथैव च ॥
आद्योपाद्ये च सप्तम्यामाद्याषष्ठी[१५] तथैव च ।
तृतीयाद्या च षष्ठ्यन्त्या सप्तम्यामप्युपान्तिमा ।
उपान्तिमा तथाष्टम्यां सप्तम्यामन्तिमापि च ॥
एवं च पूर्वके स्तारे इन्द्रनामेष्टका दश ।

स्तरे द्वितीय इन्द्राणामुपधानं यदीष्यते । १६
विकल्पपक्षमाश्रित्य क्रमस्त्वेवं तदा भवेत् ॥

---

१३. आद्या इति मूलपाठः पक्ष्या इति परिष्कृतः । १४. द्वितीयाद्या तुरीयाद्या इति पाठा० ।
१५. आद्यायां षष्ठी इत्यर्थः ।
* उत्तरप्रस्तारोपधानक्रमे प्रकृते पूर्वप्रस्तारोपधानक्रमविषयत्वादेताः कारिका आवरणे दर्शिताः ।

पक्षे दक्षिणे पञ्चम्यामन्त्याः पञ्च क्रमेण वै । [१६]
उत्तरे रीतिपञ्चम्यां द्वितीया च तृतीयका ॥
तथैव षष्ठ्यां रीतौ च द्वितीया च तृतीयका ।
अन्तिमा त्विन्द्रनाम्नी या सप्तम्यां स्याद्द्वितीयका ॥
एवं द्वितीयके स्तार इन्द्रनामेष्टका दश ।
पक्षद्वये पृणानां या संख्या सान्ते निगद्यते ॥

अथोपशीवरीणां तु पश्चादिन्द्रतनूः स्मृताः ।
उदक्पक्षे चतस्रोऽन्त्याः सप्तरीतिष्वथाद्यका ॥ ७०
तद्दक्षिणाद्यरीतिस्था यज्ञतन्वः प्रकीर्तिताः ।
पाश्चात्यास्तत्र शिष्टासु ज्योतिष्मत्यः प्रकीर्तिताः ॥ ७१
त्रिंशन्नक्षत्रपर्वाणि रीत्योर्दक्षिणवामयोः ।
तत्र रीत्यां तृतीयस्यामर्ध्याद्या नव चात्मनि ॥ ७२
पुच्छेऽर्धेका च तिस्रोऽर्ध्याः षोडश्यौ द्वे प्रतीचिगाः ।
पुच्छादौ पञ्चमी चोदक्प्राक्तिस्रो विशया तथा ॥ ७३
आत्मरीत्यां चतुर्थ्यां च प्राचोऽर्ध्यान्त्या नवेष्टकाः ।
पञ्चम्याद्ये[१७] च षष्ठ्यर्ध्याः षडष्टौ सरिदिष्टकाः ॥ ७४
निधाय विश्वकर्मादि नव स्युस्स्वर्णशर्कराः ।
पञ्चम्यां तु तुरीयाद्या अह्नां रूपाणि पञ्च च ॥ ७५
अन्त्या चात्मनि चाद्यायां पक्षपुच्छेषु शेषिताः ।
मध्ये तृतीया पञ्चम्यां पञ्चैवात्मेष्टका व्रतम् ॥ ७६
वैश्वदेव्यो द्वितीयायां तुर्याद्याः पञ्च चात्मनि ।
आत्माद्यायां तुरीयाद्या वामदेव्याभिधं त्रिकम् ॥ ७७
आत्मन्येवान्तिगाश्शिष्टा दशाथर्वशिरोऽभिधाः ।
रथन्तरबृहथ्षट्कं पूर्वप्रस्तारचिह्नितम् ॥ ७८

---

१६. इन्द्रनाम्नामुपधानं द्वितीयप्रस्तारे विकल्पेन भवतीति कारिकान्ते सूचितम् । परं त्वस्योपधानक्रमो नैव पठितः । अतः पाठकसौकर्यार्थमस्माभिरेव एते श्लोकाः रचिताः ।

१७. पञ्चम्याद्या इति पाठ० ।

पक्षयोर्विशये आद्ये द्वे द्वे तद्दक्षिणोत्तरे ।
रथन्तरबृहथ्षट्कमुपधाय ततः परम् ॥ ७९
षोडशी विशया पुच्छे द्वितीयाद्या तथात्मनि ।
पुच्छद्वितीयतुर्या च यज्ञायज्ञियमिष्यते ॥ ८०
तुरीयान्त्या च ऋषभः षष्ठ्यामाद्या प्रजापतिः ।[१८]
सप्तम्यात्मनि चाद्यायां पक्षपुच्छेषु शेषिताः ॥ ८१
द्वितीयायां तृतीया च पञ्चाज्यान्यः प्रकीर्तिताः ।
अथात्मनः प्रतिदिशं वज्रिणीरुपधाय च ॥ ८२
लोकेष्टकाः पावमान्यः पुच्छे चात्मनि शेषिताः ।
छन्दस्या दक्षिणे पक्षे राष्ट्राः पक्षात्मनोः पुरः ॥ ८३
अग्नेर्भुवो जनस्य त्वामग्ने तमिति सर्वतः ।
सर्वतोमुखमन्त्रान्ते विकर्ण्यातृणया सह ॥ ८४
शिष्टास्त्रयोदशोदक्त्रयोविंशतिरेव वा ।
पूर्वत्रैकादशैव स्युः सर्वा लोकंपृणाः क्रमात् ॥ ८५
चितौ हिरण्यमित्यादि स्यादश्वनयनावधि ।
सर्वमन्यत्तु साहस्रे ह्युक्तमन्त्रात्तु गम्यताम् ॥ ८६

## ॥ इति प्राचीनकारिकासु अपरा द्विषाहस्रकारिकाः ॥



---

१८. तुरीयाद्या इति मूलपाठः तुरीयान्त्या इति परिष्कृतः । पूर्वमेव तत्र नक्षत्रेष्टकाया उपहितत्वात् ।

# ॥ अथ वासुदेवदीक्षितत्रिषाहस्रकारिकाः ॥

त्रिषाहस्रप्रयोगे तु प्रयोगक्रम उच्यते ।
द्वादशोपसदस्तत्र पञ्चैव चितयः क्रमात् ॥ १
प्रस्तारास्स्युः पञ्चदश व्यत्यासं चिनुयाच्च तान् ।
एकैकस्यां चितौ त्रींस्त्रीन् व्यत्यासं चिनुयाच्च तान् ॥ २
प्रस्तारद्वयमाद्येऽह्नि द्वितीयेऽहन्येक एव तु ।
एवं चतस्रश्चितयः कार्या एवाष्टभिर्दिनैः ॥ ३
पञ्चमी स्याच्चतुरहमथ मन्त्रोपधिक्रमः ।
त्रिषाहस्रे विभज्यैव त्रेधा मन्त्रान् यजुष्मतीः ॥ ४
विभागस्य क्रमः पूर्वं द्विषाहस्रे प्रकीर्तितः ।
विस्पष्टार्थं पुनरपि विभागक्रम उच्यते ॥ ५
एकचित्यर्थमन्त्रास्तु ये ये तांस्तान् विभज्य च ।
प्रतिप्रस्तारमेवैनान् आदावादौ प्रयोजयेत् ॥ ६
शिष्टा लोकंपृणाभिस्स्युरुपधेया यथाक्रमम् ।
यजुष्मतीभिः प्रस्तारः केवलाभिर्न चीयते ॥ ७
तथा लोकंपृणाभिर्न केवलाभिरिति स्थितिः ।
यः कश्चनापि प्रस्तार उभयीभिस्तु चीयते ॥ ८
अतः काश्चिद्यजुष्मत्यः काश्चिल्लोकंपृणा ध्रुवम् ।[1]
मन्त्रे विभज्यमानेऽंशे न्यूनो वा यदि वाधिकः ॥ ९
नैतावतात्र दोषस्स्याद्गणभेदभयादिह ।
एवं विचार्योपदध्यात्प्रस्तारस्तु यथाक्रमम् ॥ १०
अथास्या आदिमचितेर्विभागक्रम उच्यते ।
आक्रमणयाद्यपस्यान्तमाद्ये स्तारे निधाय च ॥ ११
एकान्नत्रिंशदधिकं शतं लोकंपृणाः क्षिपेत् ।

---

१. अतः काञ्चिद्यजुष्मत्यः काञ्चिल्लोकंपृणा ध्रुवम् इति मातृकापाठः ।

तूष्णीं पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ॥ १२

तूष्णीं पुरीषमध्यूहः दृढार्थं तद्विधीयते ।

तदानीमेवोपदध्यात्तु चितौ स्तारे द्वितीयके ॥ १३

ऋषीष्टकाश्शतं लोकंपृणा अत्रापि ताश्शतम् ।[२]

तूष्णीं पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ॥ १४

श्वो भूते तु द्वितीयेऽह्नि प्रस्तारे प्रथमे ततः[३]।

तस्यामेव चितौ प्राणभृदाद्या ऋषभान्तकाः[४] ॥ १५

षट्सप्ततिस्तथा लोकंपृणाश्चितिसमापनम् ।

गायत्र्याऽभिमृशेदग्निं नित्योऽश्वः परिणीयते ॥ १६

तृतीयेऽह्नि द्वितीयस्याश्चितौ स्तारे द्वितीयके[५]।

ध्रुवक्षितिस्सजूः प्राणं क्षिपेत्पञ्चदशेष्टकाः ॥ १७

पञ्चाशीतिश्शतं लोकंपृणास्तत्र मृदं क्षिपेत्[६] ।

तदानीमेव तस्यां तु चितौ प्रस्तार आदिमे[७]॥ १८

अपस्याद्या ऋतव्यान्ता उपदध्यान्नवेष्टकाः ।

शतद्वयं नवोनं तु क्षिपेल्लोकंपृणेष्टकाः ॥ १९

तूष्णीं पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ।

श्वो भूते तु चतुर्थेऽह्नि चितौ स्तारे द्वितीयके[८]॥ २०

तस्यां चितौ त्र्यविराद्या ऋषभान्ताश्च विंशतिः ।

अशीतिश्शतमत्रैव क्षिपेल्लोकंपृणेष्टकाः ॥ २१

चितौ हिरण्यमित्यादि त्रिष्टुभाभिमृशेच्चितिम् ।

पञ्चमेऽह्नि तृतीयस्यां चितौ प्रस्तार आदिमे ॥ २२

---

२. ऋषीष्टकाश्शतं चापि पृणाश्चापि शतं क्षिपेत् इति पाठा० ।

३. अयं तु प्रथमचितौ तृतीयप्रस्तारः । प्रस्तारे प्रथमे इत्युक्ते प्रथमप्रस्तारवत् शुल्बोपधानमित्यर्थः । एवमेवाग्रेऽपि ज्ञेयम् ।

४. ऋषभान्ततः इति K.M पाठः ।

५. अयं तु द्वितीयचितौ प्रथमप्रस्तारः । स्तारे द्वितीयके इत्युक्ते द्वितीयप्रस्तारवत् शुल्बोपधानमित्यर्थः । एवमेव अग्रेऽपि ज्ञेयम् ।

६. तत्र क्रमात् क्षिपेत् इति K.M पाठः ।

७. अयं द्वितीयचितौ द्वितीयप्रस्तारः ।

८. अयं द्वितीयचितौ तृतीयप्रस्तारः ।

षड्विंशतिर्मण्डलाद्या[९] ज्योतिर्मान्ताः पृणा अथ ।
शतं चतुस्सप्ततिश्च तदानीमेव तत्र तु ॥ २३
प्रस्तारे तु द्वितीये च षट्त्रिंशद्बृहतीः क्षिपेत् ।
चतुष्षष्टिशतं चापि क्षिपेल्लोकंपृणेष्टकाः ॥ २४
तूष्णी पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ।
तस्यां चितौ च षष्ठेऽह्नि प्रस्तारे प्रथमे पुनः[१०] ॥ २५
वालखिल्या वृषान्ताश्च त्रिसप्ततिशतं पृणाः ।
चितौ हिरण्यमित्यादि जगत्या अभिमर्शनम् ॥ २६
सप्तमेऽह्नि चतुर्थ्यां तु चितौ स्तारे द्वितीयके[११] ।
आशुरग्नेऽनुवाकाभ्यामष्टाविंशतिरिष्टकाः ॥ २७
द्विसप्ततिश्शतं लोकंपृणा अत्रोपधाय च ।
तदानीमेव तस्यान्तु चितौ प्रस्तार आदिमे[१२] ॥ २८
सँय्यान्यावप्यृतव्ये च चतस्र उपधाय च ।
शतं षण्णवतिं लोकंपृणास्तत्रोपधाय च ॥ २९
तूष्णीं पुरीषमध्यूह्य तूष्णीमेवावरुह्य च ।
अथाष्टमेऽह्नि तस्यान्तु चितौ स्तारे द्वितीयके[१३] ॥ ३०
सृष्टिव्युष्टिवृषान् क्षिप्त्वा शतं षट्षष्टिकाः पृणाः ।
चितौ हिरण्यमित्यादि अग्निमृष्टिरनुष्टुभा ॥ ३१
प्रस्तारा द्वादशगताश्चतस्रश्चितयस्तथा ।
उत्तमा तु चितिः कार्या चतुर्भिर्दिवसैरिह ॥ ३२
पञ्चम्यां तु चितौ स्तारे प्रथमे नवमेऽहनि ।
असपत्नादि सँय्यान्यावित्यन्ताशीतिरिष्ट च ॥ ३३
उपधाय द्वादशकं शतं लोकंपृणेष्टकाः ।

---

९. आयुर्मान्ताः इति पाठा० ।
१०. अयं तृतीयचितौ तृतीयप्रस्तारः ।
११. अयं चतुर्थचितौ प्रथमप्रस्तारः ।
१२. अयं चतुर्थचितौ द्वितीयप्रस्तारः ।
१३. अयं चतुर्थचितौ तृतीयप्रस्तारः ।

तूर्ष्णीं पुरीषमध्यूह्य तूष्णिमेवावरुह्य च ॥ ३४
दशमेऽहनि तस्यां तु चितौ स्तारे द्वितीयके ।
याज्ञसेन्याद्यृतव्यान्ता नवतिः पञ्च चेष्टकाः ॥ ३५
पञ्चोत्तरशतं लोकंपृणा अत्र स्तरे क्षिपेत् ।
तूर्ष्णीं पुरीषमध्यूह्य तूष्णिमेवावरुह्य च ॥ ३६
द्वौ प्रस्तारौ च नवमदशमाभ्यां विधाय च ।
एकादशद्वादशाभ्यामन्त्यं प्रस्तारमाचरेत् ॥ ३७
एकादशेऽह्नि तस्यान्तु चितौ प्रस्तार आदिमे ।
या देव्यसीष्टकेत्यादि ज्योतिष्मन्त्यन्तमत्र तु ॥ ३८
उपधाय त्रिणवर्तिं विरमेत्तदहः पुनः ।
द्वादशेऽहनि तत्रैव प्रस्तारे शेषपूरणम् ॥ ३९
पूर्णापश्चादुतेत्यादि विकर्ण्यन्तं[१४] शतं[१५] क्षिपेत् ।
सप्त लोकंपृणास्तत्रोपधाय चितिपूरणम् ॥ ४०
चितौ हिरण्यमित्यादि पङ्क्त्याग्निमभिमृश्य तु ।
एवमेवोपधातव्यमिति न्यायविदोऽब्रुवन् ॥ ४१
यद्यस्त्यन्यः प्रकारश्च विद्वद्भिः परिमृश्यताम् ।
त्रिषाहस्रचितौ रीतिर्वासुदेवाध्वरीरिता ॥ ४२

## ॥ इति वासुदेवदीक्षितत्रिषाहस्रकारिकाः समाप्ताः ॥



---

१४. विकर्ण्यन्ताः इति K.M पाठः ।

१५. यद्यपि श्लोके शतमिति मृन्मयीष्टकानां संख्योक्ता तथाप्यत्र नवनवतिरेव मृन्मयीरिष्टका भवन्ति । अत अष्टौ लोकंपृणा उपधेया इति भाति ।

# ॥ अपरास्त्रिषाहस्रकारिकाः ॥*

विनायकं नमस्कृत्य गुरून् वागीश्वरीमपि ।**
त्रिषाहस्र प्रयोगस्य कारिकादि वितन्यते ॥
त्रिः प्रस्तारास्त्रिषाहस्रे चितयः परिकीर्तिताः ।
तूष्णीं पुरीषं प्रस्तारे प्रस्तारे घट्टनार्थकम् ॥ १
चित्यन्ते तु समन्त्रं स्यादिति भाष्ये निरूपितम् ।
पुरीषान्तेति सूत्रेण पञ्चेत्यादिश्रुतेरपि ॥ २
अश्वालम्भस्तु चित्यादौ चित्यन्ते च विधीयते ।
चितेराद्यन्तयोरेव वाङ्म इत्यादिना जपः ॥ ३
तूष्णीमेवारोहावरोहणे इतरत्र तु ।
अनूपसदमेकैका चितिरन्त्या दिनद्वयम् ॥ ४
नास्ति शुल्बोपधानेऽत्र विशेषस्स्यात्सहस्रवत् ।
आद्यप्रस्तारवत् प्रस्ताराष्टकं स्यादयुग्मकम् ।
द्वितीयवत्तथैव स्याद्युग्मप्रस्तारसप्तकम् ॥ ५

## ॥ अथ प्रथमचितौ प्रथमप्रस्तारः ॥

प्रथमाया अथ चितेर्मन्त्रोपहितिरुच्यते ।
पञ्चम्यन्त्याक्रमण्याख्या त्वष्टम्यां मण्डलादिमा ॥ ६
तृतीयान्त्या चतुर्थ्यन्त्या अन्वारोहाभिधे मते ।
द्वादश्यां वामभृदाद्या यूनो रेतस्सिचावथ ॥ ७
नवम्याद्यादशम्याद्ये एकैव स्थविरस्य तु ।
एकादश्यामादिमा तु विश्वज्योतिः प्रकीर्तिता ॥ ८
अष्टम्यां च नवम्यां च सँय्यान्यावन्तिमे मते ।
षोडश्यौ पूर्वयो रीत्योर्ऋतव्याख्ये तदन्तिमे ॥ ९

---

* एतत्कारिकानुसारी पटो न दर्शितः ।

** कारिकाद्यवितन्यते इति मूलपाठः एवं परिष्कृतः ॥

द्वादश्युपादिमाषाढा तस्यामेवान्तिमे उभे ।
घर्मेष्टकाकुलायिन्यौ वक्ष्यते पुरुषाकृतिः ॥ १०
चतुर्दशीत्रयोदश्योराद्ये तत्पश्चिमावलौ ।
तृतीयां च चतुर्थीं च आत्मदक्षिणपार्श्वगाः ॥ ११
प्रागायताश्च षोडश्यः सप्तम्यां तिस्र एव च ।
द्वितीयाद्यास्तथा षष्ठ्यामाद्येति प्रथमो गणः ॥ १२
तृतीया च त्रयोदश्यां द्वादश्यां तिस्र एव च ।
पञ्चम्याद्याश्चतस्रश्च पृष्ठ्यारीतिगतास्तथा[1] ॥ १३
पाद्याश्चतस्रस्सप्तम्यां ताः पूर्वोपहितोत्तराः ।
इष्टकाभिर्द्वादशभिर्मध्यमः पौरुषो गणः ॥ १४
अन्त्या पाद्या चतुर्दश्यां त्रयोदश्यन्त्यषोडशी ।
अष्टमी नवमी चापि द्वादश्यामिष्टका द्वयम् ॥ १५
पृष्ठ्यारीतेरुत्तराश्च सप्तम्यां तिस्र एव च ।
अन्त्या षष्ठ्यामिति ज्ञेयस्तृतीयः पौरुषो गणः ॥ १६
षोडश्यां मध्यमा पाद्याऽपरतष्षोडशीयुगम् ।
अपरस्यां मध्यमा च त्रयोदश्यां तु षोडशी ॥ १७
द्वितीया चेति पञ्चामूरपस्याः पुरतस्स्थिताः ।
पक्षे दक्षिणतः पुच्छे तथा चोत्तरपक्षके ॥ १८
यथाकाममपस्स्यास्स्युरवकाशबहुत्वतः ।
कुम्भेष्टका अपस्यान्ते ये यज्ञमिति वा कृते ॥ १९
निदध्यादवकृष्यापि[2] परतस्तद्विरोधतः ।
नैवारचरुपर्यन्ते कृते लोकंपृणा मताः ॥ २०
एकोनत्रिंशत्परश्शतमिह लोकम्पृणा मताः ।

---

१. मध्यमपौरुषगणे पृष्ठ्यारीतिगता या प्रथमा सा पञ्चमी इष्टका भवति । तदाद्याश्चतस्र उपधेया इत्यर्थः । द्वादशीरीत्यनन्तरमत्र पञ्चम्या रीतेरसम्भवात् ।

२. अपकृष्यापि इत्येवार्थः ।

रेतस्सिचां वशाद्द्वाभ्यां एकया वोनतो[३] भवेत् ॥ २१

तूष्णीं पूरीषमध्यूह्य तूष्णीमेवावरुह्य च ।

अथ द्वितीयप्रस्तारे उपदध्यादृषीष्टका: ॥ २२

गणभेदो यथा न स्यात्स्यादुदक्प्राक्च विश्रम: ।

तथोपधाय च शतं शिष्टा लोकंपृणाश्शतम् ॥ २३

पुरीषमवरोहश्च तूष्णीं पूर्ववदत्र च ।

## ॥ अथ प्रथमचितौ तृतीय: प्रस्तार: ॥

### (प्राणापानभृतामुपधानम्)

प्रस्तारे च तृतीये स्यु: प्राणापानभृतश्शतम् ॥ २४

आद्याश्चतस्रो द्वादश्यां पूर्वस्यामादिमे उभे ।

तत्पूर्वयोरादिमे द्वे पञ्चदश्यां तथादिमा ॥[४] २५

षोडश्यामादिमा चेति पूर्वा: प्राणभृतो दश ।[५]

विंशाया दक्षिणे पक्षे पश्चिमा दक्षिणा तत: ॥ २६

तत्पूर्वा दक्षिणे तस्यास्तत्पूर्वा दक्षिणे तत: ।

मध्यीयायास्तु पूर्वस्या उत्तरत्रेष्टका द्वयम् ॥ २७

इत्येवं दक्षिणे पक्षे दश प्राणभृतो मता: ।

तुर्यरीतावादिमे द्वे तत्पश्चात् षोडशीयुगम् ॥ २८

पश्चाच्च षोडशी द्वन्द्वमपरस्यां चतुष्टयम् ।

इति पुच्छे दश प्राणभृतो ज्ञेया अथोत्तरे ॥ २९

तथैव स्यु: प्राणभृतो यथा दक्षिणपक्षगे ।

अष्टम्यां द्वे च षोडश्यौ द्वितीया च तृतीयका ॥ ३०

सप्तम्यां च द्वितीयाद्या पञ्च षष्ठ्यां तथादिमे ।

---

४. आद्यास्तिस्रश्च पूर्वस्यां पञ्चदश्यां तथादिमा इति पाठा० ।

५. षोडशी चेति विज्ञेया पूर्वा: प्राणभृतो दश इति पाठा० ।

३. एकयोनतो भवेत् इति पाठा० ।

पञ्चम्यामादिमा चेति मध्या प्राणभृतो दश ॥ ३१
षोडश्यामन्तिमा पाद्या पञ्चदश्यन्त्यषोडशी ।
चतुर्दश्यामन्ततो द्वे त्रयोदश्यन्तिमे उभे ॥ ३२
अन्त्याश्चतस्रो द्वादश्यामित्यपानभृतो दश ।
दक्षिणे पश्चिमं पत्रं पक्ष्या चैव तदुत्तरा ॥ ३३
पूर्वा तदुत्तरे पूर्वा तस्या उत्तरतो द्वयम् ।
तत्पूर्वे चेति विज्ञेया दश दक्षिणतस्स्थिता: ॥ ३४
अन्त्याश्चतस्र आद्यायां पूर्वस्यामन्ततो द्वयम् ।
तृतीयस्यामन्ततो द्वे चतुर्थ्यामन्ततो द्वयम् ॥ ३५
पुच्छस्था इति विज्ञेया दशापानभृतस्तथा ।
उत्तरश्चापानभृतो ज्ञेया दक्षिणपक्षवत् ॥ ३६
रीतित्रये चाष्टम्यादौ षोडश्यो दक्षिणाग्रका: ।
पृष्ठ्या दक्षिणपार्श्वस्थं द्वितीयादीष्टकात्रयम् ॥ ३७
पृष्ठ्यारीतौ तृतीया च चतुर्थी चापि षोडशी ।
द्वादश्यां सप्तमी पाद्या पृष्ठ्याया उत्तरत्र तु ॥ ३८
चतुर्थी षोडशी चेति विज्ञेया मध्यतस्स्थिता: ।
आद्यद्वितीयनवमास्त्रिपदास्स्युर्गणे गणे ॥ ३९
अन्ये षट् द्विपदा प्रोक्ता मन्त्रा: पञ्चपदोऽन्तिम: ।
प्राची दिशामित्यत्रापि गणमन्त्राश्च पूर्ववत् ॥ ४०
सर्वेऽपि द्विपदा मन्त्रा: षष्ठस्तु त्रिपदो भवेत् ।
विभक्ता इति विज्ञेया: प्राणापानभृतश्शतम् ॥ ४१
दक्षिणे स्युस्सन्ततय: प्राणापानभृदन्तरा ।
प्राणापानभृतां मध्ये वशा उत्तरपक्षगा: ॥ ४२
शिरोऽग्रीया पक्षयोस्तु द्वयोर्मध्यमपक्षके ।
सप्तम्यामादिमा पाद्या षष्ठ्यां चैव तृतीयका ॥ ४३

आद्यरीतावष्टमी च त्रिवृदाद्याषडिष्टकाः ।
अष्टम्यामृषभस्तुर्या विज्ञेया प्रथमा चितिः ॥ ४४

## ॥ मध्यमाश्चितयः ॥

अश्वालम्भपुरीषादि यथासूत्रं वितन्यते ।
चितेरथ द्वितीयस्याः प्रस्तारे प्रथमे मतः ॥ ४५
आश्विन्यश्च तथर्तव्याः पञ्च प्राणभृतोऽपि च ।
अपस्याः पञ्चोपदध्याच्छिष्टा लोकंपृणा इह ॥ ४६
सँय्यान्यौ च तथर्तव्ये प्रस्तारे पञ्चमे मताः[६] ।
शिष्टा लोकंपृणाषष्ठप्रस्तारे त्र्यविरादिकाः ॥ ४७
ऋषभान्ता पृणाश्शिष्टा द्वितीया चितिरीरिता ।
तृतीयस्याश्चितेरश्वालम्भनादि वितन्यते ॥ ४८
मण्डलान्ते विवयसः तिस्रो रेतस्सिचस्त्विह ।
विश्वज्योतिश्च सँय्यान्यौ चतस्रश्चाप्यृतव्यकाः ॥ ४९
राज्यसीत्यादि दिश्यास्स्युश्शिाष्टा लोकंपृणास्स्मृताः ।
अथाष्टमे तु प्रस्तारे दश प्राणभृतः पुरः ।। ५०
षट्त्रिंशतं च बृहतीरुपधेया यथाविधि ।
लोकंपृणाभिः प्रच्छाद्य नवमं प्रतिपद्यते ॥ ५१
वालखिल्याः पुरस्ताच्च पश्चाच्चाप्युपधाय तु ।
भूतेष्टका आत्ममध्ये ऋषभादि ततो भवेत् ॥ ५२
तुरीयायाश्चितेराद्ये प्रस्तारेऽश्वादिके कृते ।
आशुस्त्रिवृत्तथैवाग्नेर्भागोऽसीत्यनुवाकयोः ॥ ५३
एकं द्वावपि वा कृत्वा पृणाभिश्छादयेत्ततः ।
एकादशेऽथ प्रस्तारे सँय्यान्यादि विधीयते ॥ ५४

६. अपस्या अत्र विज्ञेयाः ततस्सँय्यान्यृतव्यके इति पाठा० ।

अग्नेर्भागोऽसीति वा स्यादृतव्यान्ते पृणा इह ।
प्रस्तारेऽथ द्वादशे स्युस्स्पृष्टयो व्युष्टयस्तथा ।
ईयुष्टे ये षोडशी स्यात्ततश्चितिसमापनम् ॥ ५५

## ॥ अथ पञ्चमी चितिः ॥

अथातः पञ्चमचितेर्मन्त्रोपहितिरुच्यते ।
असपत्नोपधानान्ते विराडन्तेऽथ वा पृणाः ॥* ५६
चतुर्दशेऽथ प्रस्तारे विराडादि वितन्यते ।
प्रागायता रीतयस्तु षडात्मनि खलु स्थिताः ॥ ५७
दक्षिणस्यां रीतिकायां पूर्वास्तिस्रस्तदुत्तराः ।
चतस्रोऽन्त्यास्तृतीयस्यां सप्तमी च तथाष्टमी ॥ ५८
चतुर्थ्यामिष्टमी चेति विराजः पूर्वगा दश ।
दक्षिणे पश्चिमात्पत्राादुत्तरैका ततः पुरः ॥ ५९
एका तदुत्तरा पूर्वा तत्पूर्वा तत उत्तरा ।
तत्पूर्वा पूर्विका तस्याः पक्ष्या चैव तदुत्तरा ॥ ६०
पक्ष्या तत्पूर्विका चेति विराजो दश दक्षिणाः ।
आद्यायामादितस्तिस्रो द्वितीयायां चतुष्टयम् ॥ ६१
तृतीयस्यामादितो द्वे दक्षिणा प्रत्यगग्रका ।
षोडशी चेति विज्ञेया विराजो दश पश्चिमाः ॥ ६२
विराज उत्तरे पक्षे ज्ञेया दक्षिणपक्षवत् ।
आत्मपञ्चमरीतौ तु चतस्रः पुरतस्स्थिताः ॥ ६३
षष्ठ्यामन्त्यास्तथा तिस्रस्स्तोमभागास्तु पूर्वगाः ।
दक्षपक्षोत्तरार्धे तु सप्त दक्षिणपार्श्वगाः[७] ॥ ६४

---

*. अस्यां कारिकायां द्वितीयप्रस्तारे विराडादीष्टकानामुपधाने यथाकारिकमेकस्यामेवेष्टकायां मन्त्रद्वयप्रयोगदोषो विद्यते इति मातृकालेखनानन्तरकालिनः तत्र तत्रानुपङ्क्तिलेखनेन दोषान्समीकृतवन्तः । ता अप्यनुलिखितपङ्क्तयः कारिकासु तत्र तत्र योजिताः । क्वचित्स्थानदोषपरिहाराय कारिका अस्माभिश्च परिष्कृताः ।

७. दक्षिणपार्श्वतः इति पाठा० ।

प्रागायतायां रीतौ स्युस्स्तोमभागास्तु दक्षिणाः ।
आदिमायाश्च तिस्रोऽन्त्या[८] द्वितीयस्यां तथा त्रयम् ॥ ६५
तृतीयस्यामन्ततस्स्यादेकैवं पश्चिमा मताः ।
पक्षे तथोत्तरे ज्ञेया दक्षिणार्धोत्तरान्तगाः ॥ ६६
पक्ष्यास्सप्त स्तोमभागा मताः प्रागपवर्गकाः ।
अष्टमी च द्वितीयस्यां रीत्योरुत्तरयोस्तथा ॥ ६७
पञ्चम्यौ चापि षोडश्यावेवं तिस्रस्तु मध्यमाः ।
शिरोऽग्रीया दक्षिणस्याः[९] पश्चादेकार्धिका स्थिता ॥ ६८
तथैवं दक्षिणे पक्षे पश्चिमात्पूर्वपत्रकम् ।
आद्यरीतौ चतुर्थी च पक्षे चैव तथोत्तरे ॥ ६९
पश्चिमात्पूर्वपत्रं च पञ्चम्यां च तथात्मनि ।
रीतावप्यष्टमीत्येवं चोडा नाकसदश्च ताः ॥ ७०
अत्रातृण्णां विकर्णीं च विहायैवोत्तराश्रिताः ।
शिरोऽग्रीया दक्षिणा च विज्ञेया मण्डलेष्टका ॥ ७१
प्रथमायामात्मरीतौ पश्चिमाग्रा तु षोडशी ।
रेतस्सिक् स्थविरस्यैका स्वराडित्युपधीयते ॥ ७२
उत्तरा स्याच्छिरोऽग्रीया विश्वज्योतिस्तु षोडशी ।
आत्मरीतौ तृतीयस्यां तृतीया च चतुर्थिका ॥ ७३
ऋतव्याख्येऽथ पञ्चम्यां चतुर्थी चैव पञ्चमी ।
सँय्यान्यावुपधायैते तूष्णीमेवावरोहति ॥ ७४
पुरीषमपि नैवात्र समिधो वासयेद्घृते ।
श्वो भूते याज्ञसेन्यादि कर्म तु प्रतिपद्यते ॥ ७५
आत्मरीतौ तृतीयस्यां चतुर्थ्यां चापि षष्ठिका ।
चतुर्थ्यां सप्तमी चेति गायत्र्यः पूर्वगा मताः ॥ ७६
विहाय पश्चिमं पत्रं विहायाप्युत्तरेष्टकाम् ।

---

८. अन्त्यास्तिस्रस्त्वादिमायां इति पाठा० ।    ९. शिरोऽग्र्या या दक्षिणस्याः इति पाठा० ।

तस्या उत्तरतो द्वन्द्वं उत्तरस्याश्च पूर्विका ॥ ७७
इत्येतास्त्रिष्टुभस्तिस्रो विज्ञेया अथ पश्चिमाः ।
प्रथमायां तथा रीतौ पञ्चमी च तथोर्ध्वयोः ॥ ७८
तृतीयस्यां तृतीया च जगत्यस्तिस्र ईरिताः ।
यथैव दक्षिणे पक्षे तथानुष्टुभ उत्तरे ॥ ७९
आत्मरीतौ तथाद्यायां तृतीयादीष्टकात्रयम् ।
तासामुत्तरतस्तिस्रो बृहत्यश्च तथोष्णिहः ॥ ८०
पञ्चम्यान्तु तृतीया स्यात्षष्ठ्यां चैव तथादिमे ।
ततः पुरस्तात्तिस्रश्च पङ्क्तयोऽक्षरपङ्क्तयः ॥ ८१
चतुर्थ्यान्तु तृतीया स्यादतिच्छन्दास्समाह्वया ।
द्वितीयस्यां द्वितीया च रीत्योरुत्तरयोस्तथा ॥ ८२
द्वितीये इष्टके चापि द्विपदास्तिस्र ईरिताः ।
पत्राणि वर्जयित्वा तु तथा दक्षिणपक्षके ॥ ८३
विराजां दक्षिणायां स्युस्ता अष्टौ सयुजस्स्मृताः ।
त्रिष्टुभाया उत्तरास्स्युः पञ्च जीमूतसंज्ञकाः ॥ ८४
दक्षिणस्तोमभागानामुत्तरास्सप्त कृत्तिकाः ।
शिरोऽग्रीया उत्तरस्याः पश्चादेकार्धिका स्थिता ॥ ८५
उपान्त्यं दक्षिणं पत्रं द्वितीयस्यामथादिमा ।
उपान्त्यं चोत्तरं पत्रं पञ्चम्यां चैव षष्ठिका ॥ ८६
इत्येवं वृष्टिसनयः पञ्चापि परिकीर्तिताः ।
कृत्तिकानामुत्तरतो ह्यवशिष्टाश्च यास्स्थिताः ॥ ८७
आदित्याख्या यशोदाश्च यथायोगं प्रकीर्तिताः ।
भूयस्कृतोऽग्निरूपाणि द्रविणोदास्तु पञ्च च ॥ ८८
आयुष्याश्चोत्तरे पक्षे यथायोगमिह स्मृताः ।
चतुर्थ्यां षोडशी तुर्या त्वग्नेर्हृदयमीरिता ॥ ८९

उत्तरासां विराजां तु यास्स्युरुत्तरतस्स्थिताः ।
यावा अयावा इत्यादि सप्त स्युस्ता ऋतव्यकाः ॥ ९०
यज्ञायज्ञियनाम्न्यस्तु परस्तात्सम्भविष्यतः ।
द्वे इष्टके* तु पञ्चम्यां तुरीयस्यामथादिमा ।
शिष्टा लोकंपृणास्तत्र ऊनविंशतिरिष्टकाः[१०] ॥ ९१

## विराजरहितः पक्षः –

चतुर्दशेऽथ प्रस्तारे स्तोमभागादि तन्यते ।
प्रागायता रीतयस्तु षडात्मनि खलु स्थिताः ॥
आत्मपञ्चमरीतौ तु चतस्रः पुरतस्स्थिताः ।
षष्ठ्यामन्त्यास्तथा तिस्रः स्तोमभागास्तु पूर्वगाः ॥
दक्षपक्षोत्तरार्धे तु सप्त दक्षिणपार्श्वगाः।
प्रागायतायां रीतौ स्युः स्तोमभागास्तु दक्षिणाः ॥
आद्यायामादिमास्तिस्रो द्वितीयस्यां तथा त्रयम् ।
आद्यैका च तृतीयस्यां स्तोमभागास्तु पश्चिमाः ॥
पक्षे तथोत्तरे ज्ञेया दक्षिणार्धोत्तरान्तगाः ।
पक्ष्यास्सप्त स्तोमभागा मताः प्रागपवर्गकाः ॥
अष्टमी च द्वितीयस्यां रीत्योरुत्तरयोस्तथा ।
पञ्चम्यौ चापि षोडश्यावेवं तिस्रस्तु मध्यमाः ॥
शिरोऽग्रीया दक्षिणस्याः पश्चादेकार्धिका स्थिता ।
तथैवं दक्षिणे पक्षे पश्चिमात्पूर्वपत्रकम् ॥
आद्यरीतौ सप्तमी च पक्षे चैव तथोत्तरे ।
पश्चिमात्पूर्वपत्रं च पञ्चम्यां च तथात्मनि ॥

---

* द्वे अर्धे इति मूले अनुपङ्क्तौ च प्रमादः पाठः ।

१०. अत्र 'विराडादिपक्षेऽत्रैव नवपञ्चाशदिह लोकम्पृणा मताः' इत्यनुपङ्क्तिर्विद्यते । त्रयोदशप्रस्तारे विराडिष्टकानामुपधानपक्षे चतुर्दशप्रस्तारे नवपञ्चाशल्लोकंपृणा भवन्तीत्यर्थः ।

रीतावप्यष्टमीत्येवं चोडा नाकसदश्च ताः ।
अत्रातृण्णां विकर्णीं च विहायैवोत्तरास्तु याः ॥
शिरोऽग्रीया दक्षिणा च विज्ञेया मण्डलेष्टका ।
प्रथमायामात्मरीतौ पश्चिमाग्रा तु षोडशी ॥
रेतस्सिक् स्थविरस्यैका स्वराडित्युपधीयते ।
उत्तरा स्याच्छिरोऽग्रीया विश्वज्योतिस्तु षोडशी ॥
आत्मरीतौ तृतीयस्यां तृतीया च चतुर्थिका ।
ऋतव्याख्येऽथ पञ्चम्यां चतुर्थी चैव पञ्चमी ॥
सँय्यान्यावुपधायैते तूष्णीमेवावरोहति ।
पुरीषमपि नैवात्र समिधो वासयेद्घृते ॥
श्वो भूते याज्ञसेन्यादि कर्म तु प्रतिपद्यते ।
आत्मरीतौ तृतीयस्यां चतुर्थ्यां चापि षष्ठिका ॥
चतुर्थ्यां सप्तमी चेति गायत्र्यः पूर्वगा मताः ।
विहाय पश्चिमं पत्रं विहायाप्युत्तरेष्टकाम् ॥
तस्या उत्तरतो द्वन्द्वं उत्तरस्याश्च पूर्विका ।
इत्येतास्त्रिष्टुभस्तिस्रो विज्ञेया अथ पश्चिमाः ॥
प्रथमायां तथा रीतौ चतुर्थी चापि पञ्चमी ।
द्वितीयायां पञ्चमी च जगत्यस्तिस्र ईरिताः ॥
यथैव दक्षिणे पक्षे तथानुष्टुभ उत्तरे ।
आत्मरीतौ तथाद्यायां तृतीयादीष्टकात्रयम् ॥
तासामुत्तरतस्तिस्रो बृहत्यश्च तथोष्णिहः ।
पञ्चम्यान्तु तृतीया स्यात्षष्ठ्यां चैव तथादिमे ॥
ततः पुरस्तात्तिस्रश्च पङ्क्तयोऽक्षरपङ्क्तयः ।
चतुर्थ्यान्तु तृतीया स्यादतिच्छन्दास्समाह्वया ॥
द्वितीयस्यां द्वितीया च रीत्योरुत्तरयोस्तथा ।
द्वितीये इष्टके चापि द्विपदास्तिस्र ईरिताः ॥

पत्राणि वर्जयित्वा तु तथा दक्षिणपक्षके ।
विराजां दक्षिणायां स्युः ता अष्टौ सयुजस्स्मृताः ॥
त्रिष्टुभाया उत्तरास्स्युः पञ्च जीमूतसंज्ञकाः ।
दक्षिणस्तोमभागानामुत्तरास्सप्त कृत्तिकाः ॥
शिरोऽग्रीया उत्तरस्याः पश्चादेकार्धिका स्थिता ।
उपान्त्यं दक्षिणं पत्रमाद्यरीतौ तु षष्ठिका ॥
उपान्त्यं चोत्तरं पत्रं पञ्चम्यां चैव षष्ठिका ।
इत्येवं वृष्टिसनयः पञ्चापि परिकीर्तिताः ॥
कृत्तिकानामुत्तरतो ह्यवशिष्टाश्च यास्स्थिताः ।
आदित्याख्या यशोदाश्च यथायोगं प्रकीर्तिताः ॥
भूयस्कृतोऽग्निरूपाणि द्रविणोदास्तु पञ्च च ।
आयुष्याश्चोत्तरे पक्षे यथायोगमिह स्मृताः ॥
चतुर्थ्यां षोडशी तुर्या त्वग्नेर्हृदयमीरिता ।
उत्तरासां विराजां तु यास्स्युरुत्तरतस्स्थिताः ॥
यावा अयावा इत्यादि सप्त स्युस्ता ऋतव्यकाः ।
यज्ञायज्ञियनाम्न्यस्तु परस्तात्सम्भविष्यतः ॥
इष्टकाः पुच्छवर्तिन्यस्तिस्रस्तस्यावशेषयेत् ।
द्वे अर्ध्ये तु द्वितीयस्यां षष्ठी चैवाथ सप्तमी ॥
प्रागग्रा षोडशी चैव विशयोत्तरपार्श्वगा ।
विज्ञेया इष्टकास्तिस्रो यज्ञायज्ञियसंज्ञकाः ॥
प्रस्तारे वै पञ्चदशे ततश्शुल्बोपधानके ।
पुच्छरीतौ तृतीयस्यां मध्यतष्षोडशीयुगम् ॥
तथैव पूर्वयोरीत्योस्तिस्रस्तिस्रस्तु मध्यगाः ।
इत्यष्टौ नोपधेयास्स्युः परस्तादुपधीयते[११] ॥

११. परस्तादुपधिर्मता इति पाठा० ।

शामित्रम्, चात्वालः, अवभृथीयम् एतेषु या इष्टकास्तासां करणिकाः । अध्यर्धोनपादिकाः अष्टादशाङ्गुलायमा नवाङ्गुलविस्तारा भवन्तीत्यर्थः ।

ब्राह्मणाच्छंसिधिष्ण्येष्टिकाकरणिकालक्षणमाह –

**ब्राह्मणाच्छंसिनो द्वेधा तिर्यङ्मानी दशाङ्गुला ।**
**अङ्गुल्यः पञ्चभागोनाः पार्श्वे प्रादेश एव तु ॥ १२**
**तिर्यङ्नवाङ्गुलं पार्श्वे सदशांशास्त्रयोदश ॥ १३**

ब्राह्मणाच्छंसिधिष्णियस्य द्वेधा द्विप्रकारौ इष्टकाकरण्यौ भवतः । एकस्याः करण्याः पार्श्वमान्यौ सप्तविंशतितिलाधिकनवाङ्गुलायामौ, तिर्यङ्मान्यौ द्वादशाङ्गुलविस्तारौ । अपरस्याः करण्याः पार्श्वमान्यौ सार्धत्रयतिलान्वितत्रयोदशाङ्गुलायामौ, तिर्यङ्मान्यौ नवाङ्गुलविस्तारौ । एतयोराद्यकरण्याः तिस्र इष्टकाः, द्वितीयस्या अष्टाविष्टकाः कार्याः ।

**एवं वा ब्रह्मशंसीये त्वष्टौ होत्रीय इष्टकाः ।**
**प्रादेशत्रयमन्यत्र त्वेवमेकादश स्मृताः ॥ १४**

एवं वा ब्राह्मणाच्छंसीये अष्टौ होत्रीय इष्टकाः । प्रादेशत्रयमन्यत्र त्वेवमेकादश स्मृता इति । होत्रीयधिष्ण्येष्टका अष्टौ । प्रादेशमात्र्यः तिस्रः । अथैनेन इष्टकास्वरूपकथनेनासां करणिकापि कथिता भवति ।

नैर्ऋतेष्टकामाह –

**यथा हि गार्हपत्यस्य नैर्ऋत्या इष्टका स्मृता ॥ १५**

इति । यथा गार्हपत्यस्य करणिका एवमत्रापि करणिका । नैर्ऋतीष्टकाया आयामविस्तारौ गार्हपत्येष्टकया समानौ ।

**अध्यर्धातृतीयप्रमिते च पार्श्वे**
**षष्टिश्च सा त्र्यश्रिरणूकसंज्ञा ।**

अणूका द्विविधा । तत्रैकस्या लक्षणमाह –

अध्यर्धातृतीयप्रमिते अध्यर्धायाः तृतीया अध्यर्धातृतीया । तया प्रमिते अध्यर्धातृतीयप्रमिते । अर्धेष्टकैव अध्यर्धा इत्युच्यते । सा त्रिभिः करणिकाभिर्निष्पाद्यते । द्वे त्रिंशदङ्गुलपरिमिते एका चतुर्दशतिलाधिक-द्विचत्वारिंशदङ्गुला च । अध्यर्धायाः चतुर्दशतिलाधिक-द्विचत्वारिंशदङ्गुलाभिर्मिता करणी अत्र अध्यर्धातृतीया इत्युच्यते । तया अध्यर्धातृतीयया प्रमिते पार्श्वे पार्श्वकरण्यौ । तिर्यक्करणी षष्टिरङ्गुला । सा एषा त्र्यश्रिः

त्रिभिरश्रिभिर्युक्ता त्रिकोणाकारा इति यावत् । अणूकसंज्ञा अणूकाख्या इष्टका ।

अपरस्या अणूकाया लक्षणमाह –

**अर्ध्यातृतीयप्रमिते च पार्श्वे**
**त्रिंशत्तिरश्च्यावियमप्यणूका ॥ १६**

अर्ध्यातृतीयप्रमिते च पार्श्वे – गतम् । त्रिंशत्तिरश्च्यौ तिर्यक्करण्यौ त्रिंशदङ्गुले, इयमपि एषापि अणूका अणूकाख्या इष्टका । एषा तु चतुरश्रा भवति ।

**अस्या एकाक्ष्णयारज्जुः त्रिंशदङ्गुलसंमिता ।**
**अपरा सप्तषष्टिः स्यात् तिलैर्युक्ता त्रिपञ्चकैः ॥ १७**

अस्याः चतुरश्राकाराया अणूकायाः, एकाक्ष्णयारज्जुः कर्णरज्जुः, त्रिंशदङ्गुलसम्मिता त्रिंशदङ्गुलप्रमाणा । अपरा कर्णरज्जुः त्रिपञ्चकैः पञ्चदशभिः तिलैर्युक्ता सप्तषष्टिरङ्गुलयः स्यात् ।

एतत् करणीद्वयं सुन्दरराजेन 'पक्षनमन्यास्सप्तमेन फलकानि नमयेत्' (आप.शुल्ब.१९–२५) इत्यस्य सूत्रस्य व्याख्यानावसरे उक्तम् ॥

**सार्धं शतं कारयेत् षोडशीना –**
**मर्ध्याश्शतं चापि चतस्र इष्टकाः ।**
**पाद्याश्शतं सप्ततिरेकयुक्ताः**
**पक्ष्यास्तु षट्षष्टिचतुश्शती स्यात् ॥ १८**

पञ्चाशदुत्तरशतं (१५०) षोडशीष्टकाः, चतुरधिकशतं (१०४) अर्धेष्टकाः, एकसप्तत्युत्तरशतं (१७१) पादेष्टकाः, षट्षष्ट्युत्तरचतुश्शतानि (४६६) पक्षेष्टकाः कार्याः ।

**त्रिरष्टसंख्या अपि पक्षमध्याः**
**पक्षाग्रसंज्ञाश्च षडष्टसंख्याः ।**
**नव त्रयस्त्रिंशदणूकसंज्ञा –**
**श्चोडान्विताः पञ्चसहस्रमेताः ॥ १९**

पक्षमध्याश्चतुर्विंशतिः (२४) । पक्षाग्रीया अष्टाचत्वारिंशत् (४८) । प्रथमाणूकसंज्ञा नव (९) ।

द्वितीयाणूकसंज्ञास्त्रयस्त्रिंशत् (३३)। अत्रैव पञ्चचोडानां पञ्चेष्टकाः संहत्य पञ्चोत्तरसहस्रं (१००५) इष्टका भवन्ति ।

**षट्पादा नाकसच्चोडाश्चतस्रः पक्षसंज्ञिकाः ।**

पञ्चसु नाकसत्सु पञ्चसु चोडासु च तिस्रस्तिस्रः पादेष्टकाः द्वे द्वे पक्षेष्टके । एतासामिष्टकाना-मुत्सेधस्तु इतरेष्टकोत्सेधस्य अर्धपरिमितः ।

**अर्ध्ये पादे षट्कर्णे चतस्रः पादसंज्ञिकाः ॥** २०

अर्थो नावगतः ॥

**द्वाविंशतिश्च त्रिंशौ च मण्डलायां चतुस्समाः ।**
**प्रध्यन्ते तावदेकैकं दशहीनमथापरम् ॥** २१
**तृतीयं वक्रमिष्टं स्यात्ततोऽन्यः सप्तविंशतिः ।**
**प्रध्यन्तवत्प्रधेर्मध्यं द्वितीये द्वे तु कल्पयेत् ॥** २२

एतौ श्लोकौ क्लिष्टार्थौ सूत्रतद्व्याख्याविरुद्धौ चाभाति । अतः परिमण्डलस्य गार्हपत्यचितेः करणानि सूत्रतद्व्याख्यानुसारेणोच्यते । मण्डलाकारायां गार्हपत्यचितौ यावत्प्रमाणं चतुरश्रं कर्तुं शक्यं तावल्लिखेत् । समपरिणाहं चतुर्धाविभज्यावान्तरदिक्षु लक्षणं कृत्वा तेषु स्रक्तयो यथा भवन्ति तथा चतुरश्रमालिखेत् । एवं कृते मण्डलमध्ये समचतुरश्रमेकं तत्पार्श्वेषु चत्वारि धनुराकाराणि क्षेत्राणि भवन्ति । तानि प्रधय इत्युच्यन्ते । प्रधिर्नाम रथचक्रावयवः । प्रधीयते प्रधाव्यते वा अनेनेति प्रधिः । तत्सारूप्यान्मण्डलावयवा अपि प्रधय इत्युच्यन्ते । तच्चतुरश्रं नवधा विभजेत् । एकस्य प्रमाणेन समचतुरश्रं करणं कारयेत् । तत्रैकैकं करणं समचतुरश्रं द्वाविंशत्यङ्गुलं सैकविंशतितिलम् । प्रधिं त्वेकैकं त्रैधं विभजेत् । प्रधिमध्यस्य पार्श्वमान्याः प्रमाणं समचतुरश्रप्रमाणमेव । तिर्यङ्मान्यौ दशतिलोनत्रयोदशाङ्गुले । एकं पार्श्वफलकं धनुराकारं तिलाभ्यां युक्तमरत्निमात्रम् । प्रध्यन्तयोः पार्श्वमान्याः प्रमाणं समचतुरश्रप्रमाणमेव । तिर्यङ्मान्याः दशतिलोनत्रयोदशाङ्गुलम् । वक्रं करणमष्टाभिस्तिलैरूनं सप्तविंशत्यङ्गुलम् । *(कपर्दिव्याख्यानुसारणैतानि करणान्युक्तानि । करविन्दमतेन त्वन्यथा भवन्ति । तानि तत एव ज्ञेयानि । ग्रन्थविस्तरभयान्नैवोच्यते ।)*

## ॥ इति प्राचीनकारिकासु इष्टकाकरणिकारिकाणां व्याख्या ॥

# Construction of moulds for the bricks as per the Prāchina Karikās.

Here in áfter, the verses (given on page.225) on the construction of the moulds for the bricks to be piled up in the 'Second Śyenacit' for the Agni of seven and half vidha are explained.

**Verse - 1**

Eight types of bricks have to be baked for the second Śyenacit. The six bricks named Ṣoḍaśi etc are well known. In addition to these, two kinds of bricks named Aṇuka have to be made. In the alternative, only six bricks may be made as prescribed in the Sutras.

Now, the moulds are explained. The moulds are of six kinds. Ṣoḍaśi, Ardha, Pāda, Paksha, Paksha-Madhyiya and Pakshāgra. In the case of eight bricks, there are two additional moulds called Aṇuka.

It is seen that the performers of the second Śyenacit generally use six bricks only as prescribed by the Sutras. Here the moulds for the respective bricks are named identical to the form of bricks - like the mould for Ṣoḍaśi is called Ṣoḍaśi etc.

**Verse - 2**

The dimensions of the Ṣoḍaśi are told here. One of the sides measure three padas, that is, forty five Angulas long. This is on account of adoption of the scale of fifteen Angulas for a pada. The other side parallel to the forty five Angula side is fifteen Angulas long. The width on one side which connects the two parallel planks of forty five Angulas and fifteen Angulas is thirty Angulas. The oblique side which connects the other ends of the forty five Angula plank and the fifteen Angula plank will measure – forty two Angulas and fourteen Tilas. The height of the planks should be six Angulas. Height (thickness of the brick) of this dimension is told by Sundararajan the commentator on the

Apasthamba Śulba Sutras (Ap.Sul. IX.19). According to Kapardin and Karavinda the thickness is six Angulas and thirteen Tilas. First place the plank of thirty Angulas on the east; to its south place forty five Angulas plank and to the north fifteen Angulas plank. The plank measuring forty two Angulas and fourteen Tilas will be placed oblique westwards connecting the tips of the forty five Angula plank and the fifteen Angula plank.

### Verse - 3

(Two kinds of Śyenacit have been told in the Sutras. Presently the Śyenacit of the second kind is dealt with). The brick called Caturti used in the first kind of Śyenacit is called the Ṣoḍaśi here. Similarly what was called the Navami, in the first kind, the same is called Pādya/Pāda here.

The mould for Ardhya is a triangle, two sides of which measure thirty Angulas and the third side measures forty two Angulas and fourteen Tilas.

### Verse - 4.

The dimensions of the Pāda are thus - two planks measure twenty one Angulas and seven Tilas. The third plank measures thirty Angulas. This triangle formation is the mould for the Pāda brick.

### Verse – 5, 6

The dimensions of the mould for the Pakshya / Paksha bricks (bricks for the wings) are:

The two lengthwise sides measure thirty Angulas and the two breadth wise sides which are slanted, measure seventeen Angulas and five Tilas. The longer diagonal will measure forty Angulas and twelve Tilas and the shorter diagonal will measure twenty seven Angulas and twenty Tilas respectively.

### Verse – 7

The length of the wing is two hundred and seventeen and a half Angulas. Half of that is one hundred and eight and three quarter Angulas. One seventh of

that is fifteen Angulas and eighteen Tilas. The horizontal sides will be fifteen Angulas and eighteen Tilas. These two sides should be elongated slantingly in such a way that they measure seventeen Angulas and five Tilas. The slanting elongation is done in the following way – take a rope longer than the length of the diagonal of the Paksha brick. Tie one end of the rope to one corner of the plank and pull the rope towards the diagonally opposite corner till the diagonal of the specified measure is obtained. By this, one of the diagonals will become longer and the horizontal side will also be slanted and elongated.

The Paksha bricks are of two kinds – one is elongated towards north-east and the other is elongated towards south east. When the north-west corner and the south-east corner are brought closer to each other, the Paksha brick elongated towards north-east is obtained. Similarly when the south-west and the north-east corners are brought closer, the Paksha brick elongated towards south-east is obtained.

## Verse - 8

Now is told the dimension for the Paksha-madhyiya / Paksha-madhya (bricks at the central curvature of the wing). Paksha-madhya is a hexagon. This is done by placing together two Paksha moulds, the dimensions of which have been told here in before. First place one mould which is elongated towards the south-east and to the right of that place another mould which is elongated towards the north-east, joining each other. Remove the two mid planks. The form obtained by this is the Paksha-madhya that is the bricks at the centre of the wings.

## Verse - 9

The dimensions for the mould for Pakshāgra (bricks at the tip of the wings) are:

Take one Paksha mould which is elongated towards south-east and place one Ardhya to its north touching the Paksha. This is 'Pakshāgra', that is, tip of the wing. The method of joining the two moulds is told in the third half of the

verse. One side of the Ardhya which measures thirty Angulas should be placed horizontally westwards. The joining is done by the removal of the planks in between. Since the northern side of the Paksha measures thirty Angulas and the other vertical side of the Ardhya placed next to it also measures thirty Angulas, the joining of the two bricks will match perfectly without any over lapping or gap in between. The third side of the Ardhya measuring forty two Angulas and fourteen Tilas will run diagonally downwards from east to north-west from the side of the Paksha brick at the north.

This is the method for the bricks at the tip of the northern wing. In respect of the bricks at the tip of southern wing the same method is adopted by placing the Paksha brick which is elongated towards the north-east at the southern end of the wing. The Ardhya is joined to the south of Paksha brick. This is the Pakshāgra (tip of the wing).

### Verse - 10

Now, the dimensions for the mould for the bricks used in the construction of the Gārhapatya are told. The bricks for the Gārhpatya will be thirty two Angulas long and thirteen Angulas and twenty five Tilas broad. Thus Gārhapatya brick is a rectangle. In the Sāhasra Cayana one hundred and five bricks have to be made and three Nairṛti bricks have to be made.

### Verse - 11

The mould for the bricks of Āgnidhriya Dhiṣṇiya will be a square measuring one Prādesha that is twelve Angulas. The mould for the bricks of Hotṛ Dhiṣṇiya will be a rectangle of a Prādesha long that is twelve Angulas long and nine Angulas broad.

The mould for the Mārjāliya Dhiṣṇiyas will be a rectangle of eighteen Angulas long and twelve Angulas broad. The mould for the rest of the Dhiṣṇiyas – Brahmasadanam , Praśāstriya , Potṛ , Neṣṭṛ , Acchāvāka, Śāmitra, Cātwāla and Avabṛtha will be a rectangle of eighteen Angulas long and nine Angulas broad.

**Verse – 12 to 14**

The moulds for the Brahmaṇācchamsi Dhiṣṇiyas are made in two ways. As per the first way, two rectangular moulds of different dimensions are made where the length of one mould will be twelve Angulas and the breadth will be nine Angulas and twenty seven tilas. The other mould will be nine Angulas long and thirteen Angulas and three and a half tilas wide. Of these two moulds three bricks have to be made with the first mould and eight bricks have to be made with the second mould.

Verse 14 gives an alternative for the Dhiṣṇiya of Brāhmaṇācchamsi.

Eight bricks will be of the same dimension as that of the Hotṛ Dhiṣṇiya and three bricks will be a square of one Prādesha (twelve Angulas) each.

**Verse – 15**

The Nairṛita brick will be of the same dimension as that of the Gārhapatya brick.

**Verse – 16**

Now are told the dimensions for Aṇūka. Aṇūka is of two kinds, one a triangle and the other a quadrangle.

The mould for the first kind of Aṇūka brick consists of three planks, two of which measure thirty Angulas and the third measures forty two Angulas and fourteen Tilas. The plank which measures forty two Angulas and fourteen Tilas is called the Ardhya tṛtiya pramita, that is, the same measurement as that of the third side of the Ardhya. Two planks of this measurement will be the two sides of this Aṇūka mould. The third horizontal side will measure sixty Angulas. Thus the brick called Aṇūka is triangular in form.

The other Aṇūka is a quadrangle where the horizontal sides measure thirty Angulas and the vertical sides measure the same as the third side of the Ardhya that is, forty two Angulas and fourteen Tilas.

**Verse – 17**

One of the diagonals of this quadrangular Aṇūka is thirty Angulas long and the other sixty seven Angulas and fifteen Tilas long.

The moulds for these two Aṇūka bricks have been told by Sundararajan while explaining the Apas. Śulba Sutra XIX-25.

**Verse – 18**

One hundred and fifty numbers of Ṣoḍaśi bricks, one hundred and four Ardhya bricks, one hundred seventy one Pādya bricks and four hundred and sixty six Paksha bricks have to be made.

**Verse – 19**

Twenty four Paksha-madhya bricks (at the centre of the wings), forty eight Pakshāgra bricks (at the tip of the wings), nine Aṇūka bricks of the first kind and thirty three Aṇūkas of the second kind have to be made. In addition to this five bricks called Panchachoda will have to be made. Thus the total aggregates to one thousand and five.

**Verse – 20**

The five nakasat and the five choda bricks will comprise of three each of Pāda bricks and two each of Paksha bricks. The thickness of these will be half the thickness of the other bricks.

**Verse – 21, 22**

The meaning of these two verses is not clear. It also appears that these two verses are not in accordance with the sutra and the commentaries thereon. Therefore, preparation of the mould for the circular Gārhapatya altar is told hereafter in accordance with the sutras and the commentaries thereon.

Draw a square of the maximum dimension within the circle for the Gārhapatya. For this purpose, divide the circumference into four equal parts

and mark four points on the circumference at south-east, south-west, north-west and north-east. (The points can be marked easily by drawing two diameters perpendicular to each other, one running from south-east to north-west and the other running from north-east to south-west). Now draw a square in such a way that the four points of the two diameters form the four corners of the square. By this, within the circle is obtained a square and on each of its side is obtained a segment having the form of a bow (space bound by an arc). Each such segment is called a Pradhi. Pradhi means a part of the chariot wheel. On account of the similarity in form, the segment of the circle is also called a Pradhi. Divide the square into nine equal parts.

Make a mould with the dimensions of one of the nine squares. Each side of the mould will measure twenty two Angulas and twenty one Tilas. Divide each of the Pradhis into three parts. (This is done by extending up to the circumference the lines which divide the square into nine parts). The side of the central division of the Pradhi measures the same as that of the side of one of the squares. The two sides will measure twelve Angulas and twenty four Tilas. The side plank which is of the bow form (arc) will measure one aratni, that is, twenty four Angulas and two Tilas. One side of each of the two side parts of the two adjacent Pradhis will measure the same as that of the side of one of the nine squares. Another side will measure twelve Angulas and twenty four Tilas. The curved plank will measure twenty four Angulas and twenty six Tilas.

-------------

# ॥ अथ प्राचीनकारिकासु वेदिमानकारिकाणां व्याख्या ॥

अथ द्वितीयश्येनचितः **सार्धसप्तविधाग्नेः** वेदिमानकारिकाः (२३० तमे पृष्ठे पठिताः) व्याख्यायन्ते। *(अस्य व्याख्यानस्य मातृकाग्रन्थ एक एव लब्धः । सोऽपि दोषबहुलः । अतोऽस्मद्वाक्यैः परिष्कृतः ।)*

**मीयते साग्निकी वेदिः प्रक्रमैस्त्रिंशदङ्गुलैः ॥**

त्रिंशदङ्गुलात्मक एकः प्रक्रमः इत्यनेन मानेन साग्निकी वेदिर्मीयते *(१ प्रक्रमः=३० अङ्गुलाः)*।

अथ प्रथमात् शङ्कोः *(महावेदेः पश्चिमप्रान्तशङ्कोः)* पुरस्तात् पृष्ठ्यायां निधेयानामुत्तरोत्तराणां शङ्कूनां व्यवधानमाह –

**तिथ्यर्धमास–रसषण्णवदृग्दशाथ**
**त्रित्रिस्वरेन्द्रियमथैकमुनीन्दु–षट्षट् ।**
**द्विद्वीन्द्रिय–द्विदशक–त्रिकवह्नि–सप्त**
**पञ्चैक–मुन्यृषि–वसु–द्विशराः क्रमेण ॥**

अत्र तिथ्यादयः संज्ञाः । तद्यथा – (२) तिथयः =१५, (३) अर्धमासः = २४, (४) रसाः = ६, (५) षट् = ६, (६) नव = ९, (७) दृशौ =२, (८) दश = १०, (९) त्रिः = ३, (१०) त्रिः = ३, (११) स्वराः = ७, (१२) इन्द्रियाणि = ५, (१३) एका = १, (१४) मुनि = ७, (१५) इन्दु = १, (१६) षट् =६, (१७) षट् = ६, (१८) द्वि = २, (१९) द्वि = २, (२०) इन्द्रियाणि = ५, (२१) द्वि = २, (२२) दश = १०, (२३) त्रिक = ३, (२४) वह्नि = ३, (२५) सप्त = ७, (२६) पञ्च = ५, (२७) एक = १, (२८) मुनि = ७, (२९) ऋषि = ७, (३०) वसु = ८, (३१) द्वे = २, (३२) शर = ५ (कंसे दत्ताः शङ्कूनामनुक्रमसंख्याः)

एवमुत्तरोत्तरं व्यवहिताः शङ्कवः पृष्ठ्यायां निधेयाः । प्रथमात् शङ्कोः द्वितीयशङ्कुः पञ्चदशदण्डैः व्यवहितः इत्यर्थः । एवमुत्तरेष्वपि ॥

अथ मानदण्डस्य परिमाणमाह –

**प्रादेशार्धेन संख्याय पृष्ठ्यायामिह शङ्कवः ।**

***प्रादेशार्धेनेति*** । षडङ्गुलपरिमितो मानदण्ड इत्यर्थः । ततः कर्तव्य इत्यर्थः ।

**अशीत्यामञ्छनं कुर्यात् षष्टिर्मध्यं तु पाशयोः ॥**

पृष्ठ्यापरिमित–उभयतःपाशा मानरज्जुः विधेया। सा रज्जुरशीत्युत्तरसहस्राङ्गुला भवति (30 X 36= 1080 अं)। तस्यां रज्ज्वाम् *अशीत्याम्* अर्धप्रादेशेन गुणिते (80 X 6= 480 अं) स्थाने *अञ्छनं* चिह्नं *कुर्यात्*। विमानकाले षष्ठ्यर्धप्रादेशवर्तीं (60 X 6= 360) अन्यामुभयतःपाशां रज्जुं कृत्वा विवक्षितशङ्क्वोरायतां प्रसार्य तस्या उभयतः पाशस्थानयोः पृष्ठ्याया *(अत्र सर्वत्र पृष्ठ्या इति पृष्ठ्यापरिमितरज्जुरुच्यते)* अन्तौ नियम्य अञ्छनमाकृष्य तत्स्थानानि कल्पयेदिति ॥

कानि तानि स्थानानीत्यपेक्षायामाह –

**प्रक्रमेणादितश्श्रोण्यौ द्वितीये पञ्चमे सदः।**
**अरत्निदशमास्तूदगरत्निद्वादशाः परे ॥**

अल्पीयसि भागे स्थितं पाशं प्रथमशङ्कौ निधाय, दीर्घभागे स्थितं पाशं षष्टिमानीयाया अन्ते नियम्य अञ्छनं दक्षिणत आकृष्य पञ्चदशप्रक्रमे शङ्कुः। एवमुत्तरतः। एते महावेदेः श्रोणी भवतः।

सदः परिमाणमाह – द्वितीयशङ्कौ पूर्ववत्पृष्ठ्यां निधाय दक्षिणत आकृष्य अरत्न्यधिकैकादशप्रक्रमे शङ्कुः। तथा उत्तरत आकृष्य अरत्न्यधिके नवप्रक्रमे शङ्कुः *(यद्यपि कारिकायां प्रथममुदीचीनमानमुक्त्वा पश्चात् दक्षिणमानमुक्तं तथापि याज्ञिकाः दक्षिणत एव प्रथमं मानं कुर्वन्ति। अत एवं व्याख्यातम्)*। एषा सदसः पश्चिममर्यादा। पञ्चमे पृष्ठ्यां निधाय पूर्ववत् कृत्वा दक्षिणतः उत्तरतश्च शङ्कुद्वयम्, एषा सदसः प्राङ्मर्यादा। एवं निर्मितं सदः स्पन्द्यया वेष्टयेत् ॥

अथ धिष्ण्यानां मानमाह –

**तृतीये च चतुर्थे च धिष्ण्या अङ्गुलिभिर्विमा।**
**अष्टादशसु होत्रीयं षड्विंशत्या च सञ्चरः ॥**
**षट्त्रिंशतिः प्रशास्त्रीयं सञ्चरो ब्रह्मसीदनम्।**
**एवमुत्तरतो धिष्ण्याश्चत्वारः सञ्चरा अपि ॥**

***तृतीये*** पूर्ववत् पृष्ठ्यां निधाय लक्षणेन दक्षिणापायम्य पृष्ठ्यास्थानस्य दक्षिणत अष्टादशाङ्गुले शङ्कुः। एषा होत्रीयस्य दक्षिणमर्यादा। एवमेव लक्षणेन उत्तरतोऽपायम्य पृष्ठ्यास्थानस्योत्तरतो–ऽष्टादशाङ्गुले शङ्कुः। एषा होत्रीयस्य उत्तरमर्यादा। होत्रीयाद्दक्षिणतः षड्विंशत्यङ्गुलपरिमितः

सञ्चरः । ततः **प्रशास्त्रीयं** मैत्रावरुणस्य धिष्ण्यः, ततः सञ्चरः, ततो ब्रह्मसदनम् । ततो ब्रह्मणो धिष्णियाद्दक्षिणतोऽष्टादशाङ्गुले शङ्कुः । एषा होत्रीयादिषण्णां धिष्ण्यानां वेष्टनमर्यादा । पृथक् पृथक् स्पन्द्यया धिष्ण्यान् वेष्टयेत् । होत्रीयादुदङ् ब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानां चत्वारो धिष्ण्याः । मध्ये मध्ये सञ्चरवन्तः उदगपवर्गाः । सर्वत्र षड्विंशत्यङ्गुलपरिमितः सञ्चरः । षट्त्रिंशदङ्गुला धिष्ण्या इति । एषा धिष्ण्यानां पश्चिममर्यादा । चतुर्थे पृष्ठ्यां निधाय दक्षिणत उत्तरतश्चापायम्य पूर्ववत् कुर्यात् । एषा धिष्ण्यानां पूर्वमर्यादा ॥

अथ आग्नीध्रमण्टपस्य मानमाह –

**षष्ठे पादोनवद्ध्रीयं अष्टमे दशमेऽप्यथ ।**
**अष्टादाशाङ्गुलोनेषु द्वादशस्वधिकेषु च ॥**
**ध्रीयलीयौ–**

**षष्ठे** शङ्कौ द्वादशे च पृष्ठ्यां निधाय आग्नीध्रमण्टपं कुर्यात् । मानन्तु प्रक्रमेण । एतदुक्तं भवति । अत्र पादोनवदिति सौमिकवेदिमानकारिकासूक्तस्य मानस्य परामर्शः । तत्र हि 'रुद्रेषु सप्तदशसु शङ्कू पादोनतेष्विह' इत्युक्तम् । षष्ठे पृष्ठ्यां निधाय पूर्ववत् उदङ्ङाकृष्य पादोनैकादशसु शङ्कुः । तस्य उत्तरतः पादोनसप्तदशसु शङ्कुः । द्वादशे पृष्ठ्यां निधाय पुर्ववत् शङ्कुः । ***अष्टमे दशमेऽप्यथ*** – अष्टमे पृष्ठ्यां निधाय उदङ्ङाकृष्य अष्टादशाङ्गुलोने द्वादशप्रक्रमे शङ्कुः । अष्टादशाङ्गुलाधिके द्वादशप्रक्रमे शङ्कुः । तथा दक्षिणत आकृष्य पूर्ववच्छङ्कुद्वयम् । एषा आग्नीध्रीयमार्जालीययोः पश्चिममर्यादा । दशमे पृष्ठ्यां निधाय उदङाकृष्य पूर्ववत् शङ्कुद्वयम् । एषा आग्नीध्रीयस्य धिष्णियस्य पूर्वमर्यादा । एवमेव दक्षिणत आकृष्य मार्जालीयम् ।

अथ हविर्धानस्य मानमाह –

**–हविर्धानं सप्तमेऽथ चतुर्दशे ।**
**प्रादेशोन चतुर्ष्विष्टं –**

सप्तमे शङ्कौ पृष्ठ्यां निधाय दक्षिणतोऽपायम्य अष्टादशाङ्गुलाधिके त्रिप्रक्रमे शङ्कुः । उदङ्ङपायम्य पूर्ववत् शङ्कुः । चतुर्दशे पृष्ठ्यां निधाय उभयतः पूर्ववत् शङ्कुद्वयम् । एवं निर्मितं हविर्धानमण्टपं स्पन्द्यया वेष्टयेत् ॥

अथ उत्करस्य मानमाह –

**– विंशे पूर्ववदुत्करः ॥**

पृष्ठ्यां व्यत्यस्य विंशे शङ्कौ निधाय उदङ्ङपायम्य चतुर्दशसु प्रक्रमेषु शङ्कुः । पूर्ववदिति **मनुषूत्करः** इति सौमिकोक्तस्य परामर्शः । इतः परं पृष्ठ्यां व्यत्यस्यैव सर्वत्र मानम् ॥

अथ शामित्रधिष्ण्यस्य मानमाह –

**पञ्चविंशे तथा सप्तविंशे शामित्रधिष्णियम् ।**
**अष्टादशाङ्गुलोनेषु षोडशस्वधिकेषु च ॥**

***पञ्चविंशे*** शङ्कौ पृष्ठ्यां निधाय उदङ्ङपायम्य ***अष्टादशाङ्गुलोनेषु षोडशसु*** प्रादेशाधिके पञ्चदशप्रक्रमे शङ्कुः । तस्य उत्तरतः षट्त्रिंशदङ्गुले शङ्कुः । ***सप्तविंशे*** पृष्ठ्यां निधाय पूर्ववत् शङ्कुद्वयम् । एवं निर्मितं ***शामित्रधिष्ण्यं*** स्पन्द्यया वेष्टयेत् ॥

**द्वितीये श्येनचिन्मानेऽन्त्येऽंसौ पूर्ववद्विमा ।**

द्वितीयश्येनचिन्माने शामित्रधिष्णियान्तं कृत्वा अन्त्ये पृष्ठ्यां निधाय दक्षिणतो द्वादशसु शङ्कुः । एवमुत्तरतः । एतौ महावेदेरंसौ भवतः । सर्वतः स्पन्द्यया वेष्टयेत् ।

### Commentary on the Vedi measurement Kārikas of the Prāchina Kārikas.

Hereinafter the verses on Vedi measurement (as given on page 230) for the second kind of Śyenacit for the Agni of seven and a half vidha, are explained.

**Verse - 1**

The Vedi inclusive of the Agni is measured adopting the scale of thirty Angulas for one Prakrama.

**Verse - 2**

Now is told the inter distance between the successive pegs which have to be struck along the Pṛṣṭhya commencing from the first peg struck at the midpoint of the western limit of the Mahāvedi. Here the words Tithi etc indicate numbers. The second peg is struck at a distance of fifteen prakramas to the east from the first peg; the third peg at a distance of twenty four prakramas from the second peg; the fourth peg at six from the preceding peg; fifth at six; sixth at nine; seventh at two; eighth at ten; ninth at three; tenth at three; eleventh at seven; twelfth at five; thirteenth at one; fourteenth at seven; fifteenth at one; sixteenth at six; seventeenth at six; eighteenth at two; nineteenth at two; twentieth at five; twenty first at two; twenty second at ten; twenty third at three; twenty fourth at three; twenty fifth at seven; twenty sixth at five; twenty seventh at one; twenty eighth at seven; twenty ninth at seven; thirtieth at eight; thirty first at two and thirty second at five prakramas from the respective preceding peg.

Thus the pegs have to be struck successively to the east along the Pṛṣṭhya.

**Verse - 3**

Now the measure of the measuring scale is told. The measuring scale is half a Prādesha long, that is, six Angulas long. The measurements here are to be done accordingly.

Take a rope equal to the length of Pṛṣṭhya looped at both the ends. That rope will measure one thousand and eighty Angulas (30Angulas x 36 Prakramas = 1080 Angulas). On that rope make a marking at eighty units, that is, at four hundred and eighty Angulas (80 x 6 Angulas). For measurements, take another rope looped at both ends, measuring sixty units, that is 360 Angulas (60 x 6 Angulas = 360 Angulas). This is called Ṣaṣṭhi mānya. Place this rope over the prescribed pegs along the Pṛṣṭhya. The two loops of the Pṛṣṭhya rope are placed along with the loops of the Ṣaṣṭhi mānya and the marking on the Pṛṣṭhya is stretched and the desired points are marked at the specified distances.

**Verse – 4**

The points to be marked are specified hereinafter –

The loop at the end of the shorter portion of the Pṛṣṭhya should be placed around the first peg along with the lower loop of the Ṣaṣṭhi mānya and the loop at the end of the longer portion is placed around the peg where the other loop of the Ṣaṣṭhi mānya is placed. Now stretch the marking on the Pṛṣṭhya rope to the right (towards south) so that the shorter portion becomes a horizontal line. Strike a peg (A) at fifteen prakramas. Similarly strike a peg (B) at fifteen prakramas to the north. (A) and (B) are called the Śroṇis of the Mahavedi.

The dimensions of the Sadas are thus – Place the lower loop of the Ṣaṣṭhi mānya and the loop at the shorter end of the Pṛṣṭhya around the second peg. Stretch the Ṣaṣṭhi mānya along the Pṛṣṭhya and place its other loop over the peg where the rope ends. Place the loop at the longer end of the Pṛṣṭhya rope along with this other loop of the Ṣaṣṭhi mānya. Stretch the marking on the Pṛṣṭhya rope towards south and strike a peg (C) at a distance of eleven Prakramas and one Aratni (twenty four Angulas). Similarly strike a peg (D) to the north at nine Prakramas and one Aratni. (In the Kārikas markings on the north is told first and then the south. But the ritualists do the markings in the south first and then in the north. Therefore here also the markings in the south are told first and then in the north). This (C-D) is the western boundary of the Sadas. Place the

Pṛṣṭhya on the fifth peg and strike a peg (E) on the south at eleven Prakramas and one Aratni and strike a peg (F) on the north at nine Prakramas and one Aratni. This (E-F) is the eastern boundary of the Sadas. The Sadas formed in this manner (C-D-E-F) may be surrounded with a rope.

**Verses - 5 and 6.**

Now the measurements for the Dhiṣṇiyas are told. The Pṛṣṭhya is laid around the third peg as was done earlier. Stretch the marking to the south and strike a peg (G) at eighteen Angulas to the right of Pṛṣṭhya. This is the southern boundary of the Hotriya. Similarly, stretch the marking towards north, strike a peg (H) at eighteen Angulas to the north of Pṛṣṭhya. This is the northern boundary of the Hotriya. To the south of the Hotriya a space of twenty six Angulas is left for movement. Thereafter, to the south is the Praśāstriya, the Dhiṣṇiya of Maitrāvaruṇa. Thereafter space for movement (twenty six Angulas) is left. Thereafter, is the Brahmasadanam. Strike a peg to the south of Brahmasadanam at eighteen Angulas. This peg is the limit for the rope that surrounds the six Dhiṣṇiyas viz. Hotriya etc. Each Dhiṣṇiya should be surrounded by a rope separately. To the north of the Hotriya are the four Dhiṣṇiyas of Brāhmaṇācchamsi, Potṛ, Neṣṭṛ and Acchāvāka in that order. Space of twenty six Angulas for movement should be left in between all the Dhiṣṇiyas. The Dhiṣṇiyas are squares of thirty six Angulas. These markings at the third peg are the western boundary of the Dhiṣṇiyas. Place the Pṛṣṭhya on the fourth peg and mark the points towards south and north as was done immediately before. This is the eastern boundary of the Dhiṣṇiyas.

**Verses 7 and 8**

Now the measurements for the Āgnidhra Manṭapa are told -

The Pṛṣṭhya is placed on the sixth peg and thereafter on the twelfth peg for the sake of Āgnidhra Manṭapa. Place the Pṛṣṭhya around the sixth peg as done earlier. Stretch the marking towards north and strike a peg (I) at ten and three fourth Prakrama. To the north of that peg strike another peg (J) at sixteen and three fourth Prakramas. Place the Pṛṣṭhya on the twelfth peg and strike two pegs

(K) and (L) to the north at ten and three fourth Prakramas and sixteen and three fourth Prakramas respectively. I-J-K-L will be the Āgnidhra Manṭapa.

Place the Pṛṣṭhya on the eighth peg. Stretch the marking towards the north; strike a peg at eleven Prakramas and twelve Angulas and another peg at twelve Prakramas and eighteen Angulas. Stretch the marking towards south and strike two pegs at eleven Prakramas and twelve Angulas and twelve Prakramas and eighteen Angulas respectively. These pegs form the western boundary of the Āgnidhriya and the Mārjāliya. Place the Pṛṣṭhya on the tenth peg; stretch the marking northwards and strike two pegs as done before. This is the eastern boundary of the Āgnidhriya Dhiṣṇiya. Stretch the marking to the south and strike two pegs as done before. This is the eastern boundary of the Mārjaliya.

Now the measurements for the Havirdhāna are told.

Place the Pṛṣṭhya on the seventh peg; stretch the marking towards right and strike a peg (M) at three Prakramas and eighteen Tilas. Stretch the marking northward and strike a peg (N) at three Prakramas and eighteen Tilas. Similarly placing the Pṛṣṭhya on the fourteenth peg strike two pegs (O) and (P) at three Prakramas and eighteen Tilas to the south and north respectively. Thus is formed the Havirdhāna Manṭapa (M-N-O-P). Surround the same with a rope.

Now the measurements for the Utkara are told.

Place the Pṛṣṭhya in the reverse on the twentieth peg; stretch the marking to the north and strike a peg at fourteen Prakramas. The Utkara is done in the same manner as is told in the context of Soma Yāga by the verse 'Manuṣūtkara'. Hereafter all the measurements are marked only by reversing the Pṛṣṭhya.

**Verse - 9**

Now the dimensions for the Śamitra Dhiṣṇiya are told –

Place the Pṛṣṭhya on the twenty fifth peg; stretch the marking northwards; strike a peg (Q) at fifteen Prakramas and twelve Angulas. To the

north of this strike another peg (R) at thirty six Angulas. Place the Pṛṣṭhya on the twenty seventh peg and strike a peg (S) as before at fifteen Prakramas and twelve Angulas and to the north of that at thirty six Angulas strike another peg (T). The Śamitra Dhiṣṇiya (Q-R-S-T) thus formed is to be surrounded by a rope.

**Verse-10**

After completing the construction up to the Śamitra Dhiṣṇiya as per the measurements for the second Śyenacit, place the Pṛṣṭhya on the last (thirty second) peg. Strike a peg (U) on the south at twelve Prakramas and another peg (V) at twelve Prakramas on the north. These two are the Amsas (shoulders) of the Mahavedi. Surround all around with a rope.

# परिमण्डलायाः गार्हपत्यचितेः इष्टकाकरणानि









# एकविधाग्नौ इष्टकाकरणानि

## पक्षेष्टका




## पक्षमध्यीया




## पक्षाग्रीया




## षोडशी




## अर्धेष्टका




## पादेष्टका



# द्विविधाग्नौ इष्टकाकरणानि

## पक्षेष्टका




## पक्षमध्यीया




## पक्षाग्रीया




## अर्धेष्टका




## षोडशी




## पादेष्टका



# त्रिविधाग्नौ इष्टकाकरणानि

## पक्षेष्टका




## पक्षमध्यीया




## पक्षाग्रीया



## षोडशी




## अर्धेष्टका




## पादेष्टका



# सार्धसप्तविधाग्नौ इष्टकाकरणानि

## पक्षेष्टका




## पक्षमध्यीया




## पक्षाग्रीया



## षोडशी




## अर्धेष्टका




## पादेष्टका



# सार्धाष्टविधाग्नौ इष्टकाकरणानि

## पक्षेष्टका




## पक्षमध्यीया



## पक्षाग्रीया




## षोडशी



## अर्धेष्टका




## पादेष्टका



# सार्धनवविधाग्नौ इष्टकाकरणानि

## पक्षेष्टका



# पक्षमध्यीया



# अर्धेष्टका



# पादेष्टका



# ॥ सम्भारकारिकाः ॥

सम्भाराग्नौ विमाने हरितकुशघृतं स्रुक्स्रुवौ लाङ्गलं च ।
पात्राण्युदकत्रिपञ्च ओषधिमनुतिलाद्युत्तरे वेदि सोमे ।
सिकताः शर्करा वै व्रतपयचमसाद्युक्तवद्याह्वनान्ते ।
कृष्णाश्वं श्वेतमश्वं अजिनकुशघृतं विश्वज्योत्यातृण्णांस्त्रीन् ॥ १
आक्रमण्येष्टकादि स्रुच घृत पुरुषं पुष्करं रुक्म स्रुच्यौ ।
आतृण्णा स्वर्ण दूर्वा दधिमधु पयोखा शङ्कवो कूर्म जालम् ।
अवकाः शूर्प सर्वौषधि शिरमुसलाद्युक्तवत्सम्भराणि ।
आद्यप्रश्नेव उक्ता उलूखलशकलाश्चैव सर्पो यजुः स्यात् ॥ २

## ॥ सम्भारकारिकाः ॥



# चयनसम्भाराः

अश्वाभिधानी, गर्दभाभिधानी।
उखा।
अषाढा।
औदुम्बर्यासन्दी।
नैर्ऋतीष्टका -3
वेणुदण्डः।
षड्गवयुक्तलाङ्गलम्।
स्वयमातृण्णा ः।
हिरण्मयः पुरुषः।
उलूखलम्।
मुसलम्।
पाटितः वेणुः।
दीर्घवंशः।
तिसृधन्वम् (त्रिभिरिषुभिर्युक्तं धनुः)
वसोर्धारास्रुक्
आसन्दी।
रथः।
वायव्यपशुरशना
वायव्ययूपरशना
वायव्ययूपस्वरुः
वायव्यपशुमैत्रावरुणदण्डः
वायव्यपशुकुम्भी
वायव्यपशुहृदयशूलम्
वायव्यपशुवपाश्रपण्यौ

वायव्यपशुयूपः
कृष्णाजिनानि
यवः
मृन्मयशरारवः
शूर्पः ह्रसीयः
शूर्पः वर्षीयः
शणकुलायः
वैकङ्कतसमिधः
औदुम्बरसमिधः
शमिसमिधः
आश्वत्थसमिधः
शकटः
लाङ्गलः
अनडुहः
ब्रह्मौदनस्थाली
घृतेष्टका
वज्रिणीः
हिरण्यशकलानि
अजापयः
लौकिकचरुश्रपण्यः कुम्भ्यः
मण्डूकः।
औदुम्बरः स्रुवः
दधि
मधु

सलोष्टो हरितो दूर्वास्तम्बः
समूलो हरितदर्भस्तम्भः
उदपात्राणि
शर्कराः
सिकताः
रुक्मसूत्रम्
औदुम्बरी स्रुक्
प्रादेशमात्रकाष्ठाः
अपरशुवृक्णः इध्मः
हिरण्येष्टकाः
पुष्करपर्णम् ।
कूर्मः ।
कुम्भाः ।
कुम्भ्यः ।
एकविंशतिनिर्बाधः रुक्मः ।
षडुद्यामशिक्यः द्वादशोद्यामशिक्यो वा
उभयतःक्ष्णूरभ्रिः ।
सप्त ग्राम्या ओषधयः ।
सप्तारण्या ओषधयः ।
गर्दभः ।

कृष्णोऽश्वः ।
श्वेतोऽश्वः ।
कार्ष्मर्यमयी स्रुक् ।
वैकङ्कती स्रुक् ।
अवका ।
शङ्कवः ।
अग्निमानरज्जुः ।
पशुशिरः ।
वेतसशाखा ।
कार्ष्णी उपानहौ ।
श्वेताश्मा ।
षोडशीष्टका ।
पादेष्टका ।
पक्षाग्रेष्टका ।
पक्षमध्येष्टका ।
पक्षेष्टका ।
अर्धेष्टका ।
गार्हपत्यचितीष्टका ।
धिष्ण्येष्टका ।

## इति आपस्तम्बीयश्रौतप्रयोगे उत्तरार्धे महाग्निचयनप्रयोगः

ओम् तत् सत्



(Contd... from front flap)

Ten are the Agnis which are piled up – eight Dhiśniyas, Āhavaniyas and Gārhapatya; therefore, Agni is called the Virāt; ten syllables constitute Virāt (chandas); all these are said to be but one, all these are the forms of Agni.

The one who performs the Agnicayana by knowing the reinstatement of Prajāpati in this manner and also the one meditates thus, he becomes one with the Samvatsara Prajāpati who has taken the form of the citi and attains all, in entirety.

### *Iṣṭaka (brick) - Derivation*

Prajāpati thought – 'I shall search out the self of mine (five animals) which was thrown into water'. He searched it out; He collected the water into which the watery ontent of the body of the (five) animals had settled; He also collected the soil into which the bones, flesh etc of the animals had settled. After collecting the water and the soil he made the Iṣṭaka (brick) out of them. Therefore these two - the soil and the water became the brick.

He thought – 'If I sanctify the self of mine which is in the form of the brick without baking it, then I shall become a mortal, nay a corpse, nay the one not devoid of sin; I shall bake it'; He baked it; He made that immortal; therefore the bricks are baked in fire and are immortal. Since He desired the brick after performance of the animal sacrifice (Iṣṭwa), the brick is called Iṣṭaka.

(Śatapatha Brāhmanam VI-2-9-,9.10)



सहस्रशीर्षा पुरुषः । सहस्राक्षस्सहस्रपात् ।
सभूमिंविश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ।

The Virat Purusha (Prajāpati) is the one with thousand heads, thousand eyes, thousand feet. He pervaded this universe from all sides and exceeded that by ten Angulas.

पुरुष एवेद९ सर्वम् । यद्भूतँय्यच्च भव्यम् ।
उतामृतत्वस्येशानः । यदन्नेनातिरोहति ।

All this is verily the Purusha; the past and the future are Purusha; since he does not get depleted even on account of being the food of all creatures.

एतावानस्य महिमा । अतो ज्याया९श्च पूरुष : ।
पादोस्य विश्वा भूतानि । त्रिपादस्यामृतन्दिवि ।

All this is his greatness; the Purusha is greater than all this; all the creatures are just a quarter of his; His immortal three quarters are in the heaven.

*Taittiriya Āraṇyaka III.12.32,33*